माध्यमिककक्षायाः पाठ्यक्रमः

# भारतीयदर्शनम् - २४७

## पुस्तकम् - १




**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**

A-२४-२५, Institutional Area, Sector – ६२

NOIDA – २०१ ३०९ (UP)

# माध्यमिककक्षा - भारतीयदर्शनम् (२४७)

## मन्त्रणामण्डलम्

**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यविषय-निर्मिति-समितिः

**समितेः अध्यक्षः**
**स्वामी आत्मप्रियानन्दः**
कुलपतिः
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**समितेः उपाध्यक्षः**
**डॉ. नागराजभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. रामनाथझा**
आचार्यः (संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**आचार्यः फूलचन्दः**
वैदिकगुरुकुलम्, पतञ्जलि-योगपीठम्, हरिद्वारम् (उत्तराखण्डः)

**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**श्रीमान् विवेक-कर्मकारः**
सहायकाध्यापकः (संस्कृतविभागः)
स्कटिश्-चर्च-महाविद्यालयः
कोलकाता - ७००००६ (प.वङ्गम्)

**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
इटाचुना, हुगली - ७१२१४७ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम् , नोएडा- २०१ ३०९

## पाठ्यक्रम-समन्वयकः

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम् , नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्


**डॉ. नागराजभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)


## पाठलेखकाः


**(पाठः १-४)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः ५-६, १५-२२)**
**डॉ. नागराजभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः ७-९)**
**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना, हुगली - ७१२१४७ (प.वङ्गम्)

**(पाठः १०-११)**
**श्रीमान् खोकन-भट्टाचार्यः**
सहायकप्राध्यापकः (संस्कृतविभागः)
श्रीगोपालब्यानार्जिमहाविद्यालयः
बागाटी, मगरा, हुगली - ७२११४८, पश्चिमवङ्गम्

**(पाठः १२, १३)**
**श्रीमान् विवेक-कर्मकारः**
सहायकाध्यापकः (संस्कृतविभागः)
स्कटिश्-चर्च-महाविद्यालयः
कोलकाता - ७००००६ (प.वङ्गम्)

**(पाठः १४)**
**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**(पाठः २३-२५)**
**स्वामी वेदार्थानन्दः**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)


## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च


**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन् , बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं भारतीयदर्शनस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

डॉ. चन्द्रभूषणशर्मा
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

भारतीयदर्शनस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्सति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥**
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्॥**
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी॥**

श्री संजय-कुमार-सिन्हा
निदेशकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्



## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य माध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

भारतीयदर्शनस्य प्रपञ्चः अति महान्। बहूनि दर्शनानि च सन्ति। मुख्यानां दर्शनानां संक्षेपेण परिचयः अस्मिन् पाठ्यकमे दीयते। तथापि कस्यापि एकस्य दर्शनं प्रक्रियापुरःसरम् अध्ययनं क्रमशः कर्तव्यम्। ततः अन्येषु अपि व्युत्पत्तिमान् भवति छात्रः इति विषयं मनसि निधाय अद्वैतवेदान्तदर्शनस्य विशिष्य परिचयः अस्मिन् पाठ्यविषये वर्तते।

माध्यमिककक्षायां प्रदत्तोऽयं भारतीयदर्शनम् इति विषयः अपि अत्यन्तम् उपकारकः वर्तते। छात्रः तस्य अध्ययनेन ज्ञानपीनः भविष्यति। उच्चतरमाध्यमिककक्षाया भारतीयदर्शनम् इति विषयस्य अध्ययनायापि अस्य अत्यन्तम् उपयोगिता वर्तते। एतत्सामग्री अद्वैतवेदान्तस्य सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः द्वयोः पुस्तकयोः कल्पितोऽस्ति। अस्य अध्ययनेन भारतीयदर्शनानां सामान्यपरिचयः अद्वैतवेदान्तस्य च मूलभूतं ज्ञानं छात्रस्य भवेत्।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकुटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥**

भवत्कल्याणकामी

राम-नारायण-मीणा
पाठ्यक्रमसमन्वयकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्



# पुस्तकम्- १


## दर्शनविद्याप्रस्थानपरिचयः

१. दर्शनस्य सामान्यपरिचयः

२. भारतीयविद्याविभागः

३. भारतीयविद्यापरिचयः-१

४. भारतीयविद्वापरिचयः-२

५. प्रस्थानत्रये श्रुतिप्रस्थानम्

६. प्रस्थानत्रये स्मृतिन्यायप्रस्थाने

## नास्तिकदर्शनानि

७. चार्वाकदर्शनम्

८. बौद्धदर्शनम्

९. आर्हतदर्शनम्

## आस्तिकदर्शनानि

१०. न्यायदर्शनम्

११. वैशेषिकदर्शनम्

१२. सांख्यदर्शनम्

१३. योगदर्शनम्

१४. मीमांसादर्शनम्

१५. वेदान्तदर्शनम्-१

१६. वेदान्तदर्शनम्-२


# पुस्तकम्- २


## अद्वैतवेदान्तः

१७. अनुबन्धचतुष्टयम्

१८. निर्गुणं ब्रह्म

१९. सगुणं ब्रह्म

२०. अज्ञानम्

२१. जीवः

२२. अध्यारोपापवादौ

२३. बहिरङ्गसाधनम्

२४. अन्तरङ्गसाधनम्

२५. मोक्षः

# भारतीयदर्शनम्

# माध्यमिककक्षा

## प्रथमं पर्व

क्रमः विषयसूची पृष्ठसंख्या

### दर्शनप्रस्थानपरिचयः


| क्रमः | विषयसूची | पृष्ठसंख्या |
|---|---|---|
| १. | दर्शनस्य सामान्यपरिचयः | १ |
| २. | भारतीयविद्याविभागः | ३२ |
| ३. | भारतीयविद्यापरिचयः-१ | ५४ |
| ४. | भारतीयविद्यापरिचयः-२ | ७६ |
| ५. | प्रस्थानत्रये श्रुतिप्रस्थानम् | १०० |
| ६. | प्रस्थानत्रये स्मृतिन्यायप्रस्थाने | ११९ |


### नास्तिकदर्शनानि


| | | |
|---|---|---|
| ७. | चार्वाकदर्शनम् | १३९ |
| ८. | बौद्धदर्शनम् | १५० |
| ९. | आर्हतदर्शनम् | १६३ |


### आस्तिकदर्शनानि


| | | |
|---|---|---|
| १०. | न्यायदर्शनम् | १७६ |
| ११. | वैशेषिकदर्शनम् | १९९ |
| १२. | सांख्यदर्शनम् | २२७ |
| १३. | योगदर्शनम् | २४४ |
| १४. | मीमांसादर्शनम् | २५९ |
| १५. | वेदान्तदर्शनम्-१ | २७७ |
| १६. | वेदान्तदर्शनम्-२ | २९४ |

१

# दर्शनस्य सामान्यपरिचयः

## प्रस्तावना

मनुष्यः बुद्धिमान् जन्तुः इति तस्य इतरेभ्यः जन्तुभ्यः विशेषता। तया विशेषतया मानवेन यत् सर्वोच्चं जीवनस्य लक्ष्यम् आविष्कृतं तत् दर्शनशब्देन व्यपदिश्यते। दर्शनेषु एव तत् सर्वं सुनिबद्धमस्ति। दर्शनमेव मानवानां संस्कृतेः सभ्यतायाश्च व्यवस्थापनस्य मूलम् अस्ति। महात्मभिः सद्भिः तथा संस्कृतिः उपदिष्टा आयोजिता व्यवस्थापिता च यया सर्वश्रेष्ठं जीवनलक्ष्यं सुसाध्यं स्यात्। सा एव सर्वश्रेष्ठा संस्कृतिः यया सर्वश्रेष्ठं लक्ष्यं सुलभं भवति। अतः दर्शनस्य मानवजीवने अत्यधिकः प्रभावः अस्ति।

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते इति गीतोक्तिः। इह लोके ज्ञानं पवित्रतायाः कारणं यथा अस्ति तथा अन्यत् किमपि नास्ति इति अस्य श्लोकांशस्य भावः। एतावान् महिमा ज्ञानस्य। तच्च ज्ञानं लौकिकमलौकिकं चेति द्वेधा। लौकिकज्ञानेन जीवनस्य निर्वाहो भवति। परन्तु मोक्षः न सिद्ध्यति। विद्ययाऽमृतमश्नुते इति अत्रोक्ता विद्या अलौकिकं ज्ञानम्। लौकिकज्ञानम् अपरा विद्या इति आचक्षते। मोक्षोपायभूता विद्या परा विद्या इत्याचक्षते। अथ परा यया तदक्षरमधिगम्यते इति मुण्डकोपनिषदि (१-१-६) आम्नातम्।

अतः दर्शनं किम् इति विषयमवलम्ब्य पाठोऽयं विरचितोऽस्ति। दर्शनेषु मतभेदाः अशान्तेः युद्धानां च कारणानि सन्तीति इतिहासे वर्तमानकाले च उदाहरणबाहुल्यमस्ति। अतोऽपि दर्शनाध्ययनम् अत्यन्तं गरिमाणम् आवहति।



## उद्देश्यानि

पाठस्यास्याध्ययनेन -

- दर्शनशब्दस्य विविधान् अर्थान् ज्ञास्यति।
- दर्शनस्य आवश्यकताम् अवगच्छेत्।
- दर्शनस्य व्यापकताम् बुध्यात्।
- दर्शनस्य प्रवृत्तिम् अवगच्छेत्।
- दर्शनस्य मूलं निश्चिनुयात्।
- दर्शनेषु साम्यं किमिति बोद्धुम् योग्यो भवेत्।
- दर्शनस्य विशेषतां बुद्ध्वा तस्य व्यावहारिकताम् अवगच्छेत्।
- दर्शेनषु मतभेदस्य कारणानि बुद्ध्वा समन्वयाविष्करणे प्रवर्तेत।



## १.१) दर्शनम्

दृशिर् प्रेक्षणे इति धातोः ल्युट्-प्रत्यययोगेन दर्शनशब्दः निष्पद्यते। कोषे तु -

दर्शनं दर्पणे धर्मोपलब्ध्योर्बुद्धिशास्त्रयोः।
स्वप्नलोचनयोश्चापि ...। (अनेकार्थसंग्रहे ४१०)

इति नयनम् स्वप्नः बुद्धिः धर्मः उपलब्धिः शास्त्रम् दर्पणः इति एते अर्थाः कोषे उक्ताः। विभिन्नेषु साहित्येषु एवमर्थेषु दर्शनपदस्य प्रयोगः सुलभः। एवं दर्शनशब्दस्य नानार्थत्वे सति भारतीयदर्शनम्, आस्तिकदर्शनम् इत्यादिस्थलेषु प्रयुज्यमानस्य दर्शनशब्दस्य उक्तेषु कतमः अर्थः अभिप्रेतः इति जिज्ञासा सुतराम् उदेति। कस्यापि नानार्थकस्य पदस्य कदा कतमोऽर्थः ग्राह्यः, पदं कमर्थं बोधयितुं शक्तम्, पदस्य कतमः अर्थः शक्यः इति निर्णयाय प्रकरणादिकं साहाय्यं करोति, विशेषस्मृतिहेतुः भवति। एवम् इहापि दर्शनपदस्य कः अर्थः व्याकरणादिना सम्भवति, कः अर्थः युक्तश्चेति किञ्चिद् प्रस्तूयते।

कस्यापि धातोः अर्थः फलं व्यापारश्चेति शाब्दिकाः। दृशिधातोः अर्थः ज्ञानरूपं फलम्, तदनुकूलः व्यापारश्च इति अवगम्यते। आनकूल्यमत्र जनकत्वमेव। अतः फलानुकूलः अर्थात् फलजनकः व्यापारः इति अर्थो जायते। अतः फलस्य व्यापारे अनुकूलत्वसम्बन्धेन अन्वयः भवति।

दृशिर् धातोः अर्थे ज्ञाते एव फलं व्यापारश्च कौ इति निश्चेतुं शक्यम्।

दृशिर् प्रेक्षणे इति शिष्टैः दृशधातोः प्रेक्षणम् इत्यर्थः प्रदत्तः। तथापि धातूनाम् बह्वर्थता सुप्रसिद्धा एव। अतः प्रेक्षणम् इत्यस्य अत्र न केवलं चाक्षुषदर्शनम् इति अर्थः अपि तु ज्ञानसामान्यम्। पञ्चभिः षड्भिर्वा इन्द्रियैः साक्षात् परम्परया वा यदपि ज्ञानं बोधः बुद्धिः प्रमा प्रमितिः जायते तत् प्रेक्षणम् इति एकः पक्षः।

दृशिर् धातोः कृत्यल्युटो बहुलम् इति सूत्रेण ल्युट् प्रत्ययः बाहुलकार्थे भवति, दर्शनशब्दश्च व्युत्पद्यते। तेन दर्शनशब्दस्य विभिन्ना अर्थाः सम्भवन्ति। तथाहि व्युत्पत्तयः -

१. दृश्यते यथार्थतया ज्ञायते पदार्थः अनेन इति **करण**व्युत्पनः दर्शनशब्दः। अर्थात् करणे ल्युट्। तदा ज्ञानानुकूलव्यापारकरणं दर्शनम् इत्यर्थो लभ्यते। ज्ञानजनकव्यापारस्य करणं शास्त्रम्। ज्ञानस्य करणानि यानि सुप्रसिद्धानि प्रमाणानि तान्यपि भवन्ति। अतः दर्शनम् तु **शास्त्रम् प्रमाणं** वा। अत्र दृशधातोः अर्थः फलम् ज्ञानम् तदनुकूलः व्यापारश्च। प्रत्ययार्थस्तु करणम्। अत एव फलानकूलव्यापारस्य करणम् इति अर्थो लभ्यते। तेन ज्ञानानुकूलव्यापारस्य करणम् इति दर्शनपदार्थः करणव्युत्पन्नस्य दर्शनशब्दस्य।

२. पश्यति इति **कर्तृ**व्युत्पन्नः दर्शनशब्दः। अर्थात् कर्तरि ल्युट्, ल्युः वा। तदा ज्ञानानुकूलव्यापारवान् दर्शनः इत्यर्थो लभ्यते। ज्ञानजनकव्यापारस्य आश्रयः तु ज्ञाता अर्थात् **प्रमाता**।



३. यत् दृश्यते तद् दर्शनम् इति **कर्म**व्युत्पन्नः। अर्थात् कर्मणि ल्युट्। तदा ज्ञानानुकूलव्यापारजन्यज्ञानस्य विषयः दर्शनम् इत्यर्थो लभ्यते। ज्ञानस्य विषयस्तु **प्रमेयम्** भवति।

४. दृश्यते इति दर्शनम् इत्यत्र **भाव**व्युत्पन्नः दर्शनशब्दः। अर्थात् भावे ल्युट्। तदा ज्ञानानुकूलव्यापारजन्यफलम् तच्च ज्ञानम् इति अर्थो लभ्यते। इदं ज्ञानं **प्रमा** एव।

इत्थं दर्शनशब्दस्य चतुर्धा व्युत्पत्तिः सम्भवति। एवञ्च दर्शनशब्दस्य **प्रमाणं प्रमाता प्रमेयम् प्रमा** च इत्येते चतुर्धा अर्थाः भवन्ति।

आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इति श्रुतौ द्रष्टव्य इति पदे दृशधातोः आत्मसाक्षात्कारः इति अर्थः। अर्थात् प्रमा इति अर्थे प्रयोगः वर्तते।

यदा भारतीयदर्शनं नास्तिकदर्शनम् आस्तिकदर्शनं चेति शब्दप्रयोगः भवति तदा, यदा चोच्यते दर्शनं पठामि, दर्शनम् अध्यापयामि इत्यादि, तदापि दर्शनशब्दस्यार्थः प्रमाणम् अथवा शास्त्रम् इत्येव। अर्थात् सत्यस्य साक्षात्काराय यद् उपायभूतम् उपकरणरूपं तद् इत्यर्थः।

समेषामपि दर्शनानां स्वमतानुकूलानि प्रमाणानि प्रमेयाणि च सन्ति। प्रमाता प्रायः जीव एव। क्वचिद् ईश्वरोऽपि। प्रमाणैः प्रमातुः प्रमेयविषयिणी प्रमा जायताम् इति दर्शनस्य प्रधानं कर्म। तथा प्रमायां सत्याम् अर्थात् निर्भ्रान्ते ज्ञाने सति तत्तद्दर्शनप्रतिपाद्याः विषयाः स्फुटावगमाः स्युः।

भारतीयदर्शनम् इत्यनेन भारतीयशास्त्राणि अर्थात् प्रमााणानि, प्रमेयाणि, प्रमाता, प्रमा इति एतत्सर्वं संगृहीतं भवति। यतो हि एतत्सर्वं शास्त्रेषु प्रतिपाद्यत एव। भारतीयदर्शनानि कानि इति पृष्टे न केवलं ग्रन्था उच्यन्ते। तथापि बाहुल्येन प्रधानतया विद्या, गौणतया तत्प्रतिपादकग्रन्थाः चेति मत्वा दर्शनशब्दः प्रयुज्यते। तथाहि -

यदाभ्युदयिकं चैव नैश्रेयसिकमेव च।
सुखं साधयितुं मार्गं दर्शयेत् तद्धि दर्शनम्।। (भाट्टसंग्रहः १.२१)

**सरलार्थः** - आभ्युदयिकं नैश्रेयसिकम् इति द्विविधम् सुखम् अस्ति। तत्सुखं साधयितुम् मार्गम् उपायम् यद् दर्शयति निर्दिशति तद् हि दर्शनम् इति। अत्र श्लोके दर्शनशब्दः विद्यापरः।

**शास्त्रम् -**

किं तावत् **शास्त्रम्**। शासु अनुशिष्टौ इति धातोः करणे ष्ट्रन्-प्रत्ययेन शास्त्रशब्दः व्युत्पन्नः। शास्त्रेण अनुशासनं क्रियते। तच्च विधिनिषेधभेदेन अनुशासनं द्विविधम्। तथाहि अभियुक्तोक्तिः -

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥

यत् पुंसः अर्थात् मर्त्यस्य नित्ये इष्टे वा प्रवृत्तिम् उपदिशति विदधाति, अनित्ये निवृत्तिम् उपदिशति तत् शास्त्रम्।





## पाठगतप्रश्नाः

१. दर्शनशब्दस्य व्युत्पत्तिं लिखत।

२. भारतीयदर्शनानि इति पदे दर्शनशब्दस्य अर्थः कः।

३. दर्शनपदस्य चत्वारः अर्थाः कति के च।

४. दर्शनपदं करणव्युत्पन्नं चेत् कस्तदर्थः।

(क) प्रमाणम् (ख) प्रमाता (ग) प्रमेयम् (घ) प्रमा

५. दर्शनपदं कर्तृव्युत्पन्नं चेत् कस्तदर्थः।

(क) प्रमाणम् (ख) प्रमाता (ग) प्रमेयम् (घ) प्रमा

६. दर्शनपदं भावव्युत्पन्नं चेत् कस्तदर्थः।

(क) प्रमाणम् (ख) प्रमाता (ग) प्रमेयम् (घ) प्रमा

७. दर्शनपदं कर्मव्युत्पन्नं चेत् कस्तदर्थः।

(क) प्रमाणम् (ख) प्रमाता (ग) प्रमेयम् (घ) प्रमा

८. शास्त्रं किम्।

## १.२) दर्शनस्य आवश्यकता

जगत्यस्मिन् दुःखं मृत्युश्च चेति एतद्वयं वर्तते शश्वद् अविशेषेण जीवानाम्। अतः दुःखनिवारणं मृत्युभयाद् रक्षणं च को वा न वाञ्छति। प्राणिवर्गः सदा दुःखपरिहाराय च मृत्योः रक्षणाय च प्रयतमानः परिलक्ष्यते। जीवेषु तेषु मनुष्यः एव चिन्तनशीलः। पशुजीवनम् तु उद्देश्यहीनं भाति। सहजा प्रवृत्तिः पशूनां प्रेरिका प्रवर्तिका च। केचित् पशुपक्षिणोऽपि भविष्यत्कालीनप्रयोजनसिद्धये गृहनिर्माणान्नसञ्चयादिकम् कुर्वाणाः परिलक्ष्यन्ते। तदपि सहजमेव। मनुष्य एव विशिष्टबुद्धिमान्। अयमेव तस्य विशेषः प्राणिभ्यः। मानवः बुद्धिप्रयोगेण युक्तीनां साहाय्येन च ज्ञानम् अर्जति। युक्तिसाहाय्येन तत्त्वज्ञानस्य प्राप्तये प्रयत्नः एव क्रमबद्धरूपेण आयोजितश्चेत् दर्शनरूपेण परिणतो भवति। बुद्ध्या युक्तिभिश्च लब्धेन ज्ञानेन मानवः जीवनशैलीं निर्धारयति आचरति च, यया इह परत्र च सुखं विन्देत्। इयं शैली एव धर्मः। तथाहि -

आहारनिद्राभयमैथुनं च सामान्यमेतत् पशुभिर्नराणाम्।
धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः॥ (हितोपदेशः)

**भावार्थः** - अन्नपानादिरूप आहारः, निद्रा स्वापः, भयं मैथुनं च इति एतत् चतुष्टयं यथा मनुष्येषु तथा पशुषु अपि परिलक्ष्यते। एतद्दृष्ट्या पशुभ्यः मानवस्य न किमपि पार्थक्यम्। परन्तु मनुष्यस्य धर्मः



एव स विशेषः यः पशूनां नास्ति। यदि कस्यचिद् मानवस्य धर्मः न स्यात् तर्हि स पशुसमान एव। तावान् महिमा दर्शनस्य यत् तद् विना मानवः पशुसमानः भवति।

यथा वैद्यकशास्त्रं देहजदुःखस्य अपायाय औषधादीन् उपायान् आविष्करोति करोति च। यथा जामितापरिहाराय मनोरञ्जनं कर्तुं नाटकानि काव्यानि उपन्यासाः उद्यानानि क्रीडादयश्च सन्ति। यथा अन्नपानवस्त्रादीनाम् अनिश्चितताम् दूरीकृत्य सुरक्षायै जीविकोपायान् वृत्तीः गोरक्षावाणिज्यादिकं च जनाः कुर्वन्ति। यथा वा स्वजनज्ञातिबान्धवानाम् अपि जीविकाव्यवस्थायै दुःखनिवारणाय च प्रयत्नपराः नाल्पाः दरीदृश्यन्ते। आत्मनः सम्मानलाभाय धर्मलाभाय च दानादिरताः भवन्ति। एवं हि जगत् प्रवर्तते। एतेषाम् समेषाम् अपि प्रयासानाम् शास्त्राणि, चतुःषष्टिः कलाः सन्ति, तदनकूलज्ञानदानस्य विद्यापीठानि विद्यालयाश्च सन्ति। एतेषां समेषामपि जीवने विशिष्टं स्थानमस्ति इति केन वा नावगम्यते।

यदि श्वः कथं दुःखाभावः स्यात् कथं वा सुखाधिक्यं च स्यादिति चिन्तापरा जना भवन्ति, यदि आजीवनं दुःखापायाय सुखायाय च ततोऽपि चिन्तामग्ना जना भवन्ति, तर्हि अस्मात् जन्मन उत्तरजन्मसु का स्थितिः स्यात्, तत्स्थितौ अपि सुखादिलाभाय दुःखोद्भवनिवारणाय च के प्रयासाः सन्ति, तदर्थम् अस्मिन् जन्मनि किमपि कर्तुं शक्यते वा, जीवनस्य जनिमृत्युचक्रम् इत्थम् अनन्तकालं प्रवर्तिष्यति वा, तस्य क्वापि विरामः अस्ति न वा इति समेऽपि प्रश्नाः मानवानाम् भवन्ति। तर्हि कियतीं चिन्तां कुर्याद् जीवः। यदा कश्चित् प्रियजनो म्रियते तदा दुःखार्ता आत्मीया नूनं मरणोत्तरगतिं चिन्तयन्ति। तथा च कठोपनिषदि नचिकेतसः प्रश्नः - **येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके** इति। (अर्थात् मनुष्यस्य मरणानन्तरम् तस्य अस्तित्वम् अस्ति न वा। केचित् अस्तीति अभ्युपगच्छन्ति केचिच्च न। अतः अस्ति संशयः अस्मिन् विषये।) एतेषां समेषामपि प्रश्नानाम् महत्त्वं मनोरञ्जनादितोऽपि अत्यधिकम् अस्ति। यत् क्षणिकं सुखं ददाति तस्य गुरुत्वमपि अल्पमेव भवति। यच्चाधिककालं चिरकालं वा सुखं प्रतिपादयति दद्याच्च तस्य महिमा किम् उ वर्णनीयः। अत एव अन्यानि शास्त्राणि यथा निकटवर्तीनि भान्ति ततोऽपि निकटवर्ति शास्त्रमिदं दर्शनम्। यतो हि दर्शनं तथाविधं सुखमेव प्रतिपादयति। अत एव दर्शनम् आवश्यकम्। यावद् जन्ममृत्युचक्रं वर्तते तावद् जन्मोत्तरं किं भविष्यति इति जिज्ञासा स्यादेव। तज्जिज्ञासासमाधिं दर्शनमेव करोति। अतः दर्शनविरुद्धा जना यदपि कुर्युः नाम। मृत्युभयभीताः तेऽपि वार्धक्ये साक्षात् प्रकारान्तरेण मरणोत्तरस्थितिं जिज्ञासन्ति चिकीर्षन्ति च।

दर्शनशास्त्राध्ययनस्य का आवश्यकता चेदुच्यते -

शास्त्रं सुचिन्तितमहो परिचिन्तनीयं  
आराधितोऽपि नृपतिः परिसेवनीयः।  
अङ्के धृताऽपि तरुणी परिरक्षणीया  
शास्त्रे नृपे च युवतौ च कुतो वशित्वम्॥

**सरलार्थः** - शास्त्रम् पठितमपि, नृपः आराधनया सन्तोषितोऽपि, तरुणी भार्या स्वस्य अस्ति चेदपि पुनः तेषां स्वायत्तीकरणाय प्रयत्नः विधेयो भवति। यतोहि मुहुर्मुहुः प्रयासः नास्ति चेद् एतत्त्रयं हस्तगतं न भवति।



## १.३) दर्शनस्य व्यापकता

दर्शनेन सामान्यं ज्ञानं जायते विशिष्टज्ञानं चापि जायते। अतः ज्ञानं विज्ञानं च दर्शनम् इति स्थितिः। सुखमेव प्राणी वाञ्छति दुःखं चापि जिहासति इत्यत्र न कस्यापि विमतिः। दर्शनं सुखप्रदानाय सुखोपायविज्ञापनाय दुःखपरिहाराय च प्रवर्तते। अतः नानाविधं सुखं सुखसाधनानि च यदपि भ्रान्तिरहिततया प्रतिपादयति तत् सर्वमपि दर्शने अन्तर्भवति स्वभावतः। सुखलाभस्य दुःखनिवृत्तेश्च केचित् दृष्टा उपायाः केचित् च अदृष्टा उपायाः सन्ति। केचिद् दृष्टा उपायाः व्यवहारतः शास्त्रादिकं विनैव गम्यन्ते। पशवः शास्त्रं विनैव अन्नपानादिकम् अवगच्छन्ति। कांश्चन दृष्टान् उपायान् प्राधान्येन विज्ञानादिकं प्रतिपादयति। अदृष्टान् उपायान् च धर्मशास्त्रम् प्रतिपादयति। इदं समग्रं धर्मशास्त्रम् दर्शनम् इति अभिधीयते।

चित् (चेतनम्) अचित् (जडम्) चेति जगति विद्यमानं स्थूलतया विभागद्वयं कल्पयितुं शक्यते। ब्रह्मविद्या आत्मविद्या अध्यात्मविद्या चित्तविद्या इत्यादिकं प्राधान्येन चिदंशम् आदाय प्रवर्तते। एतेषु प्राधान्येन चित्स्वरूपम् तस्य बन्धमोक्षादिकं च विचार्यते। धर्मशास्त्रम् नीतिशास्त्रम् कलाशास्त्रम् (सौन्दर्यशास्त्रम्) इत्यादिकं सुखप्रदानाय नीतिनियमान् उपायान् च उपदिशति। पदार्थविज्ञानं गणितादिकम् भूगोलादिकं सर्वमपि अचिदंशम् आदाय प्रवर्तते। एतेषां चिदंशविषये मौनं प्रायः परिलक्ष्यते। अतः एतानि अत्यन्तं स्थूलानि जडविषयकाणि शास्त्राणि केवलम् उदरपूर्तिपराणि सन्ति। शरीरादौ रोगे सति रोगनिवारणाय रोगप्रादुर्भावप्रतिबन्धाय च प्रवृत्तानि आधुनिकानि प्राचीनानि वा शरीरविज्ञानस्य आयुर्वेदादिशास्त्राणि। एतेषु सर्वविधेषु उपकारकम् भवति भाषाशास्त्रम् आन्वीक्षिकी विद्या अर्थात् तर्कशास्त्रं च। यस्तर्केण अनुसन्धत्ते स धर्मं वेद नेतरः इति मनुमुनिः। तर्कश्चात्र मीमांसा। केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः। युक्तिहीनविचारे तु धर्महानिः प्रजायते॥ इति अभियुक्तोक्तिः। अत एव इदं स्पष्टं यत् सुखस्य साधनाय यदपि उपकारकम् तद् दर्शनस्य परिधौ वर्तते। अतः दर्शनस्य व्यापकता सर्वाधिका वर्तते। प्रायः समग्रमपि वाङ्मयं साक्षात् परम्परया दूरान्वयेन वा दर्शनस्यैव पोषकम्।



## पाठगतप्रश्नाः

९. पशुभ्यः मनुष्यस्य कोऽधिको विशेषः।

१०. मानवः कथं जीवनशैलीं निर्धारयति।

११. जामितापरिहाराय किमस्ति उपायत्वेन।

१२. सुखदुःखतारतम्येन कस्य शास्त्रस्य महिमा अतिशेते।

१३. दर्शनं कीदृशोपायान् प्रतिपादयति।

१४. समग्रमपि वाङ्मयं साक्षात् परम्परया दूरान्वयेन वा कस्य पोषकम्।

## १.४) दर्शनस्य प्रवृत्तिः

दार्शनिकैः प्रमाणप्रमेयप्रमातृप्रमारूपः वाङ्मयरूपः प्रपञ्चः किम् प्रयोजनम् उद्दिश्य महता परिश्रमेण प्रस्तूयते। दर्शनानि कस्मै प्रयोजनाय प्रवर्तन्ते। तत्र नियामकं किम्। इतीदं किञ्चिद् उच्यते।

### १.४.१) पुरुषार्थः

सर्वेऽपि प्राणिनः इष्टं प्राप्तुम् इच्छन्ति। अनिष्टं परिहर्तुम् इच्छन्ति। तत्र किमिष्टम् किं वा अनिष्टम्। सुखम् इष्टम् दुःखं हि अनिष्टम्। अत एव सुखस्य उपायः अपि इष्टः। दुःखस्य कारणम् अपि अनिष्टम्। सुखम् तदुपायं च विहाय नान्यत् किमपि जन्तुः वाञ्छति। तदर्थं दुःखपरिहारं परिहारोपायान् च जिज्ञासति।

सर्वेऽपि प्राणिनः सुखं लब्धुं दुःखं च दूरीकर्तुं प्रयतन्ते। न तावत् एकोऽपि जन्तुः दुःखलाभाय प्रयतते सुखपरिहाराय च प्रयतते। यदपि दर्शनं विज्ञानं मतं सम्प्रदायः संस्था जनः आत्मीयः शरीरम् मनः इत्यादिकं यावत् सुखं ददाति तावदेव अनुस्त्रियते। कदाचित् आपाततः दुःखजनकमपि अग्रे सुखदं स्यादिति आशया अनुस्त्रियते अवलम्ब्यते च। क्वचित् दुःखजनकम् अपि अवलम्ब्यते इति दृश्यते। तत्र वस्तुतः जनस्य अविवेकः कारणम्। तत्र केन किं लप्स्यते। कस्य किं कारणम् इति स विवेक्तुम् असमर्थः। अत एव भ्रान्तः प्रवर्तते। विषं मृत्यकारणम् इति विद्वान् न कदापि विषं भुङ्क्ते। भुङ्क्ते च यदि जीवनं मरणादपि अधिकं दुःखजनकम् प्रतीयते।

सुखलिप्सोः भ्रान्तिनिवारणाय दर्शनं प्रवर्तते। सुखस्य स्वरूपं लक्षणं च प्रतिपादयितुम् दर्शनं प्रवर्तते। सुखस्य प्रकारान् निवेदयितुं दर्शनस्य प्रवृत्तिः। सुखस्य कारणानि उपस्थापयितुं दर्शनं प्रवर्तते। सुखस्य उपायान् विज्ञापयितुम् दर्शनं प्रवर्तते। दुःखम् किम् , तस्य कति प्रकाराः, तस्य कारणानि कानि, तस्य परिहारस्य उपायाः के इति बोधयितुम् दर्शनं प्रवर्तते। एतच्च प्रमाणप्रमेययोः प्रतिपादनेन सिध्यति। अतः सर्वेषु दर्शनेषु एतद्वयं प्रतिपाद्यते। प्रमा प्रमाता च प्रमेये एव अन्तर्भवति। तदङ्गभूतत्वेन अन्यत् सर्वं प्रसङ्गोपात्तम् च विव्रियते।

जीवश्च सुखस्य अधिकाधिकाम् मात्राम् वाञ्छति। अल्पेन न सन्तुष्यति। यदि निरन्तरम् नित्यं सुखम् सम्भवति तर्हि को वा न वाञ्छेत्। कानिचन दर्शनानि केवलम् अनित्यं सुखम् अस्ति इति प्रतिपादयन्ति। बाहुल्येन च नित्यम् अनित्यं च सुखमिति अभ्युपगच्छन्ति। तदेव विव्रियते अधः।

सुखं द्विविधम्। नित्यम् अनित्यं च। नित्यं सुखम् दर्शनभेदेन विविधम्। तत् जन्यम् नास्ति। न केनापि कारणेन तत् सुखम् उत्पद्यते। अनित्यम् सुखम् जन्यम् अस्ति। तस्य किमपि कारणम् अस्ति।

आस्तिकसमये अनित्यसुखस्य कारणं हि धर्मः। धर्मं विना सुखं नैव भवति। धर्मोऽपि जन्यः अस्ति। वेदविहितयागादिकर्मणः धर्मः जायते। पुण्यमिति तस्य नामान्तरम्। स च कश्चिद् गुणविशेषः। तद्धर्मस्य जनकः यागादिः। अतः तद्यागादिरपि धर्म उच्यते। अतः पुण्यम् धर्मः। धर्मजनकत्वात् कर्माणि अपि धर्मः इति स्थितिः।



## भारतीयदर्शनम्

दुःखस्य किमपि कारणं तु स्यादेव। सुखं वा दुःखं वा कारणं विना नैव उत्पद्येते। त्रिविधतापात्मकं दुःखं शास्त्रेषु उपवर्ण्यते। ॐ शान्तिः शान्तिः शान्तिः इति त्रिः शान्तिः अत एव क्रियते। सुखस्य किं कारणम् इति यथायथम् असन्दिग्धं च ज्ञानम् आवश्यकम्। तेन इष्टं यत् सुखं तस्य यत् साधनं तत्र निष्ठया प्रवृत्तिः भवेत्। किञ्च सुखस्य कति भेदाः सन्ति तदपि स्पष्टं जनो जानीयात्। तेन प्रवृत्तिः नियम्यते। इत्थम् 'इदं मदिष्टसाधनम्' इति ज्ञानम् प्रवृत्तिं प्रति कारणं भवति।

अर्थ्यते इति अर्थः। पुरुषस्य अर्थः पुरुषार्थः। अथवा पुरुषेण अर्थ्यते स पुरुषार्थः। अर्थात् पुरुषः नरो वा नारी वा यद् कामयते इच्छति अर्थयते स एव पुरुषार्थः।

पुरुषः सुखमेव अर्थयते। अतः सुखमेव पुरुषार्थः सकलप्राणिसाधारणः। सुखस्य प्रकाराः सन्ति। अतः एव पुरुषार्थस्य प्रकाराः सन्ति। नित्यसुखं मोक्षः कथ्यते। अनित्यसुखं कामः कथ्यते। इन्द्रियजन्या प्रीतिः आनन्दः इति कामः। कामस्य कारणं हि धर्मः कथ्यते। धर्मस्य साधनं हि अर्थः कथ्यते। अर्थो हि धर्मस्य सामग्री धनादिकम्। एवं धर्मार्थकाममोक्षाः चत्वारः पुरुषार्थाः सुप्रसिद्धा वैदिकसंस्कृतौ। तेषु काममोक्षौ मुख्यौ। कामस्य साक्षात् कारणं धर्मः। धर्मस्य प्रयोजकः अर्थः। कामलाभाय एव धर्मः अर्थः च सेव्येते नान्यार्थम्। अतः धर्माथौं गौणौ। मुख्ययोः काममोक्षयोः अपि मोक्षः नित्यः। अतः मोक्षः एव परमः पुरुषार्थः। अर्थः अनित्यः इति प्रत्यक्षेण ज्ञायते। इन्द्रियजन्यं सुखम् क्षणिकम् इति तदपि अनित्यमेव इति अनुभवसिद्धम्। अत एव अनित्यसुखस्य कारणं धर्मः अपि अनित्यः एव। न हि कारणसत्त्वे कार्याभावः भवति। अर्थात् कारणं यदि विद्यते तर्हि तस्य कार्यमपि स्यात्। कारणमस्ति किन्तु कार्यं नास्ति इति एवं न भवति। तत्र यदि कारणं नित्यम् अर्थात् सदा वर्तते तर्हि कार्यमपि नित्यमेव स्यात्। कार्यम् अनित्यं चेत् तत्कारणमपि अनित्यमेव। इत्थं धर्मस्य कार्यभूतः कामः अनित्यः चेत् तत्कारणभूतः धर्मः अपि अनित्यः एव।





वेदान्ते श्रुतिः तदनुकूला युक्तिः अनुभवश्च इति एतत् त्रितयम् सदा प्रमाणत्वेन उपन्यस्यते।

कामादीनाम् अनित्यत्वे श्रुतिः प्रमाणम् - तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते। (अर्थः - इह अस्मिन् लोके धर्माधर्मकर्मनिर्मितः लोक्यते इति लोकः घटादिः यथा क्षीयते तथा लोकान्तरे पुण्यनिर्मितः लोकः स्वर्गादिः नश्यतीति।)




तथा च स्मृतिः - ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति। (गीता ९.२१) (अर्थः - ये पुण्यम् आसाद्य स्वर्गं गच्छन्ति ते विशालं विस्तीर्णं स्वर्गलोकं भुक्त्वा यदा तद्भोगजनकं पुण्यं क्षीणं भवति तदा मर्त्यलोकम् मनुष्यलोकं विशन्ति जनिं लभन्ते। ) अत्र गीतोक्तेः इदं स्पष्टं यत् पुण्यं क्षीणं भवति। अर्थात् धर्मः पुण्यम् अनित्यम् अस्ति। अतः तज्जन्यम् सुखम् कामः अपि अनित्यः एव।

तथाहि युक्तिः - यत्कृतकं तदनित्यम् इति नियमः दृष्टानुमानोभयसिद्धः। धर्मः कर्मजन्यः। अतः अनित्यः। कामः धर्मजन्यः। अतः अनित्यः। धर्मलाभः कथं भवतीति जैमिनिमुनिप्रणीते धर्ममीमांसाशास्त्रे सविस्तरं वर्णितमस्ति। तत्र प्रथमं सूत्रम् - अथातो धर्मजिज्ञासा इति।

इत्थं सिद्धम् यत् मोक्षः एव परमः पुरुषार्थः। स च प्रमया सुलभः। अतः प्रमा का। तल्लाभस्य प्रमाणं किमिति जिज्ञासा। अतः सर्वेषु दर्शनेषु प्रमाणानि निरूप्यन्ते।

सिद्धं च पुरुषार्थप्रतिपादनाय तदुपायप्रतिपादनाय च दर्शनानां प्रवृत्तिः।

पुरुषार्थविषये केचित् श्लोका अत्र प्रदीयन्ते।

धर्ममूलः सदैवार्थः कामोऽर्थफलमुच्यते।
सङ्कल्पमूलास्ते सर्वे सङ्कल्पो विषयात्मकः।।(महा.)

**सरलार्थः** - चतुर्षु पुरुषार्थेषु अर्थः अन्यतमः। स धर्ममूलः अर्थात् धर्मस्य कारणम्। अर्थस्य फलम् कामः अर्थात् सुखम्। एते त्रयः अपि सङ्कल्पमूलाः अर्थात् संकल्पः एतेषां कारणमस्ति। कस्तर्हि संकल्पः। स हि विषयात्मकः। अर्थात् विषय एव संकल्पः।

धर्मश्चार्थश्च कामश्च जीविते फलम्।



एतत्त्रयमवाप्तव्यमधर्मपरिवर्जितम्।। (महा.)

**सरलार्थः** - जीविते जीवने फलम् त्रिविधम्। तद्धि धर्मः अर्थः कामः चेति। एतत्त्रयम् अवाप्तव्यम्। तत्र अवधेयम् यत् तद् अधर्मपरिवर्जितम् अस्तु इति।

धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ। (गीता)

**सरलार्थः** - भूतेषु धर्ममार्गे प्रवृत्तिं प्रति कारणम् कामः अहम् वासुदेवः अस्मि हे भरतर्षभ। अर्थात् वेदविहिते आचारे जनं प्रेरयति, निषिद्धकर्मभ्यो वारयति, विधिमार्गे नियमाचरणे प्रेरयति स गुणविशेषः कामः, सन्निकृष्टविषयापेक्षया असन्निकृष्टेषु विषयेषु प्रवृत्तिहेतुः तृष्णारूपः।

धर्मं समाचरेत् पूर्वं ततो ह्यर्थं धर्मसंयुतम्।
ततः कामं चरेत् पश्चात् सिद्धार्थः स हि तत्परम्।। (महा.)

**सरलार्थः** - आदौ वेदतदनुकूलस्मृतिविहितम् कर्म कुर्यात्। तत् कर्म पुण्याख्यधर्मस्य जनकम्। इत्थम् स्वकर्मणा लब्धम् अर्थम् अर्थात् सुखसामग्रीम् अर्जेत्। तथा लब्धेन अर्थेन कामम् अश्नुयात्, सुखम् अनुभवेत्। इत्थम् कामतृप्तः विरक्तः च अन्ते सिद्धार्थम् मोक्षम् चरेत् इति।

पुण्यपापमयं देहं क्षपयन् कर्मसञ्चयात्।
क्षीणदेहः पुनर्देही ब्रह्मत्वमुपगच्छति।। (महा.)

**सरलार्थः** - देहस्य कारणं पुण्यं पापं च। तदुभयं कर्मणः जायते। कर्मजः संस्कारः एव कर्मसञ्चयः। स च फलोपभोगेन क्षयम् एति। निष्कामकर्मणा च क्षीणो भवति। इत्थं शास्त्रोक्तविधिना पुण्यपापयोः कारणरूपः कर्मसञ्चयः यदा क्षीणो भवति तदा देहधारणमपि क्षीणं भवति। तथा यस्य देहः क्षीणः स कल्मषरहितः निरञ्जनः शुद्धः पुण्यपापे विधूय ब्रह्मत्वम् उपगच्छति, मुक्तो भवति।

ऊर्ध्वबाहुर्विरौम्येष न च कश्चित् शृणोति मे।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते।। (महा.)

**सरलार्थः** - बाहुद्वयम् ऊर्ध्वम् कृत्वा विरौमि उच्चैः वदामि। तथापि कोऽपि न शृणोति मम वचांसि। जनाः धर्मं विना अर्थं कामं च वाञ्छन्ति। उभयमपि धर्मसेवनेन सुलभम्। धर्माद् अर्थः कामः चेति उभयम् अपि लभ्यते एव। तथापि धर्मः कुतो न सेव्यते अनुष्ठीयते इति अहो दुःखम्। इयं व्यासदेवस्य उक्तिरस्ति।

## सुखलिप्सूनां विभागः

बहुधा पूर्वमुक्तमेव यद् जन्तुः सुखं वाञ्छति। सुखस्य अधिकाम् मात्रां वाञ्छति। सुखं दीर्घकालं भवतु इति वाञ्छति। यद्यपि शरीरम् शीर्यते, नाशम् एति तथापि शरीरनाशः मा भवतु इति वाञ्छति। सशरीरः अमरः भवतु इति प्रबला इच्छा। शरीरनाशस्तु भवति एव। अतः शरीरनाशात् परम् अपि पुनः शरीरधारणमस्तु इति वाञ्छति। पौनःपुन्येन लभ्यमानं जन्म सुखमयमेव अस्तु इति वाञ्छति। केचित् तु तदपि बहुजन्मसु लभ्यमानं सुखम् अल्पम् मन्यन्ते। तत् सुखम् कर्मजन्यम्। अतः अनित्यम् इति मन्यन्ते। ईदृशसुखादपि विरक्ताः भवन्ति। जन्ममृत्युचक्रमेव कथं रोद्धुं शक्यते इति जिज्ञासन्ति। अतः चक्रस्यारम्भः कथं जातः। चक्रस्य प्रवर्तकः कः। चक्रस्य इष्टा गतिः कथं भवति। अनिष्टा गतिः कथं



भवति। तस्याः परिवर्तनं कथं भवति। गतिरोधः कथं भवति। इति एते समेऽपि प्रश्नाः मानवेषु बहूनाम् भवन्ति एव। अतः जीवानां दलत्रयं कल्पयितुं शक्यते।

प्रथमदलम् - एकमेव जन्म। तस्मिन् अधिकं सुखम् अधिककालम् कामयमानानाम्। ते चार्वाकाः।

द्वितीयदलम् - अधिकं सुखम् चिरकालम् जन्मजन्मान्तरेषु भवतु इति कामयमानानाम्। एते पूर्वमीमांसकाः।

तृतीयदलम् - जन्ममरणचक्रस्य विरामम् कामयमानानाम्। एते मुमुक्षवः।



## पाठगतप्रश्नाः -२

१५. सर्वे प्राणिनः किमच्छन्ति।

१६. सर्वे प्राणिनः किं नेच्छन्ति।

१७. सुखं कतिविधम्। किं च तत्।

१८. किं नित्यसुखम्।

१९. किमनित्यं सुखम्।

२०. अनित्यसुखस्य कारणं किम्।

२१. दुःखस्य कारणं किम्।

२२. धर्मस्य कारणं किम्।

२३. अधर्मस्य कारणं किम्।

२४. प्रवृत्तिं प्रति किं ज्ञानं कारणं भवति।

२५. पुरुषार्थपदस्य व्युत्पत्तिः का।

२६. पुरुषार्थाः कति के च।

२७. गौणमुख्यभेदेन पुरुषार्थान् लिखत।

२८. मोक्षस्य परमपुरुषार्थत्वे को हेतुः।

२९. कामाख्यपुरुषार्थस्य अनित्यत्वे का युक्तिः प्रमाणम्।

३०. सुखलिप्सूनां नामानि लिखत।

३१. परमपुरुषार्थः कः।

(क) धर्मः (ख) अर्थः (ग) कामः (घ) मोक्षः

३२. नित्यः पुरुषार्थः कः।

(क) धर्मः (ख) अर्थः (ग) कामः (घ) मोक्षः

३३. कः पुरुषार्थः प्रत्यक्षः नास्ति, अनुमेयः अस्ति।



(क) धर्मः (ख) अर्थः (ग) कामः (घ) मोक्षः

३४. सामग्री इति अर्थकः पुरुषार्थः कः।

(क) धर्मः (ख) अर्थः (ग) कामः (घ) मोक्षः ।

## १.५) दर्शनस्य मूलम्

ऊर्ध्वम् यथा उक्तम् तथा सुखस्य स्वरूपम् कारणम् च, जीवस्य स्वरूपम् गतिः च, संसारचक्रस्य स्वरूपम् कारणम् च, स्वाभीष्टसुखस्य उपायः च इति मुख्यत्वेन प्रतिपादनीयम् भवति। तत्र आस्तिकेषु दर्शनेषु जीवः सृष्टिः ईश्वरः ब्रह्म बन्धः मोक्षः मोक्षसाधनम् इति विषयाः प्रमेयाः। एतेषां भ्रमरहितं ज्ञानं जायताम् इत्यतः प्रमाणानि च प्रतिपाद्यन्ते।

सृष्टेः मूलम् किम्। सृष्टेः प्राक् का स्थितिः आसीत्। सत्यम् एकम् अनेकं वा इति इमे प्रश्नाः दर्शनेषु आलोच्यत्वेन गृह्यन्ते। तेषां समाधानद्वारा पुरुषार्थाः साध्यन्ते। ईदृशप्रश्नाः तेषाम् उत्तराणि च दर्शनस्य मूलम् अस्ति।

इत्थम् सर्वाणि दर्शनानि पुरुषार्थान् प्रतिपादयितुम् प्रवर्तन्ते। दर्शनभेदेन पुरुषार्थः भिन्नोऽपि भवितुम् अर्हति। पुरुषार्थस्य लाभः पुरुषार्थस्य तदुपायस्य च संशयविपर्ययवर्जितेन ज्ञानेन कर्तुं शक्यः। अतः स्वदर्शनानुसारं पुरुषार्थाः तदुपायाश्च दर्शनेषु प्रतिपाद्यन्ते। समग्रस्यापि विषयस्य कदाचित् साक्षात् पुरुषार्थप्रतिपादकत्वेन प्रकटनं क्रियते। कदाचित् प्रमाणप्रेमयादिरूपेण, क्वचित् पदार्थप्रतिपादनेन क्रियते। आस्तिकाः सर्वेऽपि श्रुतिम् प्रमाणत्वेन अङ्गीकुर्वन्ति। श्रुतौ दर्शनस्य मूलम् लभ्यते। श्रुतिषु ऋग्वेदः प्राथम्यं भजते। तत्र बहूनां देवतानां स्तुतिः परिलक्ष्यते। इन्द्रः अग्निः वरुणः सविता प्रजापतिः हिरण्यगर्भः देवी इत्यादीनि कानिचन उदाहरणानि।

निसर्गे जायमानानि बहूनि परिवर्तनानि सन्ति। यथा - वृष्टिः विद्युत् सूर्यः तदुदयास्तौ, चन्द्रः तदुदयास्तौ, वायुः, अग्निः, समग्रं विश्वम् इत्यादीनि। एतेषां परिवर्तनानां नियन्ता कश्चिद् अस्ति इति ऋग्वेदे आम्नातम्। एतेषां देवानां स्तुतिः ऋग्वेदे प्राधान्येन उपलभ्यते। तत्रैव एकं सद् विप्रा बहुधा वदन्ति। (ऋ.वे. १.१६४.४६), (सत्यम् एकम् अस्ति। परन्तु विप्राः विभिन्नैः नामभिः प्रकटयन्ति।) पुरुष एवेदं सर्वम् (ऋ.वे.१०.९०.२) (इदं सर्वं विश्वम् वस्तुतः पुरुष एव।) नासदासीन्नो सदासीत् (ऋ.वे. १०.१२९.१) (सृष्टेः पूर्वम् असत् नासीत्। सत् नासीत्।) हिरण्यगर्भः समवर्तताग्रे (ऋ.वे. १०.१२१.१) (हिरण्यगर्भः प्रजापतिः अग्रे प्रपञ्चसृष्टेः प्राक् समवर्तत। मायाध्यक्षात् परमात्मनः सिसृक्षोः समजायत।) इत्यादिषु स्थलेषु सृष्टेः प्रागवस्था, सृष्टिः कस्मात् जाता, सृष्टेः प्रारम्भे कः जातः इत्यादयः बहवः विषयाः ऋग्वेदे लभ्यन्ते। उपनिषत्सु तु अयमेव विषयः प्रधानम् भवति। तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अद्भ्यः पृथिवी इति मन्त्रः सृष्टिक्रमम् आम्नाति। इत्थमयं ब्रह्माण्डसृष्टिप्रपञ्चः उपनिषत्सु लभ्यते। स च महान् विषयः। अतः तद्विषयकः विस्तरः अत्र न क्रियते। इत्थं सुस्पष्टं यद् दर्शनस्य मूलं वेदे एवास्ति।

## १.६) भारतीयदर्शनस्य विशेषता

### १.६.१) दर्शनानाम् व्यवहारयोग्यता

यावन्ति शास्त्राणि पुस्तकानि च जगति सृष्टानि सृज्यमानानि स्रक्ष्यमाणानि च सन्ति। तेषु प्रतिपादितः विषयः मानवस्य व्यवहारयोग्यो न वा इति विचारः निश्चप्रचं कर्तव्यः। तथैव कस्यापि दर्शनस्य जीवनोपयोगिता कियती, व्यावहारिकता कियती इति विचारं कृत्वैव तत्र जनः प्रेरितो भवति। यथा गणितस्य व्यवहारयोग्यता कियती इति चेद् उच्यते यद् यत्र गणना कर्तव्या तत्र गणितम् उपयोगि। वैद्यकशास्त्रस्य उपयोगिता कियती इति चेद् उच्यते यद् यदा शरीरं रोगग्रस्तं भवति तदा रोगनाशाय चिकित्साशास्त्रम्। एवं समेषापि शास्त्राणाम् विशिष्टम् अवदानं मानवजीवने भवति।

तत्र इह जन्म सुखकरं कर्तुं परजन्मापि सुखमयं कर्तुम् जन्ममृत्युरूपसंसारचक्रं च रोद्धुम् दर्शनशास्त्रं प्रवर्तते। अतः सुखमयचक्रस्य चक्रविरामस्य च प्रतिपादकत्वेन दर्शनम् अत्यन्तम् उपयोगि। न कोऽपि जन्तुः सुखं विना जीवति। अतः प्रतिपदम् दर्शनशास्त्रम् तस्य मार्गप्रदर्शकम्। यथा अपरिचितं स्थानं प्रति गन्तुम् प्रस्थितः मार्गे कञ्चित् पृच्छति 'पन्थानम् उद्दिशतु भवान्' इति। अन्यथा अनिष्टमार्गेण गच्छन् अनिष्टं स्थानं प्राप्नुयात्। तद्वदेव सुखलाभाय अपरिचितं मार्गम् अनुसरन् जनः दर्शनमेवाश्रयते निश्चयेन सुखलाभाय। इयती उपयोगिता दर्शनस्य। धर्मेण हीनाः पशुभिः समानाः इति सुभाषितमेव। अतः भारतीयदर्शनं तु भारतीयानां जीवनशैली एव। दर्शनोक्तानां सिद्धान्ताम् जीवने व्यवराहारार्थम् स्मृतिशास्त्राणि प्रवर्तन्ते। तेषु सविस्तरं विधिनिषेधादिकं प्रतिपाद्यते। यैः जीवने धर्मः परिपालितः, येषां जीवनं धर्मस्य आदर्शभूतं तादृशानां महामानवानां चरितं रामायणे महाभारते पुराणेषु काव्येषु च सुष्ठु परिलक्ष्यते। अत एव सिद्धान्ताः, तेषां व्यवहारोपयोगितया विधिनिषेधमुखेन प्रतिपादनं, दर्शनानुसारि जीवनं चेति त्रिस्तरीयं शास्त्रम् अपि स्पष्टम् उपलभ्यते भारते। रघुरामादीनां जीवने दर्शनं प्रतिबिम्बितमस्ति। इत्थं मानवाः दर्शनेषु सिद्धान्तान् पठेयुः, स्मृत्यादिषु विधिनिषेधान् जानीयुः, महात्मनां जीवने तस्य वास्तवायनं पश्येयुः। एतेन स्वजीवने दर्शनानुसारी व्यवहारः सुबोधः सुलभः सुकरः च भवति। इत्थम् भारतीयदर्शनानाम् व्यावहारिकता वर्तत एव, न सन्देहः।

### १.६.२) अधिकारिभेदेन दर्शनभेदाः

मानवेषु नरो नारी चेति लैङ्गिकभेदः। आयुषा च शिशुः पौगण्डः युवकः वृद्धः इति भेदाः। सत्त्वरजस्तमांसि इति त्रयो गुणाः। गुणानां तारतम्यवशात् तामसिकः राजसिकः सात्त्विकः इति त्रयो भेदाः मानवानाम्। तत्रापि रजउपसर्जनीभूततामसिकः तमउपसर्जनीभूतराजसिकः सत्त्वोपसर्जनीभूतराजसिकः रजउपसर्जनीभूतसात्त्विकः इति भेदाः उपलभ्यन्ते। अत एव वर्णः आश्रमः चेति द्वेधा विभागः भारतीयसंस्कृतौ परिलक्ष्यते। वयसा आश्रमेषु विभक्ताः मानवाः। ते चाश्रमाः - ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-सन्न्यासाः। ब्रह्मचर्याश्रमे विद्योपासनम्। गृहस्थाश्रमे विषयोपासनम्। वानप्रस्थाश्रमे संयमेन तपआचरणम्। सन्न्यासाश्रमे च विधिना इहपरलोककामनात्यागपूर्वकं मोक्षसाधनम्। मानवानां सत्त्वादिगुणतारतम्येन ब्राह्मण-क्षत्रिय-वैश्य-शूद्रा इति चत्वारः वर्णाः स्वभावतः सिद्धाः न तु जन्मतः।



इत्थम् ब्राह्मणस्य चत्वारः आश्रमाः क्षत्रियस्य चत्वारः आश्रमाः, वैश्यस्य चत्वारः आश्रमाः तथैव शूद्रस्यापि। तमोगुणाधिक्यात् आश्रमव्यवस्थायाः कृते शूद्रः आत्मानं योग्यं न मन्यते। इत्थं मानवानाम् अष्टौ विभागाः भवन्ति।

एतेषु पुनः वैराग्यस्य तारतम्येन अर्थाद् मन्द-मध्यम-तीव्र-वैराग्यभेदेन विधौ निषेधे च भेदो वर्तते।

मानवानां तर्कविचारे, कर्मणि, भक्तौ ध्यानादौ च मनसः प्रवणताभेदेन चत्वारः भेदाः भवन्ति। तेन च ये तर्केण मीमांसां कर्तुम् प्रधानतया प्रवर्तन्ते ते ज्ञानयोगस्य अधिकारिणः। ये सकाम-निष्कामकर्मसु प्रवर्तन्ते ते कर्मयोगस्य अधिकारिणः। ये तावद् प्रेमास्पदस्य भगवतः प्रेम्णा पूजाम् उपासनां च कर्तुम् प्रकृत्या प्रवर्तन्ते ते भक्तियोगस्य अधिकारिणः। ये तावद् आसनप्राणायामध्यानादिषु नैसर्गिकीं प्रवृत्तिं अनुभवन्ति ते राजयोगिनः ध्यानयोगिनः इति वक्तुं शक्यते। यद्यपि सर्वेषु तर्क-कर्म-प्रेम-ध्यानादिकम् चतुष्टयम् अपि अस्ति तथापि यस्य प्राधान्यं भवति तस्य योग्यः, तस्य अधिकारी सः इति विभागः भवति। अयं तस्य बहुजन्मार्जितः स्वभावधर्मः स्वधर्मः पिण्डधर्मः च कथ्यते। अत एव गीतायां भगवान् श्रीकृष्णः अर्जुनं प्रति आह- स्वधर्मे निधनं श्रेयः परधर्मो भयावहः इति।

नरनरीभेदः, वयसा भेदः, गुणानां तारतम्येन भेदः, वैराग्यमात्रया भेदः, मनसः प्रवणतया भेदः इति मानवस्य बहुधा विभागाः सन्ति एव स्वतः सिद्धाः। अतः प्रोक्तानां समेषामपि विभागानां कृते सुखस्य उपायाः भिन्नाः सन्ति। ते सर्वेऽपि एकविधमेव सुखं न कामयन्ते। तमोगुणी निद्रया सुखम् ईहते। राजसिकः कर्मणा, सात्त्विकश्च ज्ञानलाभेन सुखम् ईहते। अतः मानवानाम् योग्यतायाम् भेदः अस्ति। यथा योग्यता तथा सुखलिप्सा। अत एव तथा सुखोपायस्य प्रेप्सा च। सर्वस्तरीयाणां मानवानां कृते उपायस्य उपदेशम् दर्शनं करोति। यद्यपि सर्वाणि दर्शनानि तथा प्रगल्भानि न सन्ति तथापि दर्शनस्य एव इदं कर्तव्यम् यद् शक्तिभेदाद् व्यक्तिभेदः, व्यक्तिभेदाद् अधिकारभेदः, अधिकारभेदाद् विधानभेदः इति।

अत एव दर्शनेषु विधानबाहुल्यं परिलक्ष्यते। क्वचित् एकस्य कृते यद् विधानं तद् अन्यस्य कृते निषिद्धम् अपि स्याद्। यथा उदररोगस्य औषधं शिरोरोगप्रशमनाय दीयते चेद् इष्टं तु न भवति, अनुचितमेव भवति। तथा एकस्य कृते दर्शनस्य यद् विधानम् अपरस्य कृते तद् हानिकरमपि भवितुमर्हति।

विषयस्यास्य सुबोधाय उदाहरणम् एकम् दीयते।

देहली इति गन्तव्यस्थलमस्ति। देहलीं प्रति गमनाय वायुमार्गः भूमार्गः रेलमार्गश्चेति त्रयो मार्गाः सन्ति। एतेऽपि पुनः विभिन्नेभ्यः स्थानेभ्यः देहलीं प्रति गमनाय नैके सन्ति। कश्चिद् देहलीं प्रति जिगमिषुः केन मार्गेण केन वाहनेन च गच्छेदिति प्रश्नः। यः खलु चण्डीगढे अस्ति, तस्य यावद् धनम् अस्ति तदनुसारं तेन विमान-रेलयान-वाहनादिकम् अवलम्ब्यते। परन्तु स उज्जयिनीम् आगत्य देहलीं गच्छतु इति तं प्रति उपदेशः अयुक्तः एव। तथैव यः खलु उज्जयिन्याम् अस्ति, स वाराणसीम् गत्वा देहलीम् गच्छतु इति वचनं वृथा भ्रामकं च वर्तते। यश्च नागपुरे वसति स चेन्नैनगरं गत्वा देहलीं गच्छतु इति अत्यन्तम् विपरीतः उपदेशः इति स्पष्टमेव। तद्वत् सर्वोऽपि मानवः पूर्वपूर्वजन्मसु अर्जितेन संस्कारेण प्रभावितः स्वमार्गे पुरःसरन् मोक्षस्य समीपे दूरे वा वर्तते। एवञ्च मोक्षस्य नैके मार्गाः सन्ति। तेषु



कस्मिंश्चिद् मार्गे अस्ति। अतः यः येन मार्गेण प्रस्थितः, यावद् दूरं चागतः, ततः अग्रे गच्छतु इति एव उपदेशः साधीयान्। स एव उपदेशः श्रेयस्करः। इत्थम् मार्गभेदेन मार्गे स्थितिभेदेन च बहुविधाः उपदेशाः स्युरेव इति न आश्चर्यम्। यदि तथा उपदेशाः न स्युः तर्हि आश्चर्यम् यद् बहूनां रोगाणाम् एकमेव औषधं कथमिति। विविधाकारकाणां जनानां कृते एकाकारकमेव परिधेयं वस्त्रं कथमिति।

## १.६.३) पूर्वपक्षोत्तरपक्षरूपेण मतपरिशुद्धिः

दर्शनं दूरदृष्टिं भविष्यद्दृष्टिम् अन्तर्दृष्टिं च प्रददाति। जीवनयापनस्य मार्गम् उपदिशति शिक्षयति च। काले काले मतिभेदाद् व्युत्पत्तिभेदात् च मतभेदाः भवन्ति विद्वत्सु अपि। यदैव मतभेदो भवति तदा किं मतं साधु इति निर्णयाय कश्चित् पन्थाः आवश्यकः एव। स च पन्थाः शास्त्रार्थरूपेण अङ्गीकृतः। शास्त्रार्थः वादविवादस्य कश्चित् सर्वसम्मतः उपायः। तत्र युक्तिः प्रधानम् भवति। पूर्वपक्षः स्वमतम् उपस्थापयति। उत्तरपक्षः यथासामर्थ्यम् युक्त्या तस्य खण्डने प्रवर्तते। तत्र क्रमशः द्वयोः पक्षयोः वाक्यप्रबन्धः भवति। अयं वाक्यप्रबन्धः कथा कथ्यते। अतः भारतीयदर्शनस्य वैशिष्ट्यमिदं यद् युक्त्या मतस्य परिशुद्धिः क्रियते। किमपि मतं बलाद् न ग्राह्यते। यदि वादिप्रतिवादिनोः समयभेदाद् एकत्र वादः न सम्भवति तदा सति दोषे पूर्वलिखितस्य ग्रन्थस्य खण्डने परवर्तिनः विद्वांसः प्रवर्तन्ते।

## १.६.४) धर्माद् दर्शनं न अपेतम्।

धर्मशास्त्रम् दर्शनं चेति विभागः भारतेऽपि दृश्यते। पाश्चात्यदेशेषु द्वयोः कोऽपि सम्बन्धः नास्ति एव। धर्मशास्त्रं जीवने अवलम्ब्यते। दर्शनं केवलं कस्यचित् बुद्धितः प्रसृतं चिन्तनम् इति एतावन्मात्रम् अस्ति। दर्शनस्य धर्मशास्त्रे प्रभावः नास्ति, मानवजीवने तु नास्ति एव। परन्तु न तथा भारतीयदर्शनानाम्। भारतीयदर्शनैः यल्लक्ष्यं निश्चीयते तस्य लाभाय एव धर्मशास्त्रं प्रवर्तते। मानवजीवनम् अपि दर्शनप्रोक्तस्य लक्ष्यस्य सिद्ध्यर्थं नियन्त्रितं भवति। अतः भारतीयदर्शनं धर्माद् जीवनाद् वा अपेतं भिन्नम् नास्ति। दर्शनं धर्मशास्त्रम् जीवनम् इति समग्रम् एकं सूत्रम्। एकस्य पूरकम् अपरम्। एकस्य साधकम् अपरम् इति। अयं महान् भेदः पाश्चात्यदर्शनाद् भारतीयदर्शनस्य।



## पाठगतप्रश्नाः

३५. दर्शनस्य प्रतिपाद्याः विषयाः स्थूलतया के भवन्ति।

३६. भारतीयदर्शनानि व्यवहारयोग्यानि न वा।

३७. दर्शनस्मृतिपुराणादिभिः किं क्रियते।

३८. भारतीयदर्शनस्य धर्मे प्रभावः अस्ति न वा।

३९. अयमाश्रमः।

(क) संन्यासः (ख) ब्राह्मणः (ग) तमः (घ) क्षत्रियः

४०. अयं वर्णः।



(क) ब्रह्मचर्यम्  (ख) गृहस्थः  (ग) क्षत्रियः  (घ) सत्त्वम्

४१. अयं न गुणः

(क) सत्त्वम्  (ख) शूद्रः  (ग) रजः  (घ)  तमः

## १.७) दर्शनेषु मतभेदस्य कारणम्

मतभेदस्य बहूनि कारणानि सन्ति। तत्र उदाहरणद्वारा किञ्चिद् प्रकट्यते।

### दार्शनिकानाम् सामर्थ्यभेदात् दर्शनेषु कलहः -

केचिद् अन्धाः गजं द्रष्टुं गताः। तेषु कश्चित् गजस्य पुच्छं स्पृष्ट्वा वदति यद् गजः मार्जनी इव। कश्चिद् पादं स्पृष्ट्वा वदति यद् गजः स्तम्भ इव। अपरः कर्णं स्पृष्ट्वा निर्णयति यद् गजः शूर्पः इव। इत्थम् सर्वेऽपि अन्धाः गजस्य कंचिद् अवयवं स्पृष्ट्वा निर्णीतवन्तो यद् गजः ईदशः एव इति। यदा तैः परस्परम् आलापः कृतः तदा तेषु विवादः समुत्पन्नः। प्रत्येकम् अन्धानां मतं यद् गजः स्वेन यथा अनुभूतः तथैव वर्तते नान्यथा। एतेषु कलहस्य कारणं सुस्पष्टमेव। कलहस्य वैयर्थ्यमपि सुस्पष्टमेव। तथैव सत्यान्वेषणे रताः सत्यस्य केनचिद् उपायेन किञ्चिद् अनुभवं प्राप्य निर्णयन्ति यद् इदमेव अन्तिमं सत्यम्, सत्यम् इतः अन्यथा भवितुं नार्हति इति। अतः एव दार्शनिकेषु कलहः। यथा अन्धाः स्वचाक्षुषदोषेण दृष्टा गजस्य वास्तविकस्वरूपं नावगच्छन्ति तथा कलहरताः स्वसामर्थ्याभावात् सत्यवस्तु बोद्धुम् असमर्थाः। सत्यमेकमेव भवति। मतभेदेन न भिद्यते। मतभेदेन पन्थाः भिद्यते। यावन्ति मतानि तावन्तः पन्थानः। सत्यं तु एकमेव।

### अधिकारिभेदाद् दर्शनेषु कलहः

ऊर्ध्वम् अधिकारिभेदः संक्षेपेण निरूपितः। अधिकारिभेदादपि सत्यस्य प्रतिपादने भेदः वर्तते। सत्यं दुर्बोधम् मन्दबुद्धीनाम्। अतः तेषाम् कृते उपयोगि सरलं रूपम् प्रतिपाद्यते शास्त्रेषु। इत्थं प्रतिपादनम् आपाततः परस्परविरुद्धं प्रतिभाति। तथापि तद् उपासकानां सौकर्याय कल्पनम्।

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।
अनागमविकल्पा तु स्वयं विद्योपवर्तते॥ (वाक्यपदीयम् २.२३३)
उपायः शिक्षमाणानां बालानां चोपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥ (वाक्यपदीयम् २.२३८)

**सरलार्थः** - विभिन्नेषु शास्त्रेषु विभिन्नाः प्रकियाः सन्ति। तासु अविद्या एव उपवर्ण्यते। तथापि ताभिः अविद्याभिः विद्या स्वयं प्रकटीभवति। अतः अविद्या एव विद्योपायः।

वर्णिताः उपायाः शास्त्राणि उपलालनाः प्रतारणा इव सन्ति। उपलालनं क्रीडनकम्। शिशूनां मनोरञ्जनाय किमपि क्रीडनकं दीयते तद्वदेते उपायाः सन्ति। यस्मात् तत्र असत्यरूपे शास्त्रप्रक्रियामात्रे अर्थे स्थित्वा अर्थात् तेषाम् अवलम्बनेन सत्यस्य समीहनं प्राप्तिः भवतीति। अन्यच्च-



चिन्मयस्याद्वितीयस्य निष्फलस्याशरीरिणः।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना॥ (श्रीरामपूर्वतापिन्युपनिषद् १.७)

**सरलार्थः** - ब्रह्म चिन्मयम् अद्वैतं निष्फलम् शरीररहितं चास्ति। तथापि उपासकानां कार्यार्थं ब्रह्म मत्स्यकूर्मादिरूपेण विविधरूपाणि धृत्वा आविर्भवति, अवतरति।

अतः सिद्धं यद् अधिकारिभेदेन उपायभेदाः सन्ति। परन्तु एषा व्यवस्था अल्पबुद्धिभिः नावगम्यते। अतः व्यवस्थायां दोषम् पश्यन्तः परस्परं कलहरताः सन्तः अशान्तिमेव जगति तन्वन्ति।

यथा शिक्षणव्यवस्थायाम् प्रथमकक्षातः स्नातकोत्तरकक्षां यावद् विभागा वर्तन्ते। तत्रापि बहवः विषयाः, बहवः शाखाश्च। प्रथमकक्षादिरूपेण विभागः बालानां वयसा कृतः। विषयभेदः शाखाभेदः च रुचिभेदात् बालस्य ग्रहणधारणसामर्थ्यभेदाच्च कृतः। परन्तु प्रथमवयस्कं शिशुं द्वादशीं कक्षां योऽपि प्रवेशयति तर्हि स मूर्खः हास्यतां गच्छति। शिशुं तद्वयसः कृते योग्यामेव कक्षां प्रवेशयेत्। अत्र निम्नकक्षासु विषयस्य प्रतिपादनाय अवलम्बिताः नैके उपायाः वस्तुतः असत्याः एव। परन्तु अध्ययने सौकर्यं जनयन्ति, अतः तेषाम् उपयोगिता। तद्वद् दर्शनेषु अपि अस्ति। परन्तु तां व्यवस्थां बोद्धुम् असमर्थाः कलहं कुर्वन्ति।

## १.८) दर्शनेषु साम्यम्

दार्शनिकेषु नैके मतभेदाः सन्ति। तथापि साम्यमपि बहु वर्तते। विरोधस्य यावन्ति कारणानि सन्ति ततोऽप्यधिकानि मेलनस्य सन्ति। अतः साम्यस्थलानि कानिचन द्रष्टव्यानि।

१. दुःखम् - सर्वदर्शनसम्मतानि मतानि दुःखम् अस्ति इति मन्यन्ते। जन्म जरा रोगः मृत्युः इति जीवने सर्वत्र दुःखमस्ति एव। तत्परिहारेच्छा जीवानाम् अस्ति। परिहारस्य उपायाः सन्ति। चार्वाकान् विहाय अन्ये सर्वे अङ्गीकुर्वन्ति यद् दुःखस्य समूलोच्छेदः सम्भवति। एवञ्च दुःखस्य मूलम् तृष्णा। तृष्णाक्षये दुःखनाशः भवतीति।

२. सुखम् - सकलजन्तुः सुखम् इच्छति। सुखस्य उपायप्रतिपादनमेव दर्शनस्य कर्तव्यम्। सुखलाभाय सुखोपायाः ज्ञातव्याः। सुखज्ञानं सुखोपायज्ञानं च प्रमाणाधीनमस्ति। अतः प्रमाणानि अपि प्रतिपादनीयानि। तथाहि - अनित्यम् असुखं लोकम् इमं प्राप्य भजस्व माम्॥ (गीता) अर्थात् लोकः अनित्योऽस्ति, सुखहीनश्चास्ति। अतः अस्मिन् लोके जन्म लब्धं चेत् भगवदुपासनं कुरु इति। अतः समेषां सुखमस्तु इति परममूलं प्रयोजनम् उद्दिश्य सर्वाणि दर्शनानि प्रवर्तन्ते।

३. जीवः - जीवः अस्ति। जीवस्वरूपविषये दर्शनेषु तेषु मतभेदाः सन्ति। जीवः देहातिरिक्तः अस्ति इति अभ्युपायः। जीवस्य तस्य बन्धः अस्ति। बन्धात् मोक्षः भवितुमर्हति, भवति च। मोक्षस्य साधनमस्ति। दर्शनेषु जीवस्वरूपविषये बन्धमोक्षयोः स्वरूपविषये मोक्षसाधनविषये च मतभेदाः सन्ति। चार्वाकमते तु देह एव जीवो न तु ततो भिन्नः, न बद्धः न मुक्तः इति च।



४. ईश्वरः - चार्वाकं बौद्धं च विहाय अन्यानि दर्शनानि अभ्युपगच्छन्ति - जगतः सृष्टिकर्ता कश्चिद् ईश्वरः अस्ति। स एव नियन्ता अस्ति। स एव संहारकर्ता अस्ति। दर्शनेषु ईश्वरस्वरूपविषये मतभेदाः सन्ति। सृष्टिप्रक्रियाविषये मतभेदाः सन्ति।

५. ऋतम् - जगतः प्रचलनम् नियमबद्धमस्ति। स नियमः ऋतम् इति उच्यते। अस्य नियमस्य अतिक्रमणं न केनापि कर्तुं शक्यम्। यद्यपि बौद्धाः जैनाश्च नियमस्य नाम ऋतमिति न मन्यन्ते परन्तु तादृशं नियममभ्युपगच्छन्ति। चार्वाकाः ऋतं न मन्यन्ते।

६. परमपुरुषार्थः - मोक्षस्वरूपविषये मतभेदाः सन्ति। तथापि मोक्ष एव परमपुरुषार्थः इति सर्वमतैक्यमस्ति। अतः सर्वाणि दर्शनानि पुरुषार्थपराणि। पुरुषार्थविषये तेषु मतभेदाः सन्ति।

७. अविद्या - अविद्या एव दुःखहेतुः इति। अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः इति गीतोक्तिः। अर्थात् ज्ञानम् अज्ञानद्वारा आवृतम् अस्ति। अतः जनाः मोहग्रस्ताः भवन्तीति। चार्वाकाः अविद्यां निराकुर्वन्ति।

८. कर्मवादः - यथा कर्म तथा फलम् इति कर्मवादस्य मूलस्वरूपम्। एकस्मिन् जन्मनि कृतम् कर्म परजन्मसु फलं प्रसूते इति। आसक्तिः कर्ममूलम्। आसक्तो जन्तुः यद् यत् कर्म करोति तस्य कर्मणः फलम् भोक्तुम् उपयुक्तं देहम् धरति। मुक्तिलाभात् प्राक् इदं देहात् देहान्तरगमनरूपं चक्रम् अनिरुद्धं प्रवर्तते। कर्मणः सुफलम् कुफलम् चास्तीति मन्यन्ते। अर्थात् कर्मसिद्धान्तम् अभ्युपगच्छन्ति। जन्ममरणरूपं संसारचक्रम् अङ्गीकुर्वन्ति। स्थूलशरीरे जीवः वसति। स च मरणोत्तरं भिन्नं शरीरम् आश्रयते फलप्रसवाय इति ऊररीकुर्वन्ति। चार्वाकाः कर्मवादं नाङ्गीकुर्वन्ति।

९. युक्तिः - दर्शनानि युक्तौ प्रतिष्ठितानि सन्ति। साधकबाधकयुक्तिप्रयोगपुरःसरमेव किमपि मतम् अङ्गीक्रियते। एवञ्च कस्यापि मतस्य अङ्गीकारात् पूर्वं तस्य खण्डनादिषु प्रवर्तन्ते दार्शनिकाः। अतः दार्शनिकेषु खण्डनमण्डनपरम्परा अस्ति इति विशिष्टं साम्यं समेषु। कस्यापि मतस्य खण्डनात् पूर्वं तस्य सम्यग् उपस्थापनं कुर्वन्ति विद्वांसः।

१०. दर्शनस्य व्यावहारिकता - दर्शनेन प्रतिपाद्यमानानां तत्त्वानां जीवनोपयोगिता अस्ति न वेति भारतीयदर्शनेषु साम्यमस्ति। यदि जीवनोपयोगि न स्यात् तर्हि तथा मतम् नाभ्युपगच्छन्ति। चार्वाका अपि स्वस्य दर्शनस्य व्यावहारिकताम् अहमहमिकया प्रतिपादयन्ति। ते वदन्ति यत् लोके चार्वाकमतम् स्वतः प्रसरति। अतः इदं लोकायतं मतमिति। भारतीयदर्शनानां प्रात्यहिकजीवने व्यावहारिकता नूनमस्ति। किमपि दर्शनं वचनामात्रम् नास्ति।

११. चार्वाकान् विहाय सर्वेऽपि ओङ्कारम् अङ्गीकुर्वन्ति। ओम् मणिपद्मे हूम् इति बौद्धानां सुप्रसिद्धः मन्त्रः। जैनास्तु - ओम् एकाक्षरं पञ्चपरमेष्ठिनामादिपदम्। तत्कथमिति चेत् - अरिहन्ता असरीरा आयरिया तह उवज्झाया मुणियां। इति ओङ्कारम् परमेष्ठिनः आदिपदम् इति अङ्गीकुर्वन्ति। आस्तिकास्तु सर्वेऽपि अङ्गीकुर्वन्ति एव।



१२. चार्वाकान् विहाय अन्ये सर्वेऽपि पूजाम्, मालया मन्त्रजपम्, तीर्थाटनम्, तीर्थेषु स्नानम्, मन्दिराणि च अङ्गीकुर्वन्ति। पापं पुण्यं स्वर्गः देवताः च सन्ति इति अङ्गीकुर्वन्ति।

१३. प्रमाणानि - चार्वाकमते सुखं सुखोपायाः च केवलं प्रत्यक्षप्रमाणगम्याः। अन्येषां मतम् अग्रे प्रमाणालोचनावेलायां स्फुटीभविष्यति।

१४. सर्वाणि दर्शनानि प्रमाणानां साहाय्येन सत्यान्वेषणे प्रवर्तन्ते। तानि प्रमाणानि अग्रे प्रतिपादयिष्यन्ते।

१५. मतप्रवर्तकाः आचार्याः - चार्वाकमतस्य प्रवर्तकः देवगुरुः बृहस्पतिः स्वयम् आस्तिकः एव। गौतमबुद्धः वैदिककुलीयस्य महाराजस्य शुद्धोदनस्य पुत्रः आसीत्। गौतमः गृहत्यागानन्तरं बहुकालं यावत् तदानीन्तनीयेषु बहुषु सम्प्रदायेषु जीवनं यापितवान्। अतः तस्मिन् वैदिकसंस्काराः आसन्। बहुभ्यः सम्प्रदायेभ्यः यदुचितं तत् तेन संगृहीतमेव। ध्यानस्य मार्गाः तेन ज्ञाताः। तेषु सम्प्रदायेषु तप आचरितम्। तेन तस्य चित्तं शुद्धम् अभवत्। अतः अन्ते अल्पप्रयासेन सिद्धिं लब्धवान्। प्रतिपादितवान् च – आत्मदीपो भव इति। जैनधर्मस्य चतुर्विंशतौ तीर्थंकरेषु भगवान् महावीरः मगधराजस्य क्षत्रियकूलीयस्य सिद्धार्थमहाराजस्य पुत्रः आसीत्। तस्य मातुः नाम त्रिशला, पत्न्याः नाम यशोदा इति। तपस्यया कैवल्यं प्राप्य धर्मप्रवचनं चकार। जैनधर्मस्य ऋषभः अजितनाथः अरिष्टनेमिः इति त्रयाणां तीर्थंकराणां नामानि यजुर्वेदे लभ्यन्ते।



## पाठगतप्रश्नाः

४२. गौतमबुद्धस्य पितुः नाम किम्।

४३. महावीरस्य पितुः नाम किम्।

४४. एते दार्शनिकाः ओङ्कारं नाङ्गीकुर्वन्ति।

(क) चार्वाकाः (ख) जैनाः (ग) बौद्धाः (घ) सांख्याः

## १.९) दर्शनशास्त्रस्य प्रकाराः

कति दर्शनानि इति निर्णयो दुष्कर एव। गुणरत्नो मणिरत्नः चेति जैनपण्डितौ मन्वाते यत् दर्शनस्य संख्या स्वरूपं च निर्धारयितुं न शक्यते। नैको मुनिर्यस्य मतं प्रमाणम् इति महाभारते युधिष्ठिरस्य वचः। दर्शनसंख्या ३६३ इति केचिद्। विभिन्नमतानुसारेण दर्शनसंख्या प्रदर्श्यते -

### सम्मतितर्कमतम्

दर्शनानि ३६३। तेषु क्रियावादिनः १८०, अक्रियावादिनः ८४, आज्ञावादिनः ६७, वैनयिकाः ३२ इति। मतमिदम् नाद्रियते बहुभिः।



### सर्वसिद्धान्तसंग्रहमतम्

१)अक्षपादः (गौतमः) २) कणादः ३) कपिलः ४) जैमिनिः ५) व्यासः ६) पतञ्जलिः ७) बृहस्पतिः ८) आर्हतः ९) बुद्धः इति आचार्यनामानि उल्लिख्य तेषां दर्शनानि नव इति उक्तम्। तत्रापि भाट्टप्राभाकरमुरारिमिश्रभेदेन जैमिनीयाः मीमांसकाः त्रिविधाः। बौद्धाश्च माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिकभेदेन चतुर्धा। श्रीमद्भागवते अवधूतमार्गोऽपि परिलक्ष्यते।

### अग्निपुराणमतम्

१)तर्कशास्त्रम् २)क्षणभङ्गवादः ३)भूतचैतन्यवादः ४)स्वप्रकाशज्ञानवादः (प्राभाकराः वेदान्तिनश्च) ५) अनेकान्तवादः (जैनाः) ६) शैवसिद्धान्तः ७) वैष्णवमतम् ८) शाक्तसिद्धान्तः ९) सौरसिद्धान्तः १०) ब्राह्मसिद्धान्तः ११) सांख्यसिद्धान्तः

### महाकविराजशेखरमतम् -

१) नैयायिकम् २) वैशेषिकम् ३) जैनम् ४) बौद्धम् ५) सांख्यम् ६) मीमांसकम् ७) चार्वाकम् चेति काव्यमीमांसायां राजशेखरो मनुते।

### षड्दर्शनसमुच्चयमतम्

१) बौद्धम् २) नैयायिकम् ३) सांख्यम् ४) जैनम् ५) वैशेषिकम् ६) जैमिनीयम् चेति।

### सर्वदर्शनसंग्रहमतम्

१) चार्वाकम् २) बौद्धम् ३) जैनम् ४) रामानुजम् ५) पूर्णप्राज्ञम् ६) नाकुलीशपाशुपत्यं दर्शनम् ७) शैवदर्शनम् ८) प्रत्यभिज्ञादर्शनम् ९) रसेश्वरम् १०) वैशेषिकम् ११) न्यायः १२) जैमिनीयम् १३) पाणिनीयम् १४) सांख्यम् १५) योगः १६) शंकरमतम्

वैदिकेषु अपि तर्कप्रधानशाखा शब्दप्रधानशाखा इति विभागोऽपि सुगमः। येषां नये वेदस्य प्रामाणिकता तर्केण सिद्ध्यति तानि तर्कप्रधानानि दर्शनानि। यथा - न्यायदर्शनं वैशेषिकदर्शनं सांख्यं योगः चेति तर्कप्रधानानि। पूर्वमीमांसा उत्तरमीमांसा इति शब्दप्रधानानि।

इत्थम् विविधेषु ग्रन्थेषु आचार्याः भिन्नशैलीम् अवलम्ब्य दर्शनसंख्यां प्रदर्शयन्ति। अति प्रचलितानि, बहुधा सम्मतानि दर्शनानि अधः दीयन्ते।

## १.९.१) दर्शनविभागः

भारते आस्तिकनास्तिकभेदेन दर्शनानां द्वेधा विभागः क्रियते। किमास्तिकत्वं किं वा नास्तिकत्वम्। वेदस्य प्रामाण्यं यानि दर्शनानि अङ्गीकुर्वन्ति तानि आस्तिकदर्शनानि। यानि च वेदस्य प्रामाण्यं नाङ्गीकुर्वन्ति तानि नास्तिकदर्शनानि इति विभागः सुबोधः। वेदप्रतिपाद्यं स्वीकुर्वन्ति, समर्थयन्ति, विदधति तानि आस्तिकदर्शनानि। यानि वेदप्रतिपाद्यस्य विरोधं कुर्वन्ति तानि नास्तिकदर्शनानि। नास्तिको वेदनिन्दकः इति मनुमुनिः।

त्रीणि नास्तिकदर्शनानि। षड् आस्तिकदर्शनानि।

नास्तिकदर्शनानि हि - १) चार्वाकदर्शनम् २) जैनदर्शनम् ३) बौद्धदर्शनम्। बौद्धदर्शनस्यापि चत्वारो भेदाः सन्ति। तथाहि १) माध्यमिकदर्शनम् २) योगाचारदर्शनम् ३) सौत्रान्तिकदर्शनम् ४) वैभाषिकदर्शनम् इति। इत्थम् आहत्य नास्तिकदर्शनानि षड् भवन्ति।

षड् आस्तिकदर्शनानि हि - १) न्यायदर्शनम् २) वैशेषिकदर्शनम् ३) सांख्यदर्शनम् ४) योगदर्शनम् ५) पूर्वमीमांसादर्शनम् ६) उत्तरमीमांसादर्शनम् इति। अत्र उत्तरमीमांसापदेन वेदान्तदर्शनं बोध्यते।




तत्र गौतमेन न्यायदर्शनं, कणादेन वैशेषिकदर्शनं, कपिलेन सांख्यं, पतञ्जलिना योगदर्शनं, जैमिनिना पूर्वमीमांसा, व्यासेन वेदान्तदर्शनं च प्रणीतम्। तच्च वेदान्तदर्शनं व्यासप्रणीतम् एकमपि बहुभिः विद्वद्भिः द्वैत-अद्वैत-विशिष्टाद्वैत-शुद्धाद्वैतप्रभेदेन नानाविधं यथा बुद्धस्य एकस्य उपदेशकत्वेऽपि विनेयानां बुद्धिवैचित्र्यात् स्वस्वबुद्ध्यनुसारिपदार्थकल्पनया योगाचार-माध्यमिक-सौत्रान्तिक-वैभाषिकभेदा उपजाताः। एवं वेदान्तस्यापि।

षड् दर्शनानि मेऽङ्गानि पादौ कुक्षिः करौ शिरः।<br>
तेषु भेदन्तु यः कुर्यादङ्गच्छेदको हि सः॥<br>
एतान्येव कुलस्यापि षडङ्गानि भवन्ति हि।<br>
तस्मान्मदात्मकं कौलमहं कौलात्मकः प्रिये॥

**भावार्थः** - शिवः पार्वतीं प्रति आह- एतानि षड् दर्शनानि मम अङ्गानि इव सन्ति। यथा शरीरे पादौ कुक्षिः करौ शिरः इत्येनानि अङ्गानि भवन्ति तद्वद्। अर्थात् एकैकम् अपरस्य पूरकम् अस्ति न तु विरुद्धम्। अपि च यथा समेषामपि अङ्गानाम् विशिष्टा उपयोगिता तथैव दर्शनानाम् अपि विशिष्टा उपयोगिता अस्ति। पादयोः कार्यं शिरः न करोति, नापि शिरः कार्यं पादौ कुरुतः। तथैवात्रापि बोध्यम्।



अत एव एषु अङ्गेषु भेदः अस्ति इति यः चिन्तयति स तु अङ्गच्छेदकः इव। अर्थात् किमपि अङ्गम् अनुपयोगि इति मत्वा तस्य छेदं यथा मूढः कुर्यात् तथैवात्रापि।

| प्रणेता | दर्शनम् |
|---|---|
| बृहस्पतिः | चार्वाकम् |
| महावीरः | जैनम् |
| गौतमबुद्धः | बौद्धम् |
| कपिलः | सांख्यम् |
| पतञ्जलिः | योगः |
| कणादः | वैशेषिकम् |
| गौतमः | न्यायः |
| जैमिनिः | पूर्वमीमांसा |
| बादरायणव्यासः | उत्तरमीमांसा (वेदान्तः) |

जगति दर्शनस्य यः अल्पोऽपि विचारः प्रसृतः तस्य आद्याचार्यः महर्षिः कपिल एव। कपिलस्य उल्लेखः वेदेऽपि समुपलभ्यते। यथा - ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् इति। स जन्मना सिद्धः आसीत्। अतः कपिलं श्रद्धया स्मृत्वा नत्वा च दर्शनाध्ययने प्रवर्तितव्यम्। समग्रं जगत् कपिलस्य ऋणि वर्तते।



## पाठगतप्रश्नाः

४५. अग्निपुराणे कति दर्शनानि उल्लिखितानि।

४६. सर्वदर्शनसंग्रहकारमतेन कति दर्शनानि।

४७. आर्हतदर्शनस्य प्रणेता कः।

(क) कणादः (ख) गौतमबुद्धः (ग) महावीरः (घ) अक्षपादः

४८. अक्षपादस्य अपरं नाम किम्।

(क) कणादः (ख) गौतमबुद्धः (ग) महावीरः (घ) गौतमः

४९. पूर्वमीमांसाप्रणेता कः।

(क) कणादः (ख) गौतमबुद्धः (ग) महावीरः (घ) जैमिनिः

५०. कपिलप्रणीतं दर्शनं किम्।



(क) न्यायः (ख) वैशेषिकम् (ग) पाशुपतम् (घ) सांख्यम्

५१. बृहस्पतिप्रणीतं दर्शनं किम्।

(क) न्यायः (ख) वैशेषिकम् (ग) पाशुपतम् (घ) चार्वाकम्

५२. समेषामपि दर्शनानाम् आद्यः आचार्यः कः।

(क) कणादः (ख) व्यासः (ग) गौतमः (घ) कपिलः

## १.१०) प्रमाणानि

किं दर्शनं कति प्रमाणानि उररीकरोतीति संक्षेपेण उच्यते। तथाहि कारिकाः -

प्रत्यक्षमेकं चार्वाकाः कणाद-सुगतौ पुनः। (आर्हताः प्रत्यक्षमनुमानं चेति)

अनुमानं च तच्चापि साङ्ख्याः शब्दं च ते उभे॥

न्यायैकदेशिनोऽप्येवमुपमानं च केचन।

अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः॥ (माध्वाः प्रत्यक्षं शब्दश्चेति)

अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा।

संभवैतिह्ययुक्तानि तानि पौराणिका जगुः॥

**सरलार्थः** - चार्वाकाः प्रत्यक्षम् इति एकमेव प्रमाणम् अभ्युपगच्छन्ति। काणादाः वैशेषिकाः, बौद्धाः शाक्याः, आर्हताः जैनाः च प्रत्यक्षम् अनुमानं चेति प्रमाणद्वयम् अभ्युपगच्छन्ति। सांख्याः नैयायिकाः च प्रत्यक्षम् अनुमानं शब्दः चेति प्रमाणत्रयम् अभ्युपगच्छन्ति। केचित् नैयायिकाः तु उपमानमपि अङ्गीकुर्वन्ति। इत्थं नैयायिकाः चत्वारि प्रमाणानि स्वीकुर्वन्ति इति प्रसिद्धिः। मीमांसकैकदेशिनः प्राभाकराः प्रत्यक्षम् अनुमानम् उपमानं शब्दः अर्थापत्तिः इति पञ्च प्रमाणानि प्रस्तुवन्ति। भाट्टमीमांसकाः वेदान्तिनः च प्रत्यक्षम् अनुमानम् उपमानं शब्दः अर्थापत्तिः अनुपलब्धिः इति षट् प्रमाणानि प्रस्तुवन्ति। वेदान्तिषु अपि विशिष्टाद्वैतमते प्रत्यक्षम् अनुमानम् आगमः इति प्रमाणत्रम् अभ्युपगतम्। पौराणिकास्तु प्रत्यक्षम् अनुमानम् उपमानं शब्दः अर्थापत्तिः अनुपलब्धिः सम्भवः ऐतिह्यं च इति अष्टौ प्रमाणानि अभ्युपगच्छन्ति।



## पाठगतप्रश्नाः-

५३. बौद्धमते इदं न प्रमाणम्।

क) अनुमानम् ख) प्रत्यक्षम् ग) शब्दः घ) एषु किमपि न।

५४. शब्दप्रमाणम् एते नाङ्गीकुर्वन्ति।

क) पौराणिकाः ख) वेदान्तिनः ग) भाट्टाः घ) बौद्धाः



५५. अनुमानप्रमाणम् एते नाङ्गीकुर्वन्ति।

क) चार्वाकाः ख) वेदान्तिनः ग) भाट्टाः घ) बौद्धाः

५६. अर्थापत्तिप्रमाणम् एते नाङ्गीकुर्वन्ति।

क) पौराणिकाः ख) वेदान्तिनः ग) भाट्टाः घ) नैयायिकाः

५७. प्रत्यक्षम् अनुमानं चेति द्वे एव प्रमाणे इति के न वदन्ति।

क) चार्वाकाः ख) वैशेषिकाः ग) आर्हताः घ) नैयायिकाः

५८. स्तम्भयोः स्थितान् परस्परसम्बद्धान् मेलयत।

| क-स्तम्भः | ख-स्तम्भः |
|---|---|
| १) प्रमाणम् | क) दृश्-धातोः भावे ल्युट् |
| २) प्रमाता | ख) दृश्-धातोः कर्मणि ल्युट् |
| ३) प्रमेयम् | ग) दृश्-धातोः करणे ल्युट् |
| ४) प्रमा | घ) दृश्-धातोः कर्तरि ल्युट् |
| ५) आस्तिकदर्शनम् | ङ) वेदस्य प्रामाण्यं नाभिमतम् |
| ६) नास्तिकदर्शनम् | च) वेदस्य प्रामाण्यम् अभिमतम् |

## १.११) ईश्वरः

विविधानि दर्शनानि ईश्वरम् अभ्युपगच्छन्ति। यदि अभ्युपगच्छन्ति तर्हि तस्य किं स्वरूपं किं कार्यम् इति विषयः अतीव संक्षेपेण अत्र उपादीयते।

चार्वाकमते ईश्वरस्तु नास्ति एव। एवं बौद्धा अपि सर्वज्ञबुद्धमुनिव्यतिरिक्तम् ईश्वरं नाङ्गीकुर्वन्ति। जैनमते सर्वज्ञः अर्हन्मुनिः एव ईश्वरः, नान्यः। सांख्याश्च जीवातिरिक्तम् ईश्वरं न मन्यन्ते। मीमांसकानां मते कर्मैव फलं ददाति न तु तदरिक्तः फलदाता ईश्वरो नाम कश्चिद् अस्ति। अल्पाः केचिन्मीमांसकाः ईश्वम् अङ्गीकुर्वते। शब्दोपासकाः वैयाकरणास्तु प्राहुः-

परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।

हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥ इति।

इति एवंविधे शब्दचतुष्टये मूलभूतः पराख्यः शब्दः (परा वाक्) स एव ईश्वरः इति वदन्ति।

रामानुजमते जीवानां नियन्ता जावान्तर्यामी जीवेभ्यः अतिरिक्तः ईश्वरः। जीववर्गः जडवर्गश्च तस्य शरीरम्। स एव जीवेन कृतस्य यथाकर्म यथाश्रुतं फलं ददाति। स च ज्ञानस्वरूपः। चतुर्विधाः माहेश्वराः, नैयायिकाः, वैशेषिकाः माध्वाः च इत्थम् मन्वते। ईश्वरः जगतः नोपादानकारणम्। किन्तु केवलं निमित्तकारणमेव इति। कर्मफलदाता स एव। माहेश्वरेषु लकुलीशपाशुपताः प्रत्यभिज्ञावादिनश्च

मन्यन्ते यत् कर्मफलदानाय ईश्वरः कर्म नापेक्षते इति। ईश्वरस्य फलदातृत्वे कर्मानपेक्षताम् वदन्ति। तत्र तद्युक्तिर्हि - यदि ईश्वरः कर्म अपेक्ष्य एव फलं दद्यात् तर्हि तस्य स्वातन्त्र्यभङ्गप्रसङ्गः स्यात्। कर्म तु फलं प्रति स्वातन्त्र्येण निमित्तकारणं भवति।

इतरे माहेश्वराः, वैशेषिकाः माध्वाश्च कर्मसापेक्षः एव ईश्वरः जगत् निर्मिमीते इति वदन्ति। पातञ्जलमते ईश्वरः जीवापेक्षया भिन्नः अस्ति। किन्तु स निर्विशेषः निर्लेपः निर्गुणः च। स च जगतः नोपादानकारणं न वा निमित्तकारणम्।

अद्वैतवादिनां शाङ्कराणां मते च परमात्मा निर्विशेषः निर्लेपः निर्गुणः एकः पारमार्थिकः। स च जगतः नोपादानकारणं नापि निमित्तकारणम्। जगतः पारमार्थिकी सत्तैव नास्ति, कुतः तस्य कारणप्रथा। जगतः सत्ता तु केवलं व्यावहारिकी। तादृशस्य जगतः कारणं तु मायोपाधिकः परमात्मा। अयमेव ईश्वरः इति भण्यते। अयं च मायाविशिष्टः स्वप्राधान्येन जगतः निमित्तकारणम् भवति। मायाप्राधान्येन च जगतः परिणामि उपादानकारणं भवति। अयमीश्वरः मायाश्रयः मायाविशिष्टस्य एकदेशभूतः केवलः जगतः विवर्तोपादानकारणं भवति। जीवकृतकर्मणां फलानि च तत्तत्कर्मानुसारेण अयमेव ईश्वरः ददाति।




## १.१२) मोक्षः

सकलजनानां चरमत्वेन काम्यः मोक्षः। तद्विषये नाना दर्शनानां मतानि अत्र अति संक्षेपेण प्रदीयन्ते।

मृत्युः देहपातः मोक्षः इति चार्वाकाः। आत्मोच्छेदः मोक्ष इति शून्यवादिनः माध्यमिकबौद्धाः। निर्मलज्ञानोदयः मोक्षः इति इतरे बौद्धाः। कर्मकृतस्य देहस्वरूपस्य आवरणस्य अभावे जीवस्य सततोर्ध्वगमनं मोक्षः इति जैनाः। सर्वज्ञत्वादीनां परमात्मगुणानां प्राप्तिः याथात्म्येन भगवत्स्वरूपानुभवश्च



मोक्षः इति रामानुजीयाः। जगत्कर्तृत्व-लक्ष्मीपतित्व-श्रीवत्सप्राप्तिरहितं दुःखामिश्रितं पूर्णं सुखं मोक्षः इति माध्वाः। परमैश्वर्यप्राप्तिः मोक्षः इति नकुलीशपाशुपताः। शिवत्वप्राप्तिः मोक्षः इति शैवाः। पूर्णात्मतालाभः मोक्ष इति प्रत्यभिज्ञावादिनः। पारदरसेन देहस्थैर्ये जीवन्मुक्तिः एव मोक्षः इति रसेश्वरवादिनः। अशेषविशेषगुणोच्छेदः मोक्षः इति वैशेषिकाः। आत्यन्तिकी दुःखनिवृत्तिः मोक्षः इति नैयायिकाः। दुःखनिवृत्तिः सुखावाप्तिश्चापि इति मोक्षः इति नैयायिकैकदेशिनः। स्वर्गादिप्राप्तिः मोक्षः इति मीमांसकाः। मूलचक्रस्थायाः परानामिकायाः ब्रह्मरूपायाः वाचः दर्शनं मोक्षः इति पाणिनीयाः। प्रकृत्युपरमे पुरुषस्य स्वरूपेण अवस्थानं मोक्षः इति सांख्याः। कृतकर्तव्यतया पुरुषार्थशून्यानां सत्त्वरजस्तमसां मूलप्रकृतौ अत्यन्तलयः प्रकृतेः मोक्षः, चितिशक्तेः निरुपाधिकस्वरूपेण अवस्थानं मोक्षः इति पातञ्जलाः। मूलाज्ञाननिवृत्तौ स्वस्वरूपाधिगमः मोक्षः इति अद्वैतवेदान्तिनः।



## पाठगतप्रश्नाः

५९. एते ईश्वरस्य उररीकाराः।

क) चार्वाकाः   ख) वेदान्तिनः   ग) सांख्याः   घ) मीमांसकाः

६०. एते ईश्वरस्य न उररीकाराः।

क) विशिष्टाद्वैतिनः   ख) वेदान्तिनः   ग) सांख्याः   घ) माध्वाः

६१. एते दर्शनप्रवर्तकाद् अन्यम् ईश्वरम् नाभ्युपगच्छन्ति।

क) आर्हताः   ख) विशिष्टाद्वैतिनः   ग) वैशेषिकाः   घ) माध्वाः

६२. मृत्युरेव मोक्षः इति के मन्वते।

क) चार्वाकाः   ख) आर्हताः   ग) सांख्याः   घ) मीमांसकाः

६३. स्वर्गप्राप्तिरेव मोक्षः इति के मन्वते।

क) चार्वाकाः   ख) आर्हताः   ग) सांख्याः   घ) मीमांसकाः

६४. अशेषविशेषगुणोच्छेदः मोक्षः इति के मन्वते।

क) वैशेषिकाः   ख) आर्हताः   ग) सांख्याः   घ) मीमांसकाः

६५. जीवस्य सततोर्ध्वगमनं मोक्षः इति के मन्वते।

क) वैशेषिकाः   ख) आर्हताः   ग) सांख्याः   घ) मीमांसकाः





## पाठसारः

भारतीयदर्शनस्य सामान्यपरिचयः अस्मिन् पाठे संक्षेपेण उपन्यस्तः। दर्शनशब्दः दृशिर् प्रेक्षणे इति धातोः ल्युट्-प्रत्यययोगेन निष्पन्नः। अत्र ज्ञानसामान्यमिति अर्थः यद्यपि गृह्यते तथापि प्रमा प्रमाता प्रमाणानि प्रमेयम् इति चत्वारोऽपि अर्थाः दर्शनशब्दस्य विवक्षाभेदात् प्रसंगभेदाच्च भवन्ति।

सुखम् इच्छन् जन्तुः क्रमशः उन्नतिं कृत्वा अन्तिमगतित्वेन दर्शनमेव अन्विषति। सुखस्य प्रकारान् अलौकिकान् उपायान् च ज्ञातुम् दर्शनम् अवलम्बन्ते जनाः। दर्शनं विना मानवः पशुसमानः स्यादिति एतावद् माहात्म्यमस्ति दर्शनस्य। दर्शनस्य विषयः अत्यन्तं व्यापकः वर्तते। जन्तुः स्वाभीष्टलाभाय एव सर्वम् अपि शास्त्रं भवनादिकं च सृजति। अतः स्वाभीष्टलाभस्य अलौकिकम् उपायं वेदयति दर्शनम्। तस्यैव साहाय्यभूतानि अन्यानि सर्वाणि विज्ञानादीनि शास्त्राणि। दर्शनमेव जीवनस्य आचारविचारनिर्धारकमस्ति। दर्शनस्य सर्वत्र व्याप्तिः अस्ति।

धर्मार्थकाममोक्षा इति चत्वारः पुरुषार्थाः। जन्तुः न इतो भिन्नं जीवने कदापि किमपि वाञ्छति। पुरुषेण अर्थ्यमानत्वात् एते एव पुरुषार्थाः। कामः सोपाधिकं जन्यम् अनित्यं सुखम् मोक्षश्च निरुपाधिकम् अजन्यं नित्यं सुखम्। अतः मोक्षः परमपुरुषार्थः। कामस्य कारणं धर्मः। धर्मस्य कारणं वेदविहितं कर्म। वेदविहितकर्मानुष्ठानाय द्रव्यादिसामग्री एव अर्थः।

इह जन्मनि एव सुखम् कामयमानाः स्थूलाः लोकायताः। जन्मजन्मान्तरेषु सुखमयं चक्रं कामयमानाः मीमांसकाः। जन्मनः रोधं कर्तुम् इच्छन्ति मुमुक्षवः इति सुखकामिनां त्रयो भेदाः स्पष्टाः।

दर्शनम् इन्द्रियातीतं ज्ञानमस्ति। तच्च प्रत्यक्षेण अनुमानेन वा प्रमाणेन नावबोद्धुं शक्यते। अतः शब्दप्रमाणाद् एव तस्य अवबोधः। अत एव दर्शनस्य मूलम् वेदः एव।

भारतीयदर्शनानि केवलं पुस्तकमात्राणि तत्र प्रतिपादिताः केचित् सिद्धान्ताः इति नास्ति। एते सर्वेऽपि भारतीयजीवनं प्रभावितं कुर्वन्ति। दर्शनसिद्धान्तानां जीवने उपयोगाय स्मृतिशास्त्राणि आगतानि। येषां जीवनं दर्शनानुसारि तेषां जीवनवर्णनं पुराणादिषु कृतमस्ति।

वयः गुणः प्रवणता वैराग्यम् इति एतेषां तारतम्यवशाद् दर्शनोपासकानां भेदः अस्ति। अतः समेषाम् आनुकूल्याय दर्शनेषु नैके उपायाः उक्ताः सन्ति। अतः दर्शनेषु भेदाः परिलक्ष्यन्ते। अपि च दर्शनं जिज्ञासमानेषु ग्रहणधारणादिसामर्थ्यभेदाद् विद्वद्भिः विभिन्नाः उपायाः अवलम्बिताः आपाततः तेषु विरोधः परिलक्ष्यते तथापि सूक्ष्मेक्षिकया पश्यामश्चेत् तथा विरोधः वस्तुतः नास्ति। एकं सद् विप्रा बहुधा वदन्ति।

दर्शनेषु भेदस्य कारणानि यद्यपि स्युः तथापि साम्यस्थलानि बहूनि सन्ति। तानि च ततोऽपि अधिकानि स्थलानि धर्मद्वन्द्वनाशाय ज्ञातव्यानि एव।

तानि च दर्शनानि बहुशाखासु भिन्नानि। बहुभिः आचार्यैः तेषां विभागस्य विविधाः मार्गाः प्रदर्शिताः। दर्शनेषु भेदस्य एकं मुख्यं कारणं भवति प्रमाणानि। अतः किं दर्शनं किम् प्रमाणम् उररीकरोति इति विषयः समासेन उक्तः। तथैव ईश्वरविषये मोक्षविषये च दर्शनकारेषु मतभेदाः सन्ति। तेषाम् मतानाम्



उल्लेख एव अत्र कृतः। जीव-सृष्टि-मोक्षसाधनानि इत्यादिविषये यद्यपि तेषु वैविध्यमस्ति तथापि विस्तरभिया त्यक्तमिति शम्।



## पाठान्तप्रश्नाः

१. दर्शनशब्दस्य व्युत्पत्तिं दर्शयत।
२. कथं दर्शनशब्दस्यार्थः प्रमा तद्दर्शयत।
३. कथं दर्शनशब्दस्यार्थः प्रमाता तद्दर्शयत।
४. किं शास्त्रम्। परिचाययत।
५. दर्शनस्य आवश्यकताम् उपपादयत।
६. दर्शनस्य व्यापकताम् आविष्कुरुत।
७. पुरुषार्थान् प्रतिपादयत।
८. सुखलिप्सुविभागः वर्णनीयः।
९. दर्शनस्य मूलम् अन्वेष्टव्यम्।
१०. दर्शनस्य व्यवहारयोग्यताम् सम्पादयत।
११. अधिकारभेदेन दर्शनभेदाः इति विषयम् आलोकितं कुरुत।
१२. धर्माद् दर्शनं कथन्नापेतमिति वदत।
१३. दर्शनेषु मतभेदस्य कारणानि आलोचयत।
१४. दर्शनेषु साम्यमुपस्थापयत।
१५. अग्निपुराणानुगृहीतान् दर्शनभेदान् उपस्थापयत।
१६. सर्वदर्शनानुगृहीतान् दर्शनभेदान् उपस्थापयत।
१७. दर्शनभेदेन प्रमाणभेदान् उपन्यस्यत।
१८. दर्शनभेदेन ईश्वरविषयकं मतम् उल्लिखत।
१९. दर्शनभेदेन मोक्षविषयकं मतम् उल्लिखत।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. दृशिर् प्रेक्षणे इति धातोः ल्युट्-प्रत्यययोगेन दर्शनशब्दः निष्पद्यते।
२. ज्ञानसामान्यम्
३. प्रमाणम् प्रमाता प्रमेयम् प्रमा चेति चत्वारः।



४. (क)

५. (ख)

६. (घ)

७. (ग)

८. यत् पुंसः अर्थात् मर्त्यस्य नित्ये इष्टे वा प्रवृत्तिम् उपदिशति विदधाति, अनित्ये निवृत्तिम् उपदिशति तत् शास्त्रम्। तथाहि कारिका- प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥

### उत्तराणि-२

९. धर्मः

१०. बुद्ध्या युक्तिभिश्च।

११. जामितापरिहाराय मनोरञ्जनं कर्तुं नाटकानि काव्यानि उपन्यासाः उद्यानानि क्रीडादयश्च सन्ति।

१२. दर्शनस्य महिमा सर्वान् अतिशेते।

१३. दर्शनं सुखलाभस्य अदृष्टान् अलौकिकान् उपायान् प्रतिपादयति।

१४. दर्शनस्य।

### उत्तराणि-३

१५. सुखम्।

१६. दुःखम्।

१७. सुखं द्विविधम्। नित्यम् अनित्यं च। नित्यं सुखं मोक्षः। अनित्यं सुखम् कामः।

१८. नित्यं सुखं मोक्षः।

१९. अनित्यं सुखम् कामः।

२०. धर्मः।

२१. अधर्मः

२२. वेदविहितं कर्म।

२३. वेदनिषिद्धं कर्म।

२४. 'इदं मदिष्टसाधनम्' इति ज्ञानम् प्रवृत्तिं प्रति कारणं भवति।

२५. अर्थ्यते इति अर्थः। पुरुषस्य अर्थः पुरुषार्थः। अथवा पुरुषेण अर्थ्यते स पुरुषार्थः। अर्थात् पुरुषः नरो वा नारी वा यद् कामयते इच्छति अर्थयते स एव पुरुषार्थः।

२६. पुरुषार्थाः धर्मार्थकाममोक्षाः चत्वारः।

२७. धर्मार्थौ गौणौ। काममोक्षौ मुख्यौ।

२८. मोक्षः परमपुरुषार्थः नित्यत्वात्।



२९. यत्कृतकं तदनित्यम् इति दृष्टानुमानोभयसिद्धः नियमः।

३०. चार्वाकाः पूर्वमीमांसकाः मुमुक्षवः च।

३१. (घ)

३२. (घ)

३३. (क)

३४. (ख)

**उत्तराणि-४**

३५. जीवः सृष्टिः ईश्वरः ब्रह्म बन्धः मोक्षः मोक्षसाधनम् इति विषयाः।

३६. व्यवहारयोग्यानि।

३७. दर्शनशास्त्रं सिद्धान्तान् निश्चिनोति। स्मृतिः विधिनिषेधमुखेन तेषां सिद्धान्तानां जीवने व्यवहाराय प्रतिपादनं करोति। पुराणादिकं च तेषां जीवनचरितं वर्णयति यैः स्वजीवनं दर्शनस्य सिद्धान्तानुकूलं स्मृतिशास्त्रसम्मतं च चालितम्।

३८. प्रभावः अस्ति।

३९. (क)

४०. (ग)

४१. (ख)

**उत्तराणि-५**

४२. शुद्धोदनः

४३. सिद्धार्थः

४४. (क)

**उत्तराणि-६**

४५. एकादश

४६. १६

४७. (ग)

४८. (घ)

४९. (घ)

५०. (घ)

५१. (घ)

५२. (घ)



### उत्तराणि-७

५३. ग)

५४. घ)

५५. क)

५६. घ)

५७. ख)

५८. १-ग, २-घ, ३-ख, ४-क, ५-च, ६-ङ

### उत्तराणि-८

५९. ख)

६०. ग)

६१. क)

६२. क)

६३. घ)

६४. क)

६५. ख)

॥ इति प्रथमः पाठः ॥



# २

# भारतीयविद्याविभागः

## प्रस्तावना

भारतभूमौ उद्भूतासु विद्यासु याः विलुप्ताः, याः विद्यामानाः, ताः सर्वाः साक्षात् परम्परया वा वेदाद् एव समुद्भूताः इति अस्ति भारतीया मूलदृष्टिः। वेदस्य कोऽपि रचयिता कर्ता वा नास्ति। यथा फलम् भूमौ पतति, न तु आकाशं प्रति गच्छति। अयमस्ति नियमः गुरुत्वाकर्षणस्य। तस्य नियमस्य कश्चित् द्रष्टा भवति, न तु स्रष्टा। तद्वद् जगतः सृष्टिप्रलयादिविषयकं बहुविधं ज्ञानम् ऋषयः लेभिरे। तदेव ज्ञानम् वेदः इति कथ्यते। तज्ज्ञानं नित्यम्। अतः वेदः नित्यः। तथाहि व्यासवचनम्-

युगान्तेऽर्हितान् वेदान् सेतिहसान् महर्षयः।

लेभिरे तपसा पूर्वमनुज्ञाता स्वयंभुवा॥

यथा वृक्षः बीजात् जायते, तस्माद् वृक्षाद् अपरं बीजं जायते। इत्थं क्रमः प्रचलति। जगतः प्रलयः भवति। तद् बीजरूपेण तिष्ठति। ततः तस्य उत्पत्तिः भवति। इत्थं जगत् चक्रवत् प्रचलति। अयं चक्रवादः। यदा जगतः प्रलयः भवति तदा वेदानाम् अपि अन्तर्धानं भवति। यदा जगतः सृष्टिः भवति तदा ऋषयः तपसा वेदान् लभन्ते। तत्र स्वयंभूः भगवान् सृष्टिकर्ता अनुगृह्णाति।

इत्थम् भारतीयविद्यानां कियान् विस्तरः अस्ति। विद्यानां विभाजनं कथं भवति। विद्यानां प्रयोजनं किम् इति समग्रोऽयं विषयः संस्कृतस्य छात्रेण ज्ञेयः इति अतः अयं पाठः अत्र अन्तर्भावितः। अपि च भारतीयदर्शनानि एतस्मिन् विद्यासागरे कुत्र वर्तन्ते इत्यपि ज्ञानं छात्रस्य भवतु इति मनीषा।

अपरमपि कारणं यद् विद्यासागरस्य चित्रं दृष्ट्वा यस्मै यद् रोचते स तद् उपास्ताम्। किं सारभूतं तदपि झटिति अवगच्छति चेत् सारहीनं त्यक्त्वा सारभूतम् गृह्णीयात्। तथाहि सुभाषितम्-

अनन्तशास्त्रं बहु वेदितव्यं

स्वल्पश्च कालो बहवश्च विघ्नाः।

यत् सारभूतं तदुपासितव्यं

हंसो यथा क्षीरमिवाम्बुमध्यात्॥

**सरलार्थः**- अनन्तानि शास्त्राणि सन्ति। यद् वेदितव्यं ज्ञातव्यं तदपि बहु वर्तते। परन्तु कालः स्वल्पः अस्ति। तत्रापि विघ्नाः प्रतिबन्धकाः बहवः सन्ति। एवं स्थिते किं कुर्याद् मर्त्यः। यत् सारभूतम्

अस्ति तद् उपासितव्यम् अवलम्बनीयम् अनुष्ठेयम् च। कथम्। यथा हंसः नीरक्षीरमिश्रणात् नीरं त्यक्त्वा क्षीरं विविच्य गृह्णाति तथा कुर्यात्।



## उद्देश्यानि

पाठस्यास्याध्ययनेन -

- विद्यानां तात्पर्यम् अवगच्छेत्।
- सकलविद्यानां प्रयोजनानि अवधारयेत्।
- विद्याविभाजनस्य प्रकारान् जानीयात्।
- विद्याविभाजनस्य कारणानि बुद्ध्यात्।
- बहूनां विद्यानां नामानि ज्ञास्यति।
- विभिन्नानां प्रस्थानाम् प्रयोजनम् अवधारयेत्।
- भारतीयस्य संस्कृतवाङ्मयस्य प्रारूपं जानीयात्।

## २.१) भूमिका

भारतवर्षे आर्याणां धर्मः वैदिक एव। सर्व एव वाङ्मयप्रपञ्चः वेदादेव समुद्भूत इति नास्ति कस्यापि विमतिः। सोऽयम् आस्तिकानां वाङ्मयवृक्षः कथं वेदमूलः इति दृश्यते जिज्ञासूनां कौतुकम्। काश्चिद् विद्याः साक्षाद् वेदादेव समुद्भूताः, काश्चन वेदस्य प्रयोजनसिद्धये एव प्रवृत्ताः। काश्चन वेदात् सूत्रम् आदाय विस्तारं प्राप्ताः। तासां कथं वेदोपयोगिता इति केचित् विमृश्यन्ति। तत्र यद्यपि साक्षाद् यज्ञादिनिर्वहणे वेदार्थकरणे वा तासाम् उपयोगः स्यात् तथापि वेदतात्पर्यस्य प्रचाराय पोषणाय च तासाम् अभिवृद्धिः इति न कश्चिद् विरोधः।

## २.२) विद्यानां तात्पर्यम्

वेदैश्च सर्वैरहमेव वेद्यः इति श्रीमद्भगवद्गीतायाम् आह श्रीभवगान् वासुदेवः। अर्थात् सर्वे वेदाः साक्षात् अथवा परम्परया भगवन्तम् एव प्रतिपादयन्ति। यदपि वेदे आम्नातं ततः अन्ततोगत्वा भगवान् एव वेदितव्य इति स्पष्टम् अस्माद् गीतावचनाद्। यथा वेदस्य तथा अन्येषामपि वेदोद्भूतानां शास्त्राणाम् इति सुबोधमेव। अत एव सर्वेषां शास्त्राणां साक्षात् परम्परया वा भगवति एव तात्पर्यमस्ति। तथाहि शिवमहिम्नःस्तोत्रे पुष्पदन्तोक्तिः-

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥

**सरलार्थः** - ऋग्यजुःसामानि इति त्रयी, कापिलं साख्यं पातञ्जलो योगः पाशुपतं वैष्णवमिति तन्त्रद्वयम् इत्यादीनि विभिन्नानि प्रस्थानानि सन्ति। तत्र केचित् इदं परम् अतः पथ्यम्, अदः परम् अतः



पथ्यम् इति रुचिवैचित्र्यात् प्राग्भवीयतत्तद्वासनावशेन रुचिभेदात् ऋजुपथम् सरलपथम् कुटिलपथम् वक्रपथम् वा अवलम्बन्ते। तत्र केचित् त्वाम् शिवमेव साक्षात् प्राप्नुवन्ति केचित् परम्परया इति इयान् भेदः। यथा काश्चन नद्यः साक्षात् समुद्रमेव गच्छन्ति। काश्चन वक्राः बहु भ्रमणं कृत्वा अन्यनद्या सह मिलित्वा सागरं गच्छन्ति।

केन किं ज्ञातव्यं, केन क्रमेण ज्ञातव्यं, कस्मिन् लब्धे किं कर्तव्यम् इत्यादिविवेकाय अत्र उपनिषद्वचः प्रमाणत्वेन दीयते-

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति॥ (मैत्रायणी उपनिषद् ६.२२)

अत्र शब्दब्रह्म वेदः एव। यः शब्दब्रह्म सम्यक् जानाति स परं ब्रह्म अधिगच्छति। मोक्षाख्यं परमपुरुषार्थं लभते। अतः अत्रापि स्पष्टमेव शब्दब्रह्मज्ञानेन परब्रह्मज्ञानं भवतीति इति शब्दब्रह्म अध्येतव्यम्।

शब्दब्रह्म अत्र वेदः एव। स च वेदः बहुविधः, तस्मात् उद्भूतानि च शास्त्राणि बहुविधानि सन्ति। तानि प्रस्थानानि कथ्यन्ते।

## २.३) विद्याप्रयोजनम्

यावत्यः विद्याः वर्तन्ते ताः परस्परम् पोषिकाः सन्ति। अतः का विद्या किम् प्रयोजनम् उद्दिश्य प्रवृत्ता इति विषये स्पष्टता आवश्यकी। अन्यथा विद्यानां परस्परविरोधः, तासु भ्रमः इत्यादय आक्षेपाः सम्भवन्ति आस्तिकेषु अपि।

सर्वाः विद्याः मानवम् उद्दिश्य प्रवर्तन्ते। मनुष्यः सुखम् इच्छति। सुखम् सोपाधिकम् निरुपाधिकं चेति द्विविधम्। सोपाधिकम् कर्मजन्यम्। निरुपाधिकम् अजन्यं नित्यम्। केचित् कर्मजन्यम् सुखम् इच्छन्ति। केचित् नित्यम् सुखम् इच्छन्ति। एतस्य सुखस्य लाभाय उपायाः लौकिकालौकिकभेदेन द्विविधाः। लौकिकोपायाः प्रत्यक्षानुमानगम्याः। अलौकिकास्तु आगमगम्या एव। आगमश्च इन्द्रियातीतं ज्ञानम् यद् ऋषिभिः तपसा लब्धम्। किञ्च भगवता स्वयम् अवतीर्य प्रोक्तं गीतादिकं च। तदिदं सकलं ज्ञानं प्रायेण संस्कृतभाषया निबद्धम्। संस्कृतभाषा लौकिकवैदिकभेदेन द्वेधा। आगमोऽपि वेदः वैदिकभाषया निबद्धः। महाभारतादिकं तु लौकिकसंस्कृतेन निबद्धम्।

वेदमन्त्राणाम् स्वराः यथायथम् उच्चारिताः चेदेव इष्टफलं लभ्यते अन्यथा अनिष्टमपि फलति। अत एव स्वरज्ञानाय शिक्षाशास्त्रस्य आविर्भावः अभूत्।

संस्कृतभाषा व्याकरणज्ञानं विना लघुना उपायेन ज्ञातुम् अशक्या। अत एव व्याकरणस्य आवश्यकता अनुभूता। व्याकरणस्य च आविष्कारः जातः। स च उपायः यथा- व्याकरणे प्रतिपदं प्रकृतिप्रत्ययविभागः कल्प्यते। तयोः योगेन साधुपदानि व्याक्रियन्ते। इत्थं व्याकरणं साधुपदानि कानि इति ज्ञानं कारयति। रक्षा ऊहः आगमः लघुः असन्देहः इति एतानि व्याकरणाध्ययनस्य मुख्यानि प्रयोजनानि सन्ति। अन्यानि गौणप्रयोजनानि अपि सन्ति। तानि सविस्तरं महाभाष्ये सुव्यक्तानि।



शिक्षया स्वरज्ञानं व्याकरणेन साधुशब्दज्ञानं च भवति। परन्तु कस्य शब्दस्य कति के च अर्थाः इति ज्ञानं न भवति। अतो हेतोः निरुक्तं नाम शास्त्रम् समागतम्। तस्मिन् शास्त्रे वैदिकशब्दानाम् अर्थविषयकं ज्ञानं भवति।

वेदमन्त्राणां छन्दः अस्ति। विविधानि छन्दांसि सन्ति। तत्र छन्दोभेदेन प्रयोक्तृभेदः भवति। विशिष्टच्छदसः मन्त्रः विशिष्टेन जनेन प्रयोक्तव्य इति विधानानि सन्ति। अतः एव छन्दोज्ञानं विना मन्त्रप्रयोगः न सम्भवति। अत एव छन्दोज्ञानाय छन्दःशास्त्रस्य अवतारः।

इत्थम् एतच्चतुष्टयं वेदशब्दराशेः ज्ञानाय आवश्यकम्।

विशिष्टे काले कर्मानुष्ठानं क्रियते चेद् न्यूनाधिकं फलं श्रूयते। अतः कालज्ञानम् प्रयोजनम् येन समुचिते काले कर्माणि अनुष्ठितानि भवेयुः। एतदर्थम् ज्यौतिषशास्त्रम् उदितम्।

यज्ञादिकर्मणाम् साक्षात् अनुष्ठानं केन क्रमेण कर्तव्यं कदा कतमः मन्त्रः केन पठनीयः, केन का क्रिया कथं सम्पादनीया, यज्ञादीनां स्थण्डिल-वेदिमण्डपादिनिर्माणं कथं कर्तव्यम्, ऋत्विजाम् आचारः कथं स्यात् इत्यादयो नैके विषयाः सन्ति यद्विषये स्पष्टता आवश्यकी। अत एव कल्पस्य आरम्भः जातः।

इत्थम् स्वरज्ञानाय शिक्षा। साधुपदज्ञानाय व्याकरणम्। शब्दार्थज्ञानाय निरुक्तम्। छन्दोज्ञानाय छन्दःशास्त्रम्। कर्मानुष्ठानस्य कालज्ञानाय ज्यौतिषम्। कर्मप्रविधिज्ञानाय कल्पः इतीमानि षडङ्गानि वेदस्य प्रसिद्ध्यन्ति।

कर्मप्रतिपादनाय वेदस्य प्रायः ९५ प्रतिशतं भागः व्यापृतः अस्ति। तत्र कर्मविषयः निर्णयः न सुकरः। तस्य अंशतः समाधानं वेदस्य ब्राह्मणभागे भवति, किञ्चिच्च कल्पसूत्रेषु। परन्तु ततोऽपि अधिकं विवेचनम् अपेक्षितम्। अतः एव पूर्वमीमांसायाः उद्भवः जातः। तत्र वेदे विद्यमानस्य आपातविरोधस्य परिहाराय नैकाः युक्तयः प्रदर्शिताः।

वेदः कर्मद्वारा सोपाधिकं सुखमेव प्रतिपादयति, सुखमयं जीवनचक्रं स्वर्गादिगमनद्वारा भवतु इति मीमांसकानाम् प्रधानम् प्रतिपाद्यम्। परन्तु उपनिषत्सु प्रतिपादितस्य तत्त्वस्य उपेक्षा तैः कृता। तमेव वेदांशम् आदाय उत्तरमीमांसा समागता। अत्र निरुपाधिकं मोक्षात्मकं सुखं प्राधान्येन प्रतिपाद्यते। अत एव कर्ममीमांसा, ज्ञानमीमांसा, धर्ममीमांसा ब्रह्ममीमांसा, कर्मकाण्डं ज्ञानकाण्डमिति द्वे मीमांसे दृश्येते।

उत्तरमीमांसायाः एव व्याख्यानभेदात् अद्वैतवादिनः विशिष्टाद्वैतवादिनः द्वैतवादिनः द्वैताद्वैतवादिनः शुद्धाद्वैतवादिनः इति रूपेण विविधाः सम्प्रदायाः समुत्पन्ना जीवन्ति अद्यत्वेऽपि। एषु कैश्चित् केवलं वेदस्य अन्तिमभागः उपनिषद् एव शरणम् कृता। कैश्चिद् पुराणतन्त्रादितः अपि केचिद् विषयाः स्वसम्प्रदाये संगृहीताः।

वेदः ऋषिलब्धः शब्दराशिः ज्ञानराशिश्च। वेदस्य प्रतिपाद्यमानः विषयः दर्शनेषु सुष्ठु आलोचितः। तत्र वर्णाश्रमभेदेन बहुधा विभक्तस्य समाजस्य कृते अधिकारभेदम् अवलम्ब्य धर्मानुष्ठानस्य विधिनिषेधादिकं यथासम्भवम् सविस्तरं प्रतिपादनीयम् भवति। अतः एव धर्मशास्त्राणि स्मृतिशास्त्राणि प्रणीतानि।



## भारतीयदर्शनम्

वेदोक्तसिद्धानाम् मीमांसासु विचारं कृत्वा स्मृतिशास्त्रोक्तविधिना परिपालनेन इष्टफलप्राप्तिः यस्य भवति स जनः कृतकृत्यः, धन्यः। तादृशानाम् आदर्शमानवानाम् जीवनचरितं जनानां पुरस्ताद् तथा प्रकटनीयम् येन जनाः प्रेरिताः भवेयुः। अपि च जगतः सृष्ट्यादिविषये इतोऽपि सूक्ष्मं विवेचनम् कर्तव्यम् अस्ति। इदं सर्वमपि पुराणानि कुर्वन्ति। भगवान् स्वयं बहुधा धरायाम् अवतरति। अतः तमवलम्ब्यापि पुराणानि प्रवर्तन्ते।

केचित् जनाः युक्तिप्रियाः भवन्ति। केवलम् आगमे उक्तम्। अतः तत्तथैव स्वीकर्तुं न पारयन्ति। अतः युक्त्या प्रतिपादनीया गौतमीयं न्यायशास्त्रं, काणादं वैशेषिकशास्त्रं, कापिलं सांख्यशास्त्रं च प्रवृत्तम्।

मनसः सूक्ष्मविवेचनं कृत्वा विभिन्नासु अवस्थासु केन किं साधनम् अवलम्बनीयम् इति अति विस्तृतं विवेचनं लभ्यते योगशास्त्रे। तावती सूक्ष्मता अन्यत्र नास्ति।

पुरुषार्थलाभाय शरीरम् आद्यं खलु धर्मसाधनम् इति उक्त्या शरीरस्य नीरोगतायै आयुर्वेदशास्त्रं प्रवृत्तम्। समाजः जनपदेषु राष्ट्रेषु च विभक्तः। केचित् साधवः सन्ति केचित् चौराः अपि सन्ति। अतः शत्रुचौरादिभ्यः रक्षणाय धनुर्वेदस्य आविष्कारः अभवत्।

मनोरञ्जनम् इति महान् विषयः अस्ति। मानवः सदा यन्त्रवद् भवितुम् नार्हति। अतः एव मनोरञ्जनस्य गीतवादित्रनृत्यादिना उपायाः कल्पिताः गान्धर्ववेदेन।

समाजे जीविकार्थं कृषिः पशुपालनम् द्रव्यविनिमयः इत्यादिविषयाः स्वभावतः उद्भवन्ति। अपि च राजा समाजस्य प्रतिनिधित्वेन सेनानिर्माणद्वारा प्रजापालनं करोति। अतः राज्यचालनमिति महान् विषयः अपि आवश्यको भवति। इदं सर्वमपि संगृहीतं भवति अर्थवेदे। अर्थवेदः एव अर्थशास्त्रम्।

भगवान् स्वयम् अथवा ऋषयः अपि मध्ये मध्ये विविधान् धर्ममार्गान् उपदिष्टवन्तः यस्य साक्षादुल्लेखः वेदे नास्ति, अथवा वेदस्यैव व्याख्यारूपः उपदेशः भवति, अस्य च वेदेन विरोधोऽपि नास्ति। तादृश्यः बह्व्यः विद्याः सन्ति यासाम् समाजे प्रचारप्राचुर्यमस्ति। पञ्चरात्रम् शैवागमः इत्यादि तन्त्रम्, गीता इत्यादयः अत्र अन्तर्भवन्ति।

जीवनस्य कृष्यादिकार्याणि उपलक्ष्य मनोरञ्जनादिकम् उपलक्ष्य विद्याप्रदानम् च उपलक्ष्य विविधाः विद्याः अपि सन्ति। ताः चतुःषष्टिः कलाः भवन्ति।

यथा किमपि एकं गृहं निर्मातव्यं चेत् इष्टिका सिकताः जलम् काष्ठम् लौहम् वास्तुविद्या इत्यादयः बहुविधाः विद्याः द्रव्याणि च आवश्यकानि भवन्ति। सर्वेषामपि भवननिर्माणे विशिष्टम् अवदानम् अस्ति। तद्वद् मानवजीवनरूपिसौधस्य सुष्ठु परिचालनाय एताः विद्याः सन्ति। सर्वासाम् अपि उपयोगिता अस्ति। इत्थम् समग्रं चित्रं मनसि सम्यग् निधाय विद्यानाम् उपासना क्रियते चेत् दिग्भ्रान्तः न भवति जनः। यथायथम् विद्यानाम् उपयोगितां बुद्ध्वा तासाम् अर्जने रक्षणे प्रयोगे प्रदाने च प्रयत्नपरो भवति।

द्विविधो हि वैदिको धर्मः प्रवृत्तिलक्षणः निवृत्तिलक्षणश्च। यः जन्मजन्मान्तरेषु सुखमयं जीवनं यापयितुम् इच्छति स प्रवृत्तिमार्गं सेवेत। अथातो धर्मजिज्ञासा इत्यादिना पथा गच्छेत्। यश्च पुनर्जन्मादिकं नैव वाञ्छति स मुमुक्षुः निवृत्तिमार्गं सेवेत। अथातो ब्रह्मजिज्ञासा इत्यादिना पथा गच्छेत्। इत्थं मार्गद्वयं व्यवस्थापितम्। प्रवृत्तिमार्गः धर्ममार्गः, निवृत्तिमार्गः अध्यात्ममार्गः इत्यपि व्यवहारः भवति।

एवं सति यो यदिच्छति तस्य स मार्गः। प्रवृत्तिमार्गः अभ्युदयसाधकः। निवृत्तिमार्गः निःश्रेयससाधकः इति। प्रदत्तेषु सर्वेषु शास्त्रेषु स्वपथि यदनुकूलं तदुपासितव्यम्। स च विवेकः दर्शनस्य अध्ययनेन स्यात्।

संस्कृतस्य छात्रैः अवश्यमेवायं विद्याप्रपञ्चः सप्रयोजनं बोद्धव्य इति अस्मदभिप्रायः। अयं मनोरथः अनेन प्रयासेन अंशतोऽपि सफलीभविष्यति इति आशास्महे।

निवृत्तिमार्गस्य प्राधान्येन प्रतिपादनाय षड् आस्तिकदर्शनानि षट् च नास्तिकदर्शनानि इति द्वादश दर्शनानि भारतभूमौ समुद्भूतानि। तानि भारतीयदर्शनानि। वैदिकपरम्परायां नास्तिकदर्शनानाम् नान्तर्भावः। परन्तु आस्तिकदर्शनानां तु वेदादेव समुद्भवः। अतः समग्रेऽपि वेदवेदमूलकवाङ्मये कस्य दर्शनस्य किं स्थानम् इति ज्ञानाय अत्र अस्मिन् पाठे अष्टादश विद्यास्थानानि प्रस्तूयन्ते। वाङ्मयस्य समग्रं प्रारूपं बुद्ध्वा ज्ञानसम्पन्नो भूत्वा पुरुषार्थसिद्धये यतेत भ्रान्तिरहितः।

**प्रस्थानम्**

प्रस्थानं किम्। स्वाभीष्टलाभाय नरो यम् उपायम् अवलम्बते स उपाय एव प्रस्थानम् कथ्यते। स्वाभीष्टलाभाय आत्मसमाधानाय आत्मसाक्षात्काराय वा **प्रस्थीयते अनेन इति प्रस्थानम्** इति तस्य व्युत्पत्तिः। तानि च प्रस्थानानि कानि इति भवति जिज्ञासा समेषाम्। इष्टसिद्धेः उपायः प्रस्थानम्। किमिष्टं किमनिष्टम् इति ज्ञानं तत्प्राप्तिः परिहारश्च इत्यनयोः उपायाः शास्त्रेषु सुनिबद्धाः सन्ति। कस्य शास्त्रस्य किं प्रतिपाद्यं, तस्य च इष्टसाधने कथं कियच्च अवदानम् इति ज्ञानम् अस्य पाठस्य अध्ययनेन भवेत्। तत्रायं विषयः क्रमशः उपस्थापयिष्यते। इत्थं विद्यानाम् अपरं नाम प्रस्थानमपि भवति। बहुत्र प्रस्थानशब्दः योगरूढः अस्ति। तत्र अत्यन्तं सीमितार्थं द्योतयति। अन्यत्र च तस्य व्यापकतया प्रयोगऽपि दृश्यते।

## २.४) विद्या

कति काश्च विद्याः। विद्यानां बहूनि नामानि सन्ति। सर्वासाम् उल्लेखः कर्तुं न शक्यते। अपि च यासाम् उल्लेखः कृतः तत्रापि संकरः अनिवार्यः अस्ति। तथापि अत्र एका तालिका दीयते। ततः परं तासां विद्यानाम् विभाजनस्य विविधाः पन्थानः प्रदर्शयिष्यन्ते।

१. ऋग्वेदः
२. यजुर्वेदः
३. सामवेदः
४. अथर्ववेदः
५. शिक्षा
६. व्याकरणम्
७. निरुक्तम्
८. छन्दः (पिङ्गलम्)
९. ज्यौतिषम्
१०. कल्पः
११. आयुर्वेदः
१२. धनुर्वेदः
१३. गन्धर्ववेदः
१४. अर्थवेदः (अर्थशास्त्रम्)
१५. पुराणम्
१६. धर्मशास्त्रम्



१७. न्यायः
१८. वैशेषिकम्
१९. सांख्यम्
२०. योगः
२१. मीमांसा
२२. वेदान्तः
२३. इतिहासः
२४. स्मृतिः
२५. नीतिशास्त्रम्
२६. कामशास्त्रम्
२७. शिल्पशास्त्रम्
२८. अलङ्कारशास्त्रम्
२९. काव्यम्
३०. अवसरोक्तिः (शास्त्रीयसंकेतादिः)
३१. यावनमतम्
३२. बौद्धदर्शनम्
३३. जैनदर्शनम्
३४. चार्वाकदर्शनम्
३५. तन्त्रम्
३६. चतुःषष्टिः कलाः

## २.४.१) चतुःषष्टिः कलाः

भारतीयसमाजे चतुःषष्टिः कलाः प्रवृत्ता आसन्। तासाम् उल्लेखः अत्र क्रियते। छात्राणाम् अनेन ज्ञानं कौतूहलं च स्याद् यद् प्राचीने भारते एतावत्यः कलाः तासां विद्याः अत्यन्तं निपुणतया समाजस्य व्यवहारे आसन् इति। चतुःषष्टिः कलाः भिन्नग्रन्थेषु भिन्ननामभिः उक्ताः। अपि च विषयेऽपि भेदः अस्ति। अत्र न केवलं चतुःषष्टिः अपि तु तदधिकानां कलानाम् उल्लेखः कृतः। अधिकविस्तरस्तु अन्यत्र अनुसन्धेयः।

१. गीतम्
२. वाद्यम्
३. नृत्यम्
४. नाट्यम्
५. आलेख्यम्
६. विशेषकच्छेद्यम् (तिलकाकारपत्रादिच्छेदनम्)
७. तण्डुलकुसुमयलिविकाराः
८. पुष्पास्तरणम्
९. दशनवसनाङ्गरागाः
१०. मणिभूमिकाकर्म (भूमिशिलासु मणियोजनम्)
११. शयनरचनम्
१२. उदकवाद्यम्
१३. उदकाघातः
१४. चित्रायोगाः
१५. माल्यग्रथनविकल्पाः
१६. केशशेखरापीडयोजनम्
१७. नेपथ्ययोगाः
१८. कर्णपत्रभङ्गाः
१९. गन्धयुक्तिः
२०. भूषणयोजनम्
२१. इन्द्रजालम्
२२. कौचुमारयोगाः (बलवीर्यवर्धनौषधिः)
२३. हस्तलाघवम् (द्रुतहस्तप्रयोगः)
२४. चित्रशाकापूपभक्ष्यविकारक्रिया
२५. पानक-रस-रागासवयोजनम्
२६. सूचीवापकर्म



२७. वीणाडमरुकवाद्यानि

२८. सूत्रक्रीडा

२९. प्रहेलिका/कूटजवाणीज्ञानम्

३०. प्रतिमाला(श्लोकवाचनम्)

३१. दुर्वचकयोगाः

३२. पुस्तकवाचनम्

३३. नाटिकाख्यायिकादर्शनम्

३४. काव्यसमस्यापूरणम्

३५. पृष्ठपट्टिकावेत्रवाणविकल्पाः

३६. तर्कूकर्माणि (काष्ठादिछेदनम्)

३७. तक्षणम् (काष्ठवस्तुनिर्माणम्)

३८. वास्तुविद्या

३९. रूप्यरत्नपरीक्षा

४०. धातुवादः

४१. मणिरागज्ञानम्

४२. आकरज्ञानम्

४३. वृक्षायुर्वेदयोगाः

४४. मेषकुक्कुटलावकयुद्धविधिः

४५. शुकसारिकाप्रलापनम्

४६. उत्सादनम् (हस्तपादादिनिपीडनम्)

४७. केशमार्जनकौशलम्

४८. अक्षरमुष्टिकाकथनम् (मुष्टिसंकेतेन भाषा)

४९. म्लेच्छितकविकल्पाः (सांकेतिकभाषा)

५०. देशभाषाज्ञानम्

५१. पुष्पशकटिका

५२. निमित्तज्ञानम्

५३. यन्त्रमातृका (यन्त्रनिर्माणम्)

५४. धारणमातृका (स्मरणकला)

५५. सम्पाठ्यम् (काव्यकण्ठपाठस्पर्धा)

५६. मानसी काव्यक्रिया (श्लोके पदपूरणम्)

५७. क्रियाविकल्पाः (काव्यालंकारज्ञानम्)

५८. छलितकयोगाः (रूपवाणीगोपनम्)

५९. अभिधानकोषः

६०. छन्दोज्ञानम्

६१. वस्त्रगोपनानि

६२. द्यूतविशेषः

६३. आकर्षणक्रीडा (अक्षपाशक्रीडा)

६४. बालकक्रीडनकानि

६५. वैनयिकीनां वैजयिकीनां च विद्यानां ज्ञानम् (विनयः विजयः)

६६. वैतालिकीनां विद्यानां ज्ञानम्

६७. व्यायामविद्या

रामायणे चतुषष्टिकलासु कासाञ्चित् कलानाम् उल्लेखो लभ्यते। यदा लवकुशौ वाल्मीकिरचितं रामायणम् अयोध्यायाम् अगायताम् तदा रामः बहुविधान् विदुषः समाह्वयत् गीतस्य श्रवणाय परीक्षणाय च। तेनेदं ज्ञायते यद् एताः विद्याः कलाः च रामायणकालेऽपि सुप्रतिष्ठिता आसन्। साहित्यं समाजजीवनस्य दर्पणः भवति। अतः अस्मात् साहित्यात् तदानीन्तनसमाजस्य कलासु वैविध्यं नैपुण्यं रुचिः इत्यादिविषयान् वयमवगन्तुं शक्नुमः। तत्र रामः यान् आहूतवान् तेषाम् उल्लेखः अत्र क्रियते एकवचनेन- १)महामुनिः २)पार्थिवः ३)पण्डितः(-परमहंसः) ४)नैगमः(-वेदाभिज्ञः) ५)पौराणिकः ६)शब्दविद् ७)स्वरलक्षणज्ञः(-षड्जादिस्वराणाम्) ८)लक्षणज्ञः(-सामुद्रिकः) ९)गान्धर्वः १०)नैगमः(-पौरः पुरवासी) ११)पादाक्षरसमाज्ञः १२)छन्दोज्ञः(-वृत्तज्ञः) १३)कलामात्राविशेषज्ञः(-कलाः स्वराः, तेषां मात्राः एकद्वित्रिलक्षणाः, तेषां विभागज्ञः) १४)ज्योतिषज्ञः १५)प्रस्तारविद् १६)क्रियाकल्पविद् (-कल्पक्रियाभिज्ञत्वहेतक-विचारकुशलः) १७)कार्यविशारदः १८)हेतूपचारकुशलः(-केवलव्यवहारकाले



युक्तिप्रयोगप्रतिपादनसमर्थः) १९)हैतुकः(-हेतुप्रतिपादननिपुणः नैयायिकः तार्किकः) २०)छन्दोविद् (-वैदिकच्छन्दोविद् वैदिकपादादिलक्षणज्ञः) २१)पुराणज्ञः(-प्राचीनवस्तुविद्) २२)चित्रज्ञः (-आलेख्यकरणे समर्थः, चित्रकाव्यकरणे समर्थः वा) २३)वृत्तज्ञः(-धर्मशास्त्रमुखेन सदाचारज्ञः) २४)सूत्रज्ञः(-अल्पोक्त्यैव ज्ञानसमर्थः/ पदवाक्यादिसूत्राणि, तज्ज्ञः वा) २५)गीतनृत्यविशारदः इति।

तां स शुश्राव काकुत्स्थः पूर्वाचार्यविनिर्मिताम्।
अपूर्वां पाठ्यजातिं च गेयेन समलङ्कृताम्।। ७.९४.२ ।।
प्रमाणैर्बहुभिर्बद्धां तन्त्रीलयसमन्विताम्।
बालाभ्यां राघवः श्रुत्वा कौतूहलपरोऽभवत्।। ७.९४.३ ।।
अथ कर्मान्तरे राजा समाहूय महामुनीन्।
पार्थिवांश्च नरव्याघ्रः पण्डितान्नैगमांस्तथा।। ७.९४.४ ।।
पौराणिकाञ्छब्दविदो ये च वृद्धा द्विजातयः।
स्वराणां लक्षणज्ञांश्च उत्सुकान् द्विजसत्तमान्।। ७.९४.५ ।।
लक्षणज्ञांश्च गान्धर्वान्नैगमांश्च विशेषतः।
पादाक्षरसमासज्ञांश्छन्दःसु परिनिष्ठितान्।। ७.९४.६ ।।
कलामात्राविशेषज्ञाञ्ज्योतिषे च परं गतान्।
क्रियाकल्पविदश्चैव तथा कार्यविदो जनान्।। ७.९४.७ ।।
(भाषाज्ञानिङ्गितज्ञांश्च नैगमांश्चाप्यशेषतः।)
हेतूपचारकुशलान् वचने चापि हैतुकान्।। ७.९४.८ ।।
छन्दोविदः पुराणज्ञान् वैदिकान् द्विजसत्तमान्।
चित्रज्ञान् वृत्तसूत्रज्ञान् गीतनृत्यविशारदान्।। ७.९४.९ ।।
(शास्त्रज्ञान् नीतिनिपुणान् वेदान्तार्थप्रबोधकान्।)
एतान् सर्वान् समानीय गातारौ समवेशयत्।।७.९४.१० ।।



## पाठगतप्रश्नाः

१. भारतीयपरम्परायाम् ऋषयो वेदस्य कर्तारः द्रष्टारः वा।
२. ऋषयो वेदान् कथं लेभिरे।
३. आर्याणां धर्मस्य मूलम् किम्।
४. प्रस्थानपदस्यार्थः कः।



५. कलाः कति।

६. कतिविधः वैदिकः धर्मः। भेदान् लिखत।

७. अभ्युदयः केन मार्गेण भवति।

## २.५) विद्याविभाजनम्

विद्यानाम् विभागस्य बहुविधाः प्रकाराः सन्ति। शिवमहिम्नस्तोत्रस्य व्याख्याने प्रस्थानभेदः मधुसूदनसरस्वतीवर्येण प्रदर्शितः। अयं च प्रकारः वस्तुतः पुराणसम्मतः ततः गृहीतश्च। तत्र स अष्टादश विद्याः प्रदर्शयति। तासां विभाजनं च करोति।

कौटिलीये अर्थशास्त्रेऽपि चाणक्यः स्वयं पूर्वाचार्याणां मतानि उद्धरति, स्वकीयम् अभिप्रायं च प्रकटयति। एतेषु आचार्येषु विद्याविभाजनस्य विभिन्नाः प्रकाराः दृश्यन्ते। अत एव यथास्थानम् उल्लिख्य विभाजनं प्रदर्शयिष्यते। ततः परम् केनचित् क्रमेण तासु कासाञ्चिद् विद्यानाम् संक्षिप्तः परिचयः प्रदास्यते। सर्वासां विद्यानां परिचयः सुदुष्करः अस्ति। एवञ्च परिचये प्राधान्येन विद्यायाः आरम्भः आचार्यः ग्रन्थः विभागः विषयः प्रयोजनम् इतीदृशाः बिन्दवः यथासम्भवम् आलोचयिष्यन्ते।

## २.६) विद्याविभाजनस्य प्रकारः-१

**विद्यास्थानानि।**

विद्यास्थानानि अष्टादश इति सुप्रसिद्धमेव। तानि वेदमूलानि। क्वचित् चतुर्दश विद्यास्थानि इत्यपि उल्लेखः अस्ति।



### मधुसूदनसरस्वतीमतेन विद्याविभागः (वायुपुराणानुगृहीतः)

ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति वेदाः चत्वारः। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति वेदाङ्गानि षट्। पुराण-न्याय-मीमांसा-धर्मशास्त्राणि चेति चत्वारि उपाङ्गानि। अत्रोपपुराणानामपि पुराणेऽन्तर्भावः। वैशेषिकशास्त्रस्य न्याये। वेदान्तशास्त्रस्य मीमांसायाम्। महाभारतरामायणयोः सांख्यपातञ्जलपाशुपतवैष्णवादीनां धर्मशास्त्रे। मिलित्वा चतुर्दश विद्याः। एता एव चतुर्भिरुपवेदैः सहिता अष्टादश विद्या भवन्ति। आयुर्वेदो धनुर्वेदो गन्धर्ववेदोऽर्थशास्त्रं चेति चत्वार उपवेदाः। सर्वेषां चाऽऽस्तिकानाम् एतावन्ति एव शास्त्रप्रस्थानानि। अन्येषामपि एकदेशिनाम् एतेषु एवान्तर्भावात्। वस्तुतः अष्टादश विद्यास्थानानि इति मधुसूदनसरस्वत्याः नूतनं मतमिति न। तथा विद्यास्थानानाम् आयोजनं पूर्वतः एवास्ति। पुराणादिषु अपि तथा श्रूयते। अत्र मधुसूदनसरस्वत्या वैशिष्ट्यं यद् तेषु तेषु विद्यास्थानेषु किम् किम् अन्तर्भवति इति विषये निर्णयः इति एतावदेव।




एवंविधविभाजने अत्र पुराणप्रमाणमस्ति। यद्यपि सर्वमपि पुराणसम्मतमस्ति इति न तथापि बाहुल्येन साम्यं परिलक्ष्यते। तथाहि श्लोकाः:-

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।



पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।।
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात्।
अर्थशास्त्रं परं तस्माद् विद्यास्वष्टादश स्मृताः।।
अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम्।
आदिकर्ता कविः साक्षाच्छूलपाणिरिति श्रुतिः।।
स हि सर्वजगन्नाथः सिसृक्षुरखिलं जगत्।
ब्रह्माणं विदधे साक्षात् पुत्रमग्रे सनातनम्।।
तस्मै प्रथमपुत्राय ब्रह्मणे विश्वयोनये।
विद्याश्चेमा ददौ पूर्वं विश्वस्थित्यर्थमीश्वरः।। (वायुपुराणम्)

इति। आदिकर्ता ईश्वरः शूलपाणिः सर्वजगन्नाथः अस्य जगतः सृष्टिम् इच्छन् सर्वादौ ब्रह्माणं सृष्टवान्। तस्मै ब्रह्मदेवाय एताः अष्टादश विद्याः दत्तवान्। एताः विद्याः विश्वस्य स्थित्यर्थम्।

### याज्ञवल्क्यस्यापि सम्मतिः

याज्ञवल्क्येन नापि विद्याविषये उक्तम् (१।३) -

पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ इति।

**वेदाः चत्वारः-** १)ऋग्वेदः २) यजुर्वेदः ३) सामवेदः ४) अथर्ववेदः

**वेदाङ्गानि षड्-** १)शिक्षा २)व्याकरणम् ३)निरुक्तम् ४)छन्दः(पिङ्गलम्) ५)ज्यौतिषम् ६)कल्पः

**उपाङ्गानि चत्वारि-** १)पुराणम् २)न्यायः ३)मीमांसा ४)धर्मशास्त्रम्

**उपवेदाः चत्वारः-** १)आयुर्वेदः २)धनुर्वेदः ३)गन्धर्ववेदः ४)अर्थवेदः (अर्थशास्त्रम्)

अत्र लिखितानां विद्यानाम् उपविभागाः अपि सन्ति। ते च विभागाः तासां विद्यानां प्रतिपादनकाले वक्ष्यन्ते संक्षेपेण।

## २.७) विद्याविभाजनस्य प्रकारः-२

### कौटिल्यमतेन विद्याविभागः

धर्मार्थवेदनकरणत्वं यस्यां सा विद्या इति विद्यालक्षणं चाणक्यसम्मतम्। तल्लक्षणम् एतासु विद्यासु अस्ति। आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति चतस्र एव विद्या इति कौटिल्यः आह अर्थशास्त्रे। सांख्यं योगो लोकायतं चेति आन्वीक्षिकी। ऋग्यजुःसामानि त्रयी। कृषिः पाशुपाल्यं वाणिज्या चेति वार्ता। दण्डनीतिस्तु राजनीतिः। अर्थवत्त्वस्य हेतुभिः परीक्षणम् अन्वीक्षा, सा प्रयोजनम् अस्याः इति आन्वीक्षिकी। सांख्यं हि प्रकृतिपुरुषविवेचकं शास्त्रं कपिलप्रोक्तम्। योगः प्रत्याहारध्यानधारणादिप्रतिपादकं महेश्वरप्रोक्तम्। लोकायतं न्यायशास्त्रं ब्रह्मगार्ग्योक्तम्। एतत्त्रितयम्



आन्वीक्षिकी। अथर्ववेदः इतिहासवेदः च (महाभारतादिरूपः) इति एतद् वेदः। अथर्ववेदः अभिचारकर्म-ज्ञानादिफलप्रतिपादकः। अतः स भिन्नमेव प्रस्थानम् इति गण्यते, त्रय्यां तस्य स्थानं नास्ति। क्रतुकार्यसाधकः त्रय्याख्यः समुदायः। तथा हि देवीपुराणे-

ऋग्यजुःसामभेदेन साङ्गवेदगतापि वा।
त्रयीति पठ्यते लोके दृष्टादृष्टार्थसाधिनी॥ इति।

वेदत्रयगताः त्रिविधा मन्त्रा एव त्रयीशब्दस्य तात्पर्यार्थः। ते हि मन्त्राः ऋङ्मन्त्राः यजुर्मन्त्राः साममन्त्राश्च यथाक्रमं पद्यात्मका गद्यात्मका गीत्यात्मकाश्च।

वेदस्य अङ्गानि षट्। तानि च- शिक्षा वर्णोच्चारणोपदेशकं शास्त्रम्। कल्पः क्रत्वनुष्ठानोपदेशपरम् आश्वलायनादिप्रणीतं सूत्रम्। व्याकरणं शब्दानुशासनं पाणिनीयादि। निरुक्तं निर्वचनशास्त्रं यास्कप्रणीतम्। छन्दोविचितिः छन्दश्शास्त्रे पैङ्गलादि। ज्योतिषं सूर्यादिगत्यादिप्रतिपादकं शास्त्रम्।








**विद्याप्रचारः संक्षेपश्च**

तानि च विद्यास्थानानि मरीच्यादिमुखेन ब्रह्मणा अस्मिल्ँलोके प्रवर्तितानि युगेऽस्मिन्नल्पायुष्याल्पबुद्धित्वादिदोषाद् मुनष्यैः साकल्येन धारयितुम् अशक्यानीति परमेश्वरः स्वयमेव व्यासरूपी भूत्वा संक्षिप्तवान्। यथोक्तं द्वितीयस्कन्दे -

कालेन मीलितदृशामवमृश्य नृणां
स्तोकायुषां स्वनिगमो बत दूरपारः।
आविर्हितस्त्वनुयुगं स हि सत्यवत्यां
वेदद्रुमं विटपशो विभजिष्यति स्म।। इति।

वेदस्य ऋग्यजुःसामभेदाः वेदेऽपि उल्लिखिताः सन्ति। इत्थं नामकरणं व्यासदेवेन न कृतम्। परन्तु एतत्सर्वं मिश्रितरूपेण आसीत्। लक्षणानुसारं पृथक् कृत्वा शाखासु विभज्य विभिन्नेभ्यः ब्राह्मणकुलेभ्यः रक्षणाय दत्तवान्। यथा पैलः वैशम्पायनः जैमिनिः सुमन्तुः इति चत्वारः व्यासशिष्याः। तेषु पैलाय ऋग्वेदः, वैशम्पायनाय यजुर्वेदः, जैमिनये सामवेदः, सुमन्तवे च अथर्ववेदः समर्पितः।

## २.८) विद्याविभाजनस्य प्रकारः-३

मुण्डकोपनिषदि विद्याविभाजनस्य कश्चित् प्रकारः दृश्यते। तथाहि मुण्डकोपनिषदि मन्त्र आम्नातः-

**तस्मै स होवाच। द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च॥ १.४॥**

**तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमति। अथ परा यया तदक्षरमधिगम्यते॥१.५॥**



**सरलार्थः** - सर्वा अपि विद्याः परा अपरा इति ब्रह्मविदः वेदार्थाभिज्ञाः परमार्थदर्शिनः वदन्ति। परा इति श्रेष्ठा उत्कृष्टा प्रकृष्टा प्रशस्ता इत्यर्थः। अत्यन्तश्रेष्ठायाः मङ्गलकारिण्याः विद्यायाः एव परा विद्या इति नामधेयम्। का वा ईदृशी परा विद्या। यया तदक्षरम् अधिगम्यते सा परा विद्या उच्यते। यया विद्यया 'अक्षरस्य' स्वरूपम् अधिगम्यते, प्राप्यते सा एव परा विद्या। अक्षरं नाम (न क्षीयते, न क्षरति इति) नाशरहितं ब्रह्म। जन्मरहितत्वात् नाशरहितम्, देशकालातीतं परं ब्रह्म अक्षरम् इति कथ्यते। समस्तस्यापि विश्वस्य जन्मस्थितिलयकारणं तत्त्वम् अक्षरम्। या विद्या इदम् अक्षरं प्रतिपादयति सा एव पराविद्या। अतः ब्रह्मविद्या एव एका परा विद्या भवति। सर्वप्राणिनाम् आत्मभूतं निर्गुणं सर्वप्रमाणागोचरं जगदास्पदभूतम् अक्षरं परया एव विद्यया ज्ञायते नान्यथा।

तत्रापरा विद्या हि ऋग्वेदः यजुर्वेदः सामवेदः अथर्ववेदः शिक्षा कल्पः व्याकरणं निरुक्तं छन्दः ज्योतिषमति।

अत्र यद्यपि उपनिषद् एव ब्रह्मविद्या, परा विद्या। तथापि उपनिषत् शब्दराशिरूपा चेद् सा अपरा विद्या। शब्दराशिना प्रतिपाद्यं विज्ञानं, येन ज्ञातेन अधिकारी अक्षरम् अधिगच्छति तद् विज्ञानं परा विद्या इति विवेकः। अपरा विद्या अविद्या अपि कथ्यते। अर्थात् यया धर्मार्थकामानां सिद्धिः भवति सा अपरा विद्या। यया मोक्षसिद्धिः भवति सा परा विद्या इति तात्पर्यम्। तत्रापि धर्मार्थकामानां सिद्धये यद्यपि आधुनिकभौतादिविज्ञानस्य उपयोगः अस्ति तथापि तस्य अपरायां विद्यायां नान्तर्भावः। कुतः। यतो हि प्रत्यक्षेण अनुमानेन वा तस्य उपलब्धिः भवति। यः वेदैकगम्यः पुरुषार्थोपायः स एव विद्यायाम् अन्तर्भवति। अत एव नास्तिकमतानि अत्र नाद्रियन्ते।



## २.९) विद्याविभाजनस्य प्रकारः-४

समग्रस्य वाङ्मयस्य विभाजनं कुर्वन्ति इतीदृशाः प्रकाराः दुर्लभाः सन्ति। केचिद् उपरि प्रदर्शिता एव। अत्र दर्शनविभाजनस्य प्रकाराः केचित् सन्ति। तत्र किञ्चित् प्रस्तूयते।

### २.९.१) दर्शनविभाजनस्य प्रकारः-१

दर्शनं द्विविधम् आस्तिकं नास्तिकं च। तत्र षड् आस्तिकदर्शनानि, षड् नास्तिकदर्शनानि इति आहत्य द्वादश दर्शनानि सन्ति।

आस्तिकदर्शनानि तावत्- न्यायः वैशेषिकम् सांख्यम् योगः पूर्वमीमांसा उत्तरमीमांसा चेति।

नास्तिकदर्शनानि तावत्- चार्वाकम् जैनम् बौद्धम् इति त्रिविधम्। तत्र बौद्धानां चतुर्धा भेदः- माध्यमिकम् योगाचारः सौत्रान्तिकम् वैभाषिकम् इति।





## २.९.२) दर्शनविभाजनस्य प्रकारः-२

- दर्शनकाराः
  - आस्तिकाः
    - सगुणात्मवादिनः
      - श्रौताः
        - वाक्यार्थवेदिनः
          - मीमांसकाः
        - पदार्थवेदिनः
          - वैयाकरणाः
      - तार्किकाः
        - प्रच्छन्नतार्किकाः
          - प्रच्छन्नद्वैताः
            - रामानुजीयाः
          - स्पष्टद्वैताः
            - माध्वाः
        - स्पष्टतार्किकाः
          - भोगसाधनादृष्टवादिनः
            - विदेहमुक्तिवादिनः
              - आत्मभेदवादिनः
                - कर्मसापेक्षेश्वरवादिनः
                  - शैवाः
                - कर्मानपेक्षेश्वरवादिनः
                  - नकुलीशपाशुपताः
                - प्रत्यभिज्ञादर्शिनः
              - आत्मैक्यवादिनः
            - जीवन्मुक्तिवादिनः
              - रसेश्वराः
          - उत्पत्तिसाधनादृष्टवादिनः
            - शब्दप्रमाणम् अनङ्गीकुर्वाणाः
              - वैशेषिकाः
            - शब्दप्रमाणमङ्गीकुर्वाणाः
              - नैयायिकाः
    - निर्गुणात्मवादिनः
      - श्रौताः
        - अद्वैतवादिनः
          - शाङ्कराः
      - तार्किकाः
        - निरीश्वराः
          - सांख्याः
        - सेश्वराः
          - पातञ्जलाः
  - नास्तिकाः
    - आध्यक्षिकाः
      - चार्वाकाः
    - तार्किकाः
      - क्षणिकवादिनः
        - बौद्धाः
      - स्याद्वादिनः
        - जैनाः

सर्वदर्शनसंग्रहः नाम सायणमाधवेन प्रणीतः ग्रन्थः। तस्य उपोद्घाते वासुदेवशास्त्री अभ्यङ्करः दर्शनस्य भिन्नप्रकारेण विभागं प्रदर्शयति। अत्र केवलं कस्यचिद् विदुषः मतं प्रदर्श्यते। तेन न कस्यापि दर्शनस्य निन्दा अभिप्रेता। अभ्यङ्करवर्यमते दार्शनिकाः द्वेधा - श्रौताः तार्किकाश्च। तत्र श्रौताः दर्शनकाराः मीमांसासूत्रकारः जैमिनिः व्याकरणसूत्रकारः पाणिनिः ब्रह्मसूत्रकारः बादरायणः चेति त्रेधा। तार्किकाश्च आस्तिकतार्किकाः नास्तिकतार्किकाः इति भेदेन द्वेधा। तत्र आस्तिकतार्किकास्तावत्- विशिष्टाद्वैतवादी



रामानुजः सांख्यसूत्रप्रणेता कपिलः योगसूत्रप्रणेता पतञ्जलिः न्यायसूत्रकारः गौतमः वैशेषिकसूत्रकारः कणादः इति एते पञ्च। नास्तिकतार्किकास्तावत्- लोकायतार्हतसौगतकापालिकादिशास्त्राणि।

ये वेदस्य अपौरुषेयत्वम् अभ्युपगच्छन्ति ते श्रौताः। ये वेदस्य पौरुषेयत्वम् अङ्गीकुर्वन्ति ते आस्तिकतार्किकाः। ये वेदस्य प्रामाण्यमेव न स्वीकुर्वन्ति ते नास्कितार्किकाः। येषां मते प्रमाणेषु श्रुतिः सर्वप्रबला ते श्रौताः। येषां मते प्रमाणेषु अनुमानं प्रबलम्, श्रुतिस्तु गौणा ते आस्तिकतार्किकाः। येषां मते श्रुतिस्तु नैव प्रमाणम्। अनुमानमेव प्रमाणम् ते नास्तिकतार्किकाः। चार्वाकास्तु अनुमानमपि नाभ्युपगच्छन्ति। केवलं प्रत्यक्षमेव एकं प्रमाणमिति मन्वते। अतः वस्तुतः तेषां तु दार्शनिकत्वमपि न सिद्ध्यति। सर्वथा उपेक्षार्हाः। निर्युक्तिकं ब्रुवाणस्तु नास्माभिर्विनिवार्यते इति न्यायेन स्वयं स्वसिद्धान्तविरुद्धम् आचरन् अनुमानम् अवलम्बमानः स्वयम् खण्डितः कुतः खण्डनीयः। क्षेत्रे बीजावापं कुरुते। फलं लभेत। अनुमानं विना नैव अत्र कार्ये प्रवृत्तिः सम्भवति। यथा कश्चिदेकः जले निमग्नः मृतः। द्वितीयोऽपि जले निमग्नः म्रियेत इति मन्वानः सः अनुमानम् अभ्युपगच्छति। अन्यथा स्वयं जले निमज्जनं निर्भयं कुर्यात्। न च करोति। स्यादेतत्।

येषां मते वेदः अनायासेन अबुद्धिपुरःसरम् ईश्वराद् आगतः ते श्रौताः। येषां मते वेदः अनायासेन बुद्धिपुरःसरम् ईश्वराद् आगतः ते तार्किकाः आस्तिकाः। श्रौताः वेदस्य साक्षाद् व्याख्याने प्रवर्तन्ते अथवा वेदव्याख्यानाय उपयोगि शास्त्रम् कुर्वन्ति। यथा जैमिनीयाः बादरायणीयाः।

## २.९.३) नास्तिकप्रस्थानानि

ननु नास्तिकानामपि प्रस्थानान्तराणि सन्ति तानि एतेषु अनन्तर्भावात् पृथग् गणयितुम् उचितानि। तथा हि- शून्यवादेनैकं प्रस्थानं माध्यमिकानाम्। क्षणिक-विज्ञान-मात्र-वादेन अन्यद् योगाचाराणाम्। ज्ञानाकारानुमेय-क्षणिक-बाह्यार्थवादेन अपरं सौत्रान्तिकानाम्। प्रत्यक्ष-सलक्षण-क्षणिक-बाह्यार्थवादेन अपरं वैभाषिकाणाम्। एवं सौगतानां प्रस्थानचतुष्टयम्। सौगता गौतमबुद्धानुयायिनः।

तथा देहात्मवादेनैकं प्रस्थानं चार्वाकाणाम्। एवं देहातिरिक्तदेहपरिमाणात्मवादेन द्वितीयं प्रस्थानं दिगम्बराणाम्। एवं मिलित्वा नास्तिकानां षट् प्रस्थानानि।

## २.९.४) नास्तिकानां विद्यासु नान्तर्भावः

तानि नास्तिकानि अष्टादशसु विद्यासु कस्मान्न गृह्यन्ते। वेदबाह्यत्वात्तेषां म्लेच्छादिप्रस्थानवत् परम्परयाऽपि पुरुषार्थानुपयोगित्वादुपेक्षणीयमेव। इह च साक्षाद्वा परम्परया वा पुमर्थोपयोगिनां वेदोपकरणानामेव प्रस्थानानां विद्यासु नान्तर्भावः। तथाहि परम्परा-

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।

स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः॥ मनुस्मृतिः २.११।

**सरलार्थः** - हेतुशास्त्रम् तर्कशास्त्रम् अवलम्ब्य यो द्विजः संस्कृतः अपि (संस्काराद् द्विज उच्यते) वेदस्य (श्रुतिः) धर्मशास्त्रस्य (स्मृतिः) इति एतयोः अवमानं कुर्यात् स साधुभिः बहिष्कार्यः। स च वेदनिन्दकः नास्तिक इति। इत्थं यो वेदतन्मूलकशास्त्राणां प्रामाण्यं नाङ्गीकरोति स नास्तिकः इति



प्रसिद्धिः। अनेन इदं सिद्धं यद् वैदिकानां कुले वा जन्म यस्य सोऽपि यदि वेदप्रामाण्यं नाङ्गीकरोति तर्हि स बहिष्कार्यः अस्ति। अतः केवलं बौद्धाः जैनाः वा नास्तिकाः इति न। यः कोऽपि वेदस्य प्रामाण्यं न मन्यते स नास्तिकः।

सुगतः गौतमबुद्धः। तस्माद् आगतानि सौगतानि प्रस्थानानि।

बृहस्पतिः गौतमबुद्धः जिनः इति त्रिभ्यः यानि शास्त्राणि प्रवृत्तानि तानि वेदस्य प्रामाण्यं नाङ्गीकुर्वन्ति। अतो नास्तिकानि तानि। बृहस्पतेः चार्वाकमतम् इति एकं प्रस्थानम्। जिनाद् उद्भूतं जैनदर्शनम् अपरं प्रस्थानम्। यद्यपि दिगम्बर-श्वेताम्बरभेदेन द्वौ सम्प्रदायौ तत्र स्तः। तथापि एकमेव प्रस्थानमिति अङ्गीकारः। बुद्धात् प्रसृतानि माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिकभेदेन चत्वारि बौद्धप्रस्थानानि सन्ति। तानि नास्तिकदर्शनानि हि - १) चार्वाकदर्शनम् २) जैनदर्शनम् ३) माध्यमिकदर्शनम् ४) योगाचारदर्शनम् ५) सौत्रान्तिकदर्शनम् ६) वैभाषिकदर्शनम् इति। इत्थम् आहत्य नास्तिकदर्शनानि षड् भवन्ति।

संसारेऽस्मिन् पुरुषार्थं विना अन्यन्न नरो वाञ्छति किमपि। यत् पुरुषार्थाय उपयोगि तदेव आर्याणाम् अष्टादशसु प्रस्थानेषु अन्तर्भवति। नास्तिकानि प्रस्थानानि पुरुषार्थाय उपयोगीनि न सन्ति। अतः तेषाम् आस्तिकप्रस्थानेषु अन्तर्भावः न क्रियते।



## पाठगतप्रश्नाः

८. कति विद्यास्थानानि।

९. कौटिल्यमतेन मुख्यः विद्याविभागः कः।

१०. मुण्डकोपनिषदि विद्याविभागः कीदृशः।

११. त्रयीमध्ये किं नास्ति।

क) ऋग्वेदः ख) यजुर्वेदः ग) सामवेदः घ) अथर्ववेदः

१२. इदं वेदाङ्गमस्ति।

क) कल्पः ख) न्यायः ग) आयुर्वेदः घ) ब्राह्मणम्

१३. इदमुपाङ्गमस्ति।

क) पुराणम् ख) अर्थशास्त्रम् ग) व्याकरणम् घ) उपनिषद्

१४. अयमुपवेदः।

क) पुराणम् ख) अर्थशास्त्रम् ग) व्याकरणम् घ) उपनिषद्

१५. अयं वेदः

क) पुराणम् ख) अर्थशास्त्रम् ग) व्याकरणम् घ) ब्राह्मणम्

१६. आन्वीक्षिक्याम् इदं शास्त्रम् नास्ति।

क) योगः ख) सांख्यम् ग) लोकायतम् घ) मीमांसा



१७. वार्तायाम् इदं नास्ति।

क) कृषिः ख) पाशुपाल्यम् ग) वाणिज्या घ) राजनीतिः

१८. इदमास्तिकं दर्शनम्।

क) माध्यमिकम् ख) वैभाषिकम् ग) दिगम्बरः घ) वैशेषिकम्

१९. इदं दर्शनं वेदस्य प्रामाण्यं नाङ्गीकरोति।

क) योगः ख) सांख्यम् ग) वैभाषिकम् घ) मीमांसा

२०. योगः कीदृशं दर्शनम्।

क) श्रौतम् ख) तार्किकम् ग) नास्तिकम् घ) निरीश्वरम्

२१. एते न श्रौताः।

क) पाणिनीयाः ख) जैमिनीयाः ग) बादरायणीयाः घ) सौगताः

२२. नास्तिकानां विद्यासु अन्तर्भावः नास्ति। तत्र किं कारणम्।

क) पुरुषार्थाय अनुपयोगिता ख) ईश्वरस्य तिरस्कारः ग) जीवस्य तिरस्कारः घ) उपमानस्य तिरस्कारः

२३. इदं न सौगतं दर्शनम्।

क) माध्यमिकम् ख) वैभाषिकम् ग) सौत्रान्तिकम् घ) वैशेषिकम्

२४. अयन्न पुरुषार्थः।

क) कामः ख) धर्मः ग) मोक्षः घ) इच्छा



## पाठसारः

अस्मिन् पाठे विद्यानाम् परिचयः इति लक्ष्यम् अंशतः साधितम्। सकलानां विद्यानां भगवति एव तात्पर्यम् इति सप्रमाणम् साधितम्। विविधानां विद्यानाम् उल्लेखपुरःसरं प्रतिपादितं यद् विद्याः प्रवृत्तिनिवृत्तिमार्गयोः साधनाय विविष्टं प्रयोजनम् प्रस्तोतुम् उद्भूताः इति। विविधानि प्रयोजनानि सन्ति तानि अलौकिकोपायेन एताः विद्याः कथं साधयन्ति इति महान् विषयः समासेन प्रकटितः।

ततश्च बहूनां विद्यानाम् नामानि उल्लिखितानि। किन्तु तासाम् विद्यानाम् अपि उपविभागाः विपुला ग्रन्थसम्पत् चास्तीति न विस्मर्तव्यम्। चतुःषष्टिः कलाः सन्ति। ताश्च रामायणकालेऽपि प्रसिद्धा आसन् इति रामायणप्रमाणं तत्र दत्तम्।

विद्यानां प्राचुर्यात् तेषां विभाजनमपि क्लिष्टमेव। अतः विभाजनस्य श्रुतिस्मृतिकविसम्मताः नैके प्रकाराः सन्ति। तेषु पुराणानुगृहीतः अष्टादश विद्यास्थानानि इति विभागः सर्वादृतः मुख्यश्च। तस्यैव अनुवादः मधुसूदनसरस्वतीवर्येण कृतः। आचार्यः चाणक्यः स्वकीये अर्थसंग्रहनामके ग्रन्थे



विद्याविभाजनस्य अपरम् उपायं प्रदर्शितवान्। आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति चतस्र एव विद्या इति स आह। तासां च विस्तरः यथास्थानम् उपन्यस्तः।

मुण्डकोपनिषदि विभाजनस्य अपरः प्रकारः परिलक्ष्यते। स च विभागः प्रवृत्तिमार्गम् निवृत्तिमार्गं चाभिलक्ष्य सम्यगस्ति इति प्रतिभाति।

ततश्च दर्शनविभागस्य नैके प्रकाराः प्रदर्शिताः। आस्तिकनास्तिकभेदेन विभागः। वासुदेवशास्त्री अभ्यङ्करः अपरम् प्रकारं प्रदर्शितवान्।

ततश्च नास्तिकदर्शनस्य अष्टादशसु विद्यासु अन्तर्भावः कुतो न इति विषय आलोचितः।



## पाठान्तप्रश्नाः

१. किमुपासितव्यम्।

२. ऋषयः वेदान् कथं लेभिरे।

३. विद्यानां तात्पर्यम् उपन्यस्यताम्।

४. विद्याप्रयोजनम् आविष्क्रियताम्।

५. वैदिकधर्मस्य विभागौ परिचाययत।

६. वायुपुराणानुगृहीतं विद्याविभाजनं लिखत।

७. चाणक्यानुसारेण विद्याः विभजत।

८. मुण्डकोपनिषदुक्तप्रकारेण विद्याः विभजत।

९. आस्तिकनास्तिकभेदेन दर्शनानि विभजत।

१०. वासुदेवशास्त्रिमतेन दर्शनानि विभजत।

११. नास्तिकानां कुतो विद्यासु नान्तर्भावः।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. द्रष्टारः

२. युगान्ते अन्तर्हितान् सेतिहासान् वेदान् स्वयंभुवा अनुज्ञाता महर्षयः तपसा लेभिरे।

३. वेदः।

४. स्वाभीष्टलाभाय आत्मसमाधानाय आत्मसाक्षात्काराय वा प्रस्थीयते अनेन इति प्रस्थानम्।

५. ६४



६. द्विविधो हि वैदिको धर्मः। प्रवृत्तिलक्षणः निवृत्तिलक्षणश्च।

७. प्रवृत्तिमार्गेण।

### उत्तराणि-२

८. अष्टादश।

९. आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति चतस्र एव विद्या इति कौटिल्यः आह अर्थशास्त्रे।

१०. परा अपरा इति भेदेन विद्या द्वेधा। परा सा यया अक्षरं ब्रह्म अधिगम्यते। अन्याः सर्वाः अपरा विद्याः। ताश्च ऋग्वेदः यजुर्वेदः सामवेदः अथर्ववेदः शिक्षा कल्पः व्याकरणं निरुक्तं छन्दः ज्योतिषमति।

११. घ)

१२. क)

१३. क)

१४. ख)

१५. घ)

१६. घ)

१७. घ)

१८. घ)

१९. ग)

२०. ख)

२१. घ)

२२. क)

२३. घ)

२४. घ)

॥ इति द्वितीयः पाठः ॥



# ३

# भारतीयविद्यापरिचयः-१

जयतु जगतां मूलं सत्यं सनातनमञ्जसा
जयतु सरसा दिव्या वाणी तदीयमनोऽनुगा।
जयतु विदुषां वर्गः तस्याः सदातन आश्रयः
जयतु च निधिस्तेषां पूर्णा चिरन्तनभारती॥

## प्रस्तावना

दर्शनपरिचयस्य पाठे दर्शनस्य विविधाः विषयाः आलोचिताः। ततश्च विद्याविभागस्य विविधाः प्रकाराः प्रदर्शिताः। तत्र उल्लिखातासु कासाञ्चन विद्यानाम् समासेन परिचयः अस्मिन् पाठे भविष्यति।

वेदस्य सर्वमूलत्वात् तस्य विविधरूपेण परिचयः आवश्यकः। ततश्च वेदोद्भूतानां कासाञ्चन विद्यानाम् अपि जीवनोपयोगितायाः आधिक्यात् परिचयः अत्र प्रदास्यते।

आधुनिकविज्ञानस्य ज्ञानार्जनप्रक्रिया तु प्रयोगप्रमादौ इति। तदेव trial and err इति कथ्यते। अत एव बहूनि उदाहरणानि लभ्यन्ते यत्र विज्ञानेन किमपि जीवनोपयोगि औषधं यन्त्रं वा आविष्कृतम्। परन्तु महता कालान्तरेण ज्ञातं यद् अनेन मानवस्य पशूनां पृथिव्याश्च क्षतिरेव भवति। अतः तन्निवारणाय नूत्नः आविष्कारः कोटिशः रूप्यकव्ययेन क्रियते। तस्यापि दोषाः ततोऽपि दीर्घकालेन ज्ञायन्ते एव। यतो हि तत्र प्रयोगप्रमादौ इति पन्थाः अवलम्ब्यते। भारतीयायाम् आर्षपरम्परायां न तथा। सर्वाणि शास्त्राणि दर्शनानि च ऋषिप्रणीतानि। तानि च दिव्यचक्षुषा दृष्टानि प्रमादरहितानि एव। कदापि भारतीयविद्यानां प्रयोगप्रमादौ इति परम्परा नास्ति। प्रयोगप्रमादप्रक्रियायाः अभावात् आधुनिकाः तासां विद्यानाम् अङ्गीकारे श्रद्धां न दर्शयन्ति। परन्तु  गतः स कालः। कालचक्रं परिवर्तते। प्रेक्षावतां सदा युक्ते सारभूते सम्यक् दृष्टिः भवति एव। अत एव पाश्चात्याः भारतीयपरम्पराज्ञानाय अत्यन्तम् उत्सुकाः सन्ति। वेदमन्त्राणाम् उच्चारणे उत्साहेन प्रवर्तन्ते। तस्या अस्या भारतीयज्ञानपरम्परायाः सुष्ठु ज्ञानाय अत्र प्रयासः क्रियते।



## उद्देश्यानि

पाठस्यास्याध्ययनेन -

- वेदस्य समासेन परिचयं लभेत।
- वेदप्रकारान् जानीयात्।
- वेदस्य अङ्गानि अवगच्छेत्।
- वेदाङ्गानाम् प्रवर्तकम् आचार्यम् तद्ग्रन्थं च ज्ञास्यति।



- वेदाङ्गानां प्रयोजनम् अवगच्छेत्।

## ३.१) वेदः

विद्- ज्ञाने इत्यस्मात् धातोः घञ्-प्रत्यययोगेन वेदशब्दः निष्पन्नः। अतः वेदः अलौकिकज्ञानराशिः एव भवति। वेदशब्दस्य इतोऽपि विभिन्ना अर्थाः सन्ति।

तत्र धर्मब्रह्मप्रतिपादकम् अपौरुषेयं प्रमाणवाक्यं वेदः। धर्मः चात्र कर्म एव। आपस्तम्बेन वेदलक्षणं कृतम् - मन्त्रब्राह्मणयोर्वेदनामधेयम् इति। अर्थात् मन्त्रः ब्राह्मणम् इति अनयोः नाम वेदः। वेदस्य मन्त्रः ब्राह्मणम् इति द्वेधा विभागः अस्ति। सायणाचार्येणापि ऋग्वेदभाष्यभूमिकायाम् वेदलक्षणमुक्तं मन्त्रब्राह्मणात्मकशब्दराशिर्वेद इति।

वेदस्य महिमा अपारः। न केवलं मनुष्याणाम् अपि तु देवादीनाम् अपि वेदः चक्षुः इव। भगवान् स्वयं वेदम् अवलम्ब्य विश्वसृष्टिं करोति। स समग्रोऽपि वेदः मनुष्यैः दुष्प्रापः। मनुमुनिः स्वयं वेदमहिमानं मनुते यथा-

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।
अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः॥ (मनु.१२.९४)

वेदस्य वेदोद्भूतस्य ज्ञानं विना भारतीयस्कृतिः बोद्धुं न शक्यते। संस्कृतेः मूलं वेदे एव वर्तते। तथाहि आह मनुमुनिः-

चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक्।
भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिध्यति॥ (मनु.११.९७)

अत एव वेदाध्ययनविषये जनैः साग्रहं सोत्साहं च प्रवर्तितव्यम्। तथाहि अभियुक्तानाम् उक्तिः -

ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्यो ज्ञेयश्च।

संस्कृतिर्नाम सुपरिष्कृता जीवनपद्धतिः, यया क्रमशः आत्मोद्धारः सिद्ध्यति। भारतीयसनातनसंस्कृतिः चतुर्भिः पुरुषार्थैः परिकल्पिता वर्तते। धर्मः अर्थः कामः मोक्षः इति चत्वारः पुरुषार्थाः। कामो हि लौकिकजीवनसन्तृप्तिः सुखं वा। अर्थो हि तादृशसुखलाभार्थम् अपेक्षितानि वस्त्र-आहार-धन-क्षेत्रादीनि जीवनसाधनानि। धर्मो वै अर्थानामर्जने तद्द्वारा सुखलाभे शास्त्रोक्तः नियमविशेषः। मोक्षः अनन्तः शाश्वतानन्दः। एतेषां विवेके वेदः परमं प्रमाणम्। वेदः कैश्चित् पुरुषैः विरचितः ग्रन्थो न भवति। अतः स अपौरुषेयः इत्युच्यते। स तु ऋषिभिः कस्याश्चित् योगभूमिकायां दृष्टः अर्थात् साक्षात्कृतः अस्ति। इष्टस्य लाभे अनिष्टस्य परिहारे अलौकिकम् उपायं यः बोधयति सः वेदः। तस्मात् -

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥ (ऋग्वेदभाष्यभूमिका)

इति वेदलक्षणम् आह सायणाचार्यः। तस्य अयमर्थः - पुरुषः यदा इष्टस्य लाभे अथवा अनिष्टस्य परिहारे निवारणे दूरीकरणे प्रत्यक्षतः वा अनुमानादिना आलोचनबलेन वा उपायं न प्राप्नोति, तदा तादृशः उपायः यस्मात् प्राप्यते अर्थात् अवगम्यते सः वेदः। अत एव वेदस्य ज्ञानरूपत्वं प्रतिष्ठितं वर्तते।



ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति वेदाः चत्वारः। तत्र प्रतिवेदं मन्त्रः ब्राह्मणम् इति विभागद्वयम् भवति। ब्राह्मणस्य ब्राह्मणम् आरण्यकम् उपनिषद् इति त्रेधा विभागः विषयभेदेन भवति।



## पाठगतप्रश्नाः

१. वेदशब्दः कथं निष्पन्नः। कश्च तदर्थः।

२. ब्राह्मणेन वेदाध्ययनं किमर्थं कर्तव्यम्।

३. पितृदेवमनुष्याणां सनातनम् चक्षुः किम्।

(क) न्यायः (ख) सांख्यम् (ग) योगः (घ) वेदः

४. पुरुषार्थानां विवेके परं प्रमाणं किम्।

(क) न्यायः (ख) सांख्यम् (ग) योगः (घ) वेदः

---

### ३.१.१) मन्त्रः

मन्त्राः वेदविहितस्य कर्मणः अनुष्ठानम् , अनुष्ठानस्य द्रव्यम् , देवता इत्यादीनां प्रकाशकाः प्रतिपादकाः सन्ति। मन्त्राः अपि ऋग् यजुः साम अथर्वा इति भेदेन चतुर्धा। (ऋच् इति चकारान्तः स्त्रीलिङ्गशब्दः। यजुस् इति सकारान्तः नपुंसकलिङ्गशब्दः। सामन् इति नकारान्तः नपुंसकलिङ्गशब्दः। अथर्वन् इति नकारान्तः पुंलिङ्गशब्दः।) पद्यरूपेण गायत्र्यादिषु छन्दःसु वृत्तेषु विद्यामानः मन्त्रः ऋक् कथ्यते। यथा - अग्निमीळे पुरोहितम् इत्याद्युदाहरणम्। एताः एव ऋचः यदा गीतिविशिष्टाः अर्थात् तासां गायनं भवति तदा ताः ऋचः सामानि इति कथ्यन्ते। अर्थात् यस्याः ऋचः गायनं भवति तदा गानरूपेण विद्यामाना ऋक् एव साम कथ्यते। ऋचि अध्यूढं साम इति उक्तिः। अर्थात् साम्नः आधारभूता ऋक् एव। गीतिषु सामाख्या इति जैमिनिवचनमत्र स्मर्तव्यम्। यः मन्त्रः ऋक् नास्ति, साम नास्ति परन्तु यज्ञादिकर्मसु प्रयुज्यते, स मन्त्रः ऋक्सामविलक्षणं यजुः भवति। संबोधनरूपः सम्भाषणरूपः च मन्त्रः अपि यजुषि अन्तर्भवति। निगदमन्त्राः एव सम्भाषणमन्त्राः। इति निरूपिता मन्त्राः। यजुर्वेदः शुक्लकृष्णभेदेन द्विविधः। सामवेदः पूर्वार्चिकोत्तरार्चिकभेदेन द्विविधः। अथर्ववेदस्य पैप्पला दान्ता प्रदान्ता स्तौता औन्ता ब्रह्मदायश शौनकी वेददर्शी चरणविद्या इति नव शाखाः श्रूयन्ते। परन्तु साम्प्रतम् शौनकी पैप्पली इति शाखाद्वमुपलभ्यते। अथर्ववेदस्य नक्षत्रकल्पः विधानकल्पः विधिविधानकल्पः संहिताकल्पः शान्तिकल्पः इति पञ्च कल्पाः सन्ति।

### ३.१.२) ब्राह्मणम्

**अत्राधुना ब्राह्मणं निरूप्यते।**



ब्राह्मणं ब्रह्मसंघाते वेदभागे नपुंसकम् इति मेदिनीकोशः। अर्थात् वेदस्य विशिष्टो भागः ब्राह्मणं कथ्यते। ब्राह्मणं नाम कर्मणस्तन्मन्त्राणां च व्याख्यानग्रन्थः इति भट्ट-भास्करः (तै.सं.भाष्ये १.५.१)

**शेषे ब्राह्मणशब्दः** इत्येव ब्राह्मणलक्षणम् उदीरितम् जैमिनिना। मन्त्रांशं विहाय वेदस्य अवशिष्टः भागः ब्राह्मणमिति तन्मतम्। ब्राह्मणस्यापि ब्राह्मणम् आरण्यकम् उपनिषत् चेति त्रेधा विभागः भवति। तत्र यद् ब्राह्मणं तद्विषये आपस्तम्बेन सूत्रितं **कर्मचोदना ब्राह्मणानि** इति। यागादिक्रियाविधिः यत्र वर्णितः तद् ब्राह्मणम् इति तस्य तात्पर्यम्। ब्राह्मणेषु वर्ण्यमाणाः विषयास्तावत् षट् - विधिः, अर्थवादः, निन्दा, प्रशंसा, पुराकल्पः, पराकृतिश्चेति।

ब्राह्मणे के विषया इति विषये शबरस्वामी लिखति -

हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः।
परक्रिया पुराकल्पो व्यवधारणकल्पना।
उपमानं दशैते तु विषया ब्राह्मणस्य॥ (शाबरभाष्यम् २.१.८)

ब्राह्मणं विधि-निषेध-नामधेय-अर्थवादभेदेन चतुर्विधम् सामान्यतः विभज्यते। ब्राह्मणविभागस्य नैके प्रकाराः सन्ति। परन्तु अत्रायमेक एव अवलम्ब्यते।

### विधिः

विधिशब्दस्य विभिन्नाः अर्थाः आचार्यैः कृताः। यथा शब्दभावना विधिः इति कुमारिलभट्टाः। नियोगः विधिः इति प्राभाकराः वदन्ति। इष्टसाधनता विधिः इति तार्किकादयः सर्वेऽपि अभ्युपगच्छन्ति। स च विधिः उत्पत्तिविधिः विनियोगविधिः अधिकारविधिः प्रयोगविधिः इति भेदात् चतुर्विधः।

तत्र कर्मस्वरूपमात्रबोधकः विधिः **उत्पत्तिविधिः**। यथा- अग्निहोत्रं जुहोति इति। अत्र च विधौ कर्मणः करणत्वेन अन्वयः। अग्निहोत्रहोमेन इष्टं भावयेत् इति तदर्थः।

अङ्गानां प्रधानेन सम्बन्धस्य बोधकः विधिः **विनियोगविधिः**। यथा, दध्ना जुहोति इति। स हि तृतीयया प्रतिपन्नस्य अङ्गभावस्य दध्नः होमसम्बन्धं विधत्ते। दध्ना होमं भावयेत् इति। व्रीहिभिः यजेत इत्यादौ व्रीहीणां यज्ञसम्बन्धं वक्ति। विनियोगविधेः सहकारिभूतानि षट् प्रमाणानि सन्ति। तानि हि श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि।

इतिकर्तव्यता यस्यास्ति स इतिकर्तव्यताकः। अर्थात् फलं यः लभेत सः। फलस्वामी इति यावत्। कर्मजन्यफलस्वाम्यबोधकः विधिः **अधिकारविधिः**। कर्मजन्यफलस्वाम्यं हि कर्मजन्यफलभोक्तृत्वम्। स च 'यजेत स्वर्गकामः' इत्यादिरूपः। स्वर्गम् उद्दिश्य यागं विदधता अनेन स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते। 'यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं निर्वपेत्' इत्यादिना अग्निदाहादौ निमित्ते कर्म विदधता निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते। एवम् अहरहः सन्ध्याम् उपासीत इत्यादिना शुचिविहितकालजीविनः सन्ध्योपासनजन्य-प्रत्यवाय-परिहाररूप-फलस्वाम्यं च उद्यते।



प्रयोगप्राशुभावबोधकः विधिः **प्रयोगविधिः**। येन विधिवाक्येन प्रयोगस्य शीघ्रतासम्पादनं बोध्यते सः प्रयोगविधिः इति उच्यते। अर्थात् कः विधिः केन क्रमेण कर्तव्यः, कस्मात् पूर्वं कः विधिः, कस्मात् परं कः विधिः इति विवेकः येन वाक्येन भवति स प्रयोगविधिः। अङ्गसमूहस्य क्रमबोधनं क्रियते प्रयोगविधिना।



## पाठगतप्रश्नाः

५. पद्यरूपेण गायत्र्यादिषु छन्दःसु वृत्तेषु विद्यामानः मन्त्रः किं कथ्यते।
(क) ऋक् (ख) यजुस् (ग) साम (घ) अथर्वा

६. ऋक् यदा गीतिविशिष्टा भवति तदा सा किम् समाख्यायते।
(क) ऋक् (ख) यजुस् (ग) साम (घ) अथर्वा

७. यः मन्त्रः पद्यरूपेण नास्ति, गीतिरूपेण नास्ति परन्तु कर्मणि प्रयुज्यते स कः।
(क) ऋक् (ख) यजुस् (ग) साम (घ) अथर्वा

८. शुक्लकृष्णभेदन कः वेदः विभक्तः।
(क) ऋक् (ख) यजुस् (ग) साम (घ) अथर्वा

९. शौनकशाखा कस्य वेदस्य।
(क) ऋक् (ख) यजुस् (ग) साम (घ) अथर्वा

१०. मन्त्रांशं विहाय वेदस्य अवशिष्टः भागः कः।
(क) ऋक् (ख) यजुस् (ग) साम (घ) ब्राह्मणम्

११. चतुर्षु विधिषु अयमन्यतमः।
(क) उत्पत्तिविधिः (ख) गुणविधिः (ग) प्रधानविधिः (घ) अनुवादः

---

## ३.१.३) विनियोगविधिः

विनियोगविधेः बोधितानि अङ्गानि सिद्धरूपाणि क्रियारूपाणि चेति द्विविधानि। क्रियारूपाणि अङ्गानि च गुणकर्म प्रधानकर्म चेति द्विविधानि। तत्र गुणकर्म सन्निपत्योपकारकम्। प्रधानकर्म आरादुपकारकम्।

प्राकारन्तरेण कर्मस्वरूपं च द्विविधम्- गुणकर्म अर्थकर्म च।



### गुणकर्म

तत्र क्रतुकर्मकारकाण्याश्रित्य विहितं गुणकर्म। यज्ञस्य साधनभूतं यद् द्रव्यादि तस्य संस्कारजनकं कर्म गुणकर्म। तस्य कर्मणः चत्वारः भेदाः- उत्पत्तिकर्म, आप्यकर्म, विकृतिकर्म, संस्कृतिकर्म चेति।

**उत्पत्तिकर्म** - यत् साधनं पूर्वं नासीत् परन्तु तस्य उत्पत्तिः कर्तव्या अस्ति। तत् कर्म उत्पत्तिकर्म कथ्यते। यथा वसन्ते ब्राह्मणः अग्निम् आदधीत इत्यत्र वसन्ते अग्निः संस्कारविशिष्टः उत्पादनीयः अस्ति। एतत्कर्म उत्पत्तिकर्म। यूपं तक्षति इति अपरम् उदाहरणम्। यूपः पूर्वं नासीत्। अनेन तक्षणकर्मणा स उत्पाद्यते। अत इदम् उत्पत्तिकर्म।

**आप्यकर्म** - साधनम् अस्ति, परन्तु तस्य प्राप्तिः कर्तव्या। तत्कर्म आप्यकर्म। यथा स्वाध्यायोऽध्येतव्य इति। अत्र विद्या अस्ति, सा प्राप्तव्या। यथा वा पयः दोग्धि। अत्र पयः अस्ति, तस्य दोहः कर्तव्यः इति।

**विकृतिकर्म** – द्रव्यादीनाम् पूर्वरूपे विकारः क्रियते, ततः परं यागादिषु आदीयते। तत्कर्म विकृतिकर्म। यथा - व्रीहीन् अवहन्ति इत्यत्र व्रीहीणाम् अवहनेन विकारः भवति। अतः ईदृक् कर्म विकृतिकर्म।

**संस्कृतिकर्म** – द्रव्यादिषु कश्चित् संस्कारविशेषः अनेन कर्मणा भवति। यथा व्रीहीन् प्रोक्षति इत्यत्र व्रीहीणाम् प्रोक्षणम् अर्थात् विशिष्टं प्रक्षालनं क्रियते। अयं संस्कारविशेषः। अत ईदृक् कर्म संस्कृतिकर्म। एतानि चत्वारि कर्माणि यागकर्मणः अङ्गानि एव।

### अर्थकर्म

आत्मसमवेतापूर्वजनकं कर्म अर्थकर्म। यथा अग्निहोत्रं दर्शपूर्णमासौ प्रयाजाः अनुयाजाश्च। एतत्कर्मकर्ता अपूर्वं लभते। **अङ्गं प्रधानं** चेति तस्य प्रकारद्वयम्। यत् कर्म अन्यस्य कृते क्रियते तद् अङ्गकर्म। यत् कर्म स्वस्य कृते क्रियते तत् प्रधानं कर्म।

अङ्गकर्म द्विविधम् - संनिपत्योपकारकम् आरादुपकारकं चेति।

**संनिपत्योपकारकम्** - यानि अङ्गानि साक्षात् परम्परया वा विहितफलानां साधनरूपस्य यागस्य शरीरं व्यूहं निष्पाद्य शरीरद्वारा तदुत्पत्त्यपूर्वयोगीनि भवन्ति तानि अङ्गानि सन्निपत्य, पतित्वा पतित्वा सम्मील्य सम्मील्य एकेन सह द्वितीयं मिलित्वा मिलित्वा द्रव्यं देवताम् उद्दिश्य उद्दिश्य विधीयमानानि उपयोगीनि भवन्ति तानि सन्निपत्योपकारकाणि कथ्यन्ते। एतानि द्रव्यदेवतागतसंस्कारद्वारा यागोत्पत्त्यपूर्वोपकारकाणि भवन्ति।

**आरादुपकारकम्** - द्रव्यं यागं च अनुद्दिश्य, केवलं द्रव्ययागाद्युद्देशरहितं, विधीयमानं विधिना अनुष्ठानार्थम् उपश्राव्यमाणं कर्म। यथा प्रयाजाऽऽज्यभागाऽनुयाजादिस्वरूपं कर्म आरादुपकारकं साक्षादुपकारकम् अङ्गियागोपकारकं भवति। प्रयाजाऽऽज्यभागाऽनुयाजाद्याः आरादुपकारकाः अर्थात् परमापूर्वोत्तौ एव उपकारिणः। ते न द्रव्यदेवतागतसंस्कारजनकाः। इति निरूपितः विनियोगविधिः।



वेदः

ऋग्वेदः यजुर्वेदः सामवेदः अथर्ववेदः

मन्त्रः ब्राह्मणम् मन्त्रः ब्राह्मणम् मन्त्रः ब्राह्मणम् मन्त्रः ब्राह्मणम्

विधिः निषेधः नामधेयम् अर्थवादः

१) प्रधानः (विधिः)
२)गुणविधिः ३)विशिष्टविधिः

गुणवादः अनुवादः भूतार्थवादः

विधिशेषः निषेधशेषः

उत्पत्तिविधिः विनियोगविधिः अधिकारविधिः प्रयोगविधिः

सहकारीणि षट् प्रमाणानि

प्रशंसा निन्दा परकृतिः पुराकल्पः

श्रुतिः लिङ्गम् वाक्यम् प्रकरणम् स्थानम् समाख्या

## ३.१.४) निषेधः

पुरुषस्य निवर्तकं वाक्यं निषेधः। यदि किञ्चित् कार्यं पुरुषस्य अनर्थजनकं भवेत् तदा वेदवाक्यं तस्मात् कार्यात् पुरुषं निवर्तयति। तथाहि - 'न कलञ्जं भक्षयेत्' इति निषेधवाक्यम् अनर्थजनकात् कलञ्जभक्षणात् पुरुषं निवर्तयति।

## ३.१.५) नामधेयः

विधेयार्थपरिच्छेदकं वाक्यम् नामधेयः इति उच्यते। येन वाक्येन विधेयस्य कर्तव्यतया उपदिष्टस्य यागस्य परिच्छेदः भवति, अर्थात् नाम ज्ञायते तत् नामधेयवाक्यम्। तथाहि - उद्भिदा यजेत पशुकामः इति नामधेयस्य उदाहरणम्। अत्र उद्भिदा इति पदेन न यागसामान्यस्य विधानम्, अपि तु उद्भिन्नामकेन यागेन पशुकामः यजेत इति यागविशेषस्य विधानम्।

## ३.१.६) अर्थवादः

प्राशस्त्य-निन्दान्यतरपरं वाक्यम् **अर्थवादः**। यस्य वेदवाक्यस्य स्वार्थप्रतिपादने तात्पर्यं नास्ति, किन्तु यत् वेदवाक्यं प्रशंसाद्वारा निन्दाद्वारा वा विधेयस्य निषेध्यस्य कर्तव्याकर्तव्यत्वं सूचयति तत् अर्थवादवाक्यम् इति उच्यते। यथा - वायुर्वै क्षेपिष्ठा देवता इति वेदवाक्येन वायोः शीघ्रगामित्वम् सूच्यते। वस्तुतः अनेन वायोः प्रशंसा क्रियते। तेन च वायुः शीघ्रफलदाता इति सूच्यते।

अर्थवादस्य गुणवादः अनुवादः भूतार्थवादः चेति त्रयः प्रकाराः सन्ति। तदुक्तं -

विरोधे गुणवादः स्यादनुवादोऽवधारिते।<br>
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥ इति।

**गुणवादः**- प्रमाणान्तरविरुद्धार्थबोधको गुणवादः। पशुयागे पशुनियोजनाय कश्चित् स्तम्भः क्रियते। स यूपः कथ्यते। यूपस्य स्तुतये - आदित्यो यूप इति कथ्यते। अत्र आदित्ययूपयोः अभेदः प्रकटितः। वस्तुतस्तु आदित्यस्य यूपाद् भेदः सुप्रसिद्ध एव। कथं तर्हि आदित्यो यूपः। प्रत्यक्षादिप्रमाणान्तरविरोधोऽत्र स्पष्टं परीलक्ष्यते। यूपे आदित्याभेदः इति वाक्यस्य मूख्यार्थो बाधितः अस्ति। मूख्यार्थबाधे लक्षणा क्रियते। अत्र आदित्यस्य उज्वलनत्वात्मको गुणः यूपे अस्ति इति मत्वा गुणसादृश्याद् लक्षणा कृता। गुणद्वारा लक्षणा कृता। अतः अयं गुणवादः।

**अनुवादः**- प्रमाणान्तरप्राप्त्यर्थबोधकः अनुवादः। प्रत्यक्षादिप्रमाणेन यत् निर्धारितं, ज्ञातमेव तथ्यम् येन प्रकट्यते सः अनुवादः भवति। अग्निः हिमस्य अर्थात् शैत्यस्य औषधमिति सुविदितम्। अग्निः शैत्यं नाशयति इति केनचित् अन्येन प्रमाणेन निश्चितम्। तस्य एवार्थस्य – अग्निर्हिमस्य भेषजम् इति वाक्येन प्रकटनं कृतम्। अनेन वाक्येन अग्नेः स्तुतिः कृता। अत्र न प्रमाणान्तरविरोधः अस्ति। अतः अत्रायमर्थवादः अनुवादः कथ्यते।

**भूतार्थवादः**- प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको भूतार्थवादः। प्रमाणान्तरविरोधो वा प्रमाणान्तरप्राप्तिः वा यत्र नास्ति स भूतार्थवादः। अत्र इन्द्रो वृत्राय वज्रमुद्यच्छद् इति वाक्यस्य यः अर्थः तस्य केनापि अन्येन प्रमाणेन विरोधः नास्ति। स च अर्थः अन्येन केनापि प्रमाणेन प्राप्तः ज्ञातः अपि नास्ति। अतः गुणवादे दृष्टः विरोधः, अनुवादे दृष्टम् अवधारणम् इति उभयमत्र नास्ति, उभयोः हानमस्ति, परित्यागः अस्ति। अत्र योऽयमर्थवादः स भूतार्थवादः कथ्यते। अत्र वाक्ये इन्द्रस्य स्तुतिः अस्ति।

त्रयः अपि अर्थवादाः विधेः स्तुतिं कुर्वन्ति। विधिस्तुतिपरत्वं तेषु त्रिषु अपि अस्ति। इदं साम्यं तेषु। यस्य ज्ञानस्य विषयः अबाधितः अस्ति, अज्ञातश्च अस्ति, तद्विषयकं ज्ञानं प्रमा कथ्यते। तस्मिन्नेव



ज्ञाने प्रामाण्यं भवति। भूतार्थवादे यो विषयः ज्ञायते स बाधितः नापि पूर्वतः ज्ञातः। अतः तस्य प्रामाण्यम् अस्ति। गुणवादे तु बाधितविषयः ज्ञायते, अनुवादे तु पूर्वतः ज्ञातः एव विषयः ज्ञायते। अतः गुणवादानुवादयोः प्रामाण्यं नास्ति। ब्राह्मणस्य विषयमवलम्ब्य अग्रे जैमिनिः धर्ममीमांसां रचितवान्। तत्र एते विषयाः सविस्तरम् प्रकटिताः सन्ति। तदेवं निरूपितोऽर्थवादभागः।



## पाठगतप्रश्नाः

१२. इदं न गुणकर्म।

(क) उत्पत्तिकर्म (ख) आप्यकर्म (ग) विकृतिकर्म (घ) आरादुपकारककर्म

१३. अनर्थजनकाद् कर्मणः पुरुषं निवारयति तद् वेदवाक्यं किमुच्यते।

(क) विधिः (ख) निषेधः (ग) नामधेयः (घ) अर्थवादः

१४. विधेयार्थपरिच्छेदकं वेदवाक्यम् किम् उच्यते।

(क) विधिः (ख) निषेधः (ग) नामधेयः (घ) अर्थवादः

१५. प्राशस्त्य-निन्दान्यतरपरं वेदवाक्यम् किमुच्यते।

(क) विधिः (ख) निषेधः (ग) नामधेयः (घ) अर्थवादः

१६. अयं नार्थवादः।

(क) गुणवादः (ख) अनुवादः (ग) भूतार्थवादः (घ) प्रामाण्यवादः

१७. अन्येन प्रमाणेन सिद्धस्य अर्थस्य विरुद्धम् अर्थं यद् वेदवाक्यं बोधयति तत्किम्।

(क) गुणवादः (ख) अनुवादः (ग) भूतार्थवादः (घ) प्रामाण्यवादः

१८. अन्येन प्रमाणेन सिद्धमेव अर्थं यद् वेदवाक्यं बोधयति तत्किम्।

(क) गुणवादः (ख) अनुवादः (ग) भूतार्थवादः (घ) प्रामाण्यवादः

१९. अन्येन प्रमाणेन सिद्धम् विरुद्धं वा अर्थं न बोधयति तद् वेदवाक्यम् किम्।

(क) गुणवादः (ख) अनुवादः (ग) भूतार्थवादः (घ) प्रामाण्यवादः

## ३.१.७) आरण्यकानां परिचयः

मन्त्रब्राणयोर्वेदनामधेयम् इति प्रसिद्धं वेदलक्षणम्। आरण्यकोपनिषदौ ब्राह्मणानां परिशिष्टग्रन्थ इव विद्येते। अरण्ये पाठात् आरण्यकमिति अन्वर्थं नाम इति प्रख्यातो वेदभाष्यकारः सायणोऽभाणीत्। तदुक्तम्-

अरण्याध्ययनादेतदारण्यकमितीर्यते।

अरण्ये तदधीयेतेत्येवं वाक्यं प्रवक्ष्यते॥ इति।



महाभारते एवमुच्यते यथा ओषधीभ्योऽमृतमुद्धृतं तथैव श्रुतेः सारं समुद्धृत्य आरण्यकम् प्रणीतम्। ब्राह्मणभागस्यांशो यद्यपि आरण्यकमस्ति तथापि तदपेक्षया किञ्चिद् वैशिष्ट्यम् आवहति आरण्यकम्। अत एव रहस्यब्राह्मणमित्यपि अस्ति तन्नामान्तरम्। गोपथब्राह्मणे रहस्यशब्देन आरण्यकम् अभिहितम्। वस्तुतो रहस्यशब्देन ब्रह्मविद्योच्यते। विषयविवेचनदृष्ट्या आरण्यकोपनिषदोः साम्यमस्ति। अतो बृहदारण्यकादयः उपनिषच्छब्देनापि व्यवह्रियन्ते।

## ३.१.८) वेदान्तः

यस्मिन् ब्राह्मणवाक्ये विधिः नोक्तः नापि निषेधो नामधेयम् अर्थवादः वा तद् ब्राह्मणवाक्यं वेदान्तवाक्यं कथ्यते। इदं वेदान्तवाक्यम् अज्ञातस्य अबाधितस्य च अर्थस्य ज्ञापकम् अस्ति। तथापि कर्मानुष्ठानस्य प्रतिपादकं न भवति। अतो न तद् विधिः। ब्रह्म आनन्दस्वरूपं ज्ञानस्वरूपं च। वेदान्तवाक्यस्य अर्थः इदं ब्रह्म एव। एतद्ब्रह्मलाभ एव मोक्षाख्यः पुरुषार्थः।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।

अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

उपक्रमोपसहारौ अभ्यासः अपूर्वता फलम् अर्थवादः उपपत्तिः चेति षड् लिङ्गानि सन्ति वेदान्तश्रवणस्य। वेदान्तग्रन्थे एतानि षड् लिङ्गानि प्रायः भवन्ति। इत्थं वेदान्तवाक्यं स्वत एव प्रमाणभूतम्। अन्तःकरणे विद्यमाना पापपुण्यरूपा अशुद्धिः वेदोक्तविधिद्वारा अपाक्रियते। इत्थं सर्वे विधयः अत्र उपयोगितां भजन्ते। परन्तु वेदान्तवाक्यं विधिषु अनुपयोगि। अतः वेदान्तवाक्यं न पूर्वविधेः शेषः अपि। अतः वेदान्तः न विधिः, न अर्थवादः, न द्वयोः शेषः। वेदान्ते क्वचित् पूर्वम् अज्ञातस्य ज्ञानं भवति इति हेतोः वेदान्तः अपि विधिः इति व्यपदेशः भवति। क्वचिच्च वेदान्ते विधिबोधकपदं नास्ति, परन्तु अज्ञातस्य ज्ञापनं तत्र भवति। अतः स भूतार्थवादः अपि कथ्यते इति अन्यदेतत्। वेदस्य यस्मिन् भागे विषयोऽयं प्रतिपादितः अस्ति स भाग उपनिषद् इति उच्यते।

## ३.१.९) उपनिषद्

आरण्यकस्य परिशिष्टभूता उपनिषत्। आरण्यके आरब्धा अध्यात्मतत्त्वालोचना उपनिषत्सु एव परां स्फूर्तिं लभमाना परिसमाप्ता। शब्दराशेः वेदस्य अन्तिमो भागः उपनिषद्। अतः सा वेदान्तः। वेदस्य लक्ष्यमेव एव उपनिषदि आम्नाता विद्या। अत एव वेदशिरोभूता उपनिषद्। अत एव सा वेदान्त इत्युच्यते।

विशरणगत्यवसादनार्थकाद् उप-पूर्वात् नि-पूर्वात् अन्तर्भावितणिजन्तस्य सद्-धातोः क्विपि प्रत्यये उपनिषद् इति शब्दो व्युत्पद्यते। उपनिषद् इति शब्दस्यार्थो ब्रह्मविद्या। ब्रह्मविद्या स्वसंशीलिनां संसारसारतामतिं सादयति विशादयति शिथिलयतीति वा, परमश्रेयोरूपं प्रत्यगात्मानं सादयति गमयतीति वा, दुःखजन्मादिमूलमज्ञानं सादयति उन्मूलयतीति वा उपनिषत्पदवाच्या। यद्यपि ब्रह्मविद्यैव उपनिषत् तथापि गौणार्थे ब्रह्मविद्याप्रकाशके ग्रन्थेऽपि उपनिषच्छब्दस्य उपचारेण प्रयोगो भवति।



### वेदान्तस्य सारः

अधुना समासेन समग्रस्य वेदान्तस्य सारः उच्यते।

ब्रह्मैव एकं सद् अन्यत् सर्वं रज्जौ सर्प इव ब्रह्मणि अविद्यया अध्यस्तम् असदेव। जीवा हि अविद्यायाः प्रभावात् असद् वस्तुजातं सत्त्वेन विवेचयन्तः स्वरूपतो निष्कामा ब्रह्मभूता अपि स्वस्वरूपं विस्मृत्य अभिन्नमपि भिन्नं मन्यमानाः कामयमानाः द्विषन्तो वा कर्माणि अनुतिष्ठन्तः तत्फलं शुभाशुभम् उपभुञ्जाना जननात् जननान्तरम् अटाट्यमानाः संसारसिन्धौ आवर्तन्ते। यावन्न स्वरूपावरकमायाया अपाकृतिः तावत् चलतीयम् अविरामा संसारावृत्तिः।

अतः निष्कामकर्मद्वारा चित्तशुद्धिः भवति। उपासनया चित्तस्य एकाग्रता भवति। एवञ्च इहामुत्रफलभोगविरागवान् शमदमादिषट्कसम्पत्तिम् अर्जयित्वा संसार-ताप-दाहम् असहमानो मुमुक्षुः यदि ब्रह्मज्ञं गुरुम् उपसर्पति। ततश्च गुरुमुखाद् वेदान्तवाक्यं शृणोति। ततश्च मननं निदिध्यासनं च आचरति। तेन समाधौ ब्रह्मणि लीनस्य तस्य माया भवति विध्वस्ता। नित्यप्राप्तं तस्य ब्रह्मस्वरूपं गगने भास्वान् इव प्रकाशते। सर्वत्र आत्मानम् आत्मनि च सर्वम् अवलोकयतः किमपि द्वेष्यं वा काम्यं वा तस्य नावशिष्यते। तदर्थां च चेष्टापि न भवति। कर्माभावात् फलमपि न फलति। फलाभावात् फलोपभोगाय शरीरपरिग्रहोऽपि नावश्यकः। स ब्रह्मवित् पुनर्न जायते। यावत् प्रारब्धक्षयो न जायते तावत् स शरीरधारणाय आवश्यककर्ममात्रम् अनुतिष्ठति कर्तव्यमात्रबुद्ध्या। यथा पुरुषः सिक्थमूर्तिं पश्यन् तस्याः सिक्थपिण्डमात्रस्वरूपतामपि अन्वीक्षते तद्वत् ब्रह्मविदपि जगत्सर्वं पश्यन्नपि तदनुस्यूतां ब्रह्मस्वरूपतामपि अन्वीक्षते। क्षीणे च प्रारब्धे शरीरं सन्त्यज्य ब्रह्मणि लीयते। ब्रह्मैव सन् ब्रह्माप्नोति इति वेदान्तस्य सारः।

इत्थम् विधिः अर्थवादः आरण्यकम् तद्भेदः उपनिषद् वेदान्तः इति ब्राह्मणम् एतावता निरूपितम्।

## ३.२) वेदानां प्रयोजनभेदेन भेदः

वेदैः मानवानां यत् प्रयोजनं सिध्यति तदनुसारि विभागः अपि वेदस्य क्रियते। तथाहि कर्मकाण्डं ब्रह्मकाण्डम् इति भेदद्वयम्। धर्मार्थकाममोक्षाख्येषु पुरुषार्थेषु धर्मार्थकामानां साधनभूतं कर्मकाण्डम्। मोक्षसाधनभूतम् ब्रह्मकाण्डम्।

वेदे यत् कर्म प्रतिपाद्यते तस्य विपुलविस्तरः कालक्रमेण अभवत्। किं कर्म केन कर्तव्यम्। कः वेदमन्त्रः केन पठनीयः इत्यादिविषयाणां सुष्ठु कार्यविभागस्य आवश्यकता अनुभूता। अत एव वेदस्य यथा प्रयोगः भवति तदनुसारि वेदस्य विभाजनं कृतम्। तदर्थं तेषां नामानि स्थिरीकृतानि। इदं समाख्या (नाम) इति कथ्यते। हौत्रप्रयोगः आध्वर्यवप्रयोगः औद्गात्रप्रयोगः इति त्रयः प्रयोगाः सन्ति। तदनुसारात् यज्ञस्य निर्वाहाय ऋग् यजुः साम इति त्रयो भेदाः वेदस्य जाताः। ऋग्वेदीयं कर्म यः करोति सः होता कथ्यते। तेन कर्तव्यः प्रयोगः हौत्रप्रयोगः। यजुर्वेदीयं कर्म यः करोति स अध्वर्युः कथ्यते। तेन कर्तव्यः प्रयोगः आध्वर्यवप्रयोगः उच्यते। सामवेदीयं कर्म यः करोति स उद्गाता कथ्यते। तेन कर्तव्यः प्रयोगः औद्गात्रप्रयोगः कथ्यते। अथर्ववेदस्यापि ऋत्विग् विद्यते। स ब्रह्मा इति कथ्यते।



आहुतिप्रदानकाले याज्या पुरोनुवाक्या इति अनयोः ऋग्वेदीयान् मन्त्रान् होता पठति। गोदोहनं व्रीहिनिर्वापः इत्यादीनि कार्याणि यजुर्वेदे सन्ति। एतद्विषयमन्त्रपाठम् अध्वर्युः करोति। आज्यस्तोत्राणि पृष्ठस्तोत्राणि इत्यादीनि स्तोत्राणि सामवेदे सन्ति। तानि उद्गाता गायति।




कर्मकाण्डे नित्यं नैमित्तिकं काम्यं निषिद्धं चेति चतुर्धा कर्म प्रतिपाद्यते। एतेषामपि कर्मणां प्रकृतिकर्म विकृतिकर्म इति विभागः अस्ति। इति चतुर्णां वेदानां प्रयोजनभेदेन भेद उक्तः।



## पाठगतप्रश्नाः

२०. आरण्यकस्य परिशिष्टभूतं किम्।

(क) ऋङ्मन्त्रस्य (ख) यजुर्मन्त्रस्य (ग) सामसंहितायाः (घ) उपनिषदः

२१. रहस्यशब्देन किमुदीर्यते।

(क) मन्त्रः (ख) कल्पः (ग) कर्मविद्या (घ) ब्रह्मविद्या

२२. यस्मिन् ब्राह्मणवाक्ये विधिः निषेधो नामधेयम् अर्थवादः इति नोक्ताः तद् ब्राह्मणवाक्यं किमुदीर्यते।

(क) वेदान्तः (ख) ब्राह्मणम् (ग) आरण्यकम् (घ) मन्त्रः

२३. वेदान्तश्रवणस्य कति लिङ्गानि

(क) त्रीणि (ख) चत्वारि (ग) पञ्च (घ) षट्

२४. इदं ब्राह्मणभागः अपि अस्ति, वेदान्तश्रवणस्य लिङ्गमपि अस्ति।

(क) विधिः (ख) अभ्यासः (ग) अर्थवादः (घ) अपूर्वता

२५. उपनिषत्पदस्य मुख्यार्थः कः।

(क) मुण्डकादिग्रन्थः (ख) ब्रह्मविद्या (ग) धर्मविद्या (घ) मन्त्रात्मकवेदः

२६. ऋग्वेदीयं कर्म कः करोति।



(क) होता (ख) अध्वर्युः (ग) उद्गाता (घ) ब्रह्मा

२७. यजुर्वेदीयं कर्म कः करोति।

(क) होता (ख) अध्वर्युः (ग) उद्गाता (घ) ब्रह्मा

२८. सामवेदीयं कर्म कः करोति।

(क) होता (ख) अध्वर्युः (ग) उद्गाता (घ) ब्रह्मा

२९. हौत्रप्रयोगः केन वेदेन सम्बद्धः।

(क) ऋक्- (ख) यजुः- (ग) साम- (घ) अथर्व-

३०. आध्वर्यवप्रयोगः केन वेदेन सम्बद्धः।

(क) ऋक्- (ख) यजुः- (ग) साम- (घ) अथर्व-

३१. औद्गात्रप्रयोगः केन वेदेन सम्बद्धः।

(क) ऋक्- (ख) यजुः- (ग) साम- (घ) अथर्व-

## ३.३) वेदाङ्गानि

अष्टादश विद्यास्थानानि। तत्र प्रथमं चत्वारो वेदाः निरूपिताः। अधुना अङ्गानि निरूप्यन्ते। वेदस्य षड् अङ्गानि सन्ति। शिक्षा व्याकरणं निरुक्तं छन्दः ज्योतिषम् कल्पः इतीमानि अङ्गानि। वेदाध्ययनं षडङ्गसहितमेव क्रियते। तत्रायं श्लोकसमुदायः सुप्रसिद्धः -

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।

ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।

शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।

तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।।(पा.शि.)

एतस्मिन् श्लोकद्वये वेदः पुरुषः इव कल्पितः। तस्य पुरुषस्य पादौ तु छन्दःशास्त्रम्, हस्तौ कल्पशास्त्रम्, चक्षुः ज्योतिषशास्त्रम्, श्रोत्रम् निरुक्तशास्त्रम्, घ्राणम् शिक्षाशास्त्रम् एवञ्च मुखम् व्याकरणशास्त्रम् इति प्रतिपादितम् अस्ति। अत्र यथा पुरुषस्य मुखं शरीरे मुख्यं भवति, तद्वत् व्याकरणशास्त्रस्य स्थानम् अस्ति। एतावद् महत्त्वम् व्याकरणशास्त्रस्य। वेदानां रक्षणार्थम् व्याकरणशास्त्रस्य अतीव उपयोगिता अस्ति। व्याकरणज्ञानं विना वेदज्ञानं भवितुं नार्हति। वेदस्य षड् अङ्गानि सन्ति। तेषु व्याकरणम् एव प्रधानं भवति। प्रधाने च कृतो यत्नः फलवान् भवति। इत्थं सर्वाणि अङ्गानि गुरुत्वपूर्णानि सन्ति।

### ३.३.१) शिक्षा

स्वरवर्णोच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते सा शिक्षा।



शिक्षाया उदात्तानुदात्त-स्वरित-ह्रस्व-दीर्घ-प्लुतादि-विशिष्ट-स्वर-व्यञ्जनात्मक-वर्णोच्चारण-विशेषज्ञानं प्रयोजनम्। तदभावे मन्त्राणाम् अनर्थकत्वात्। तथाचोक्तम् (शि- ५२)

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।

स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥ इति।(शि- ५२)

स्वराः व्यञ्जनानि चेति द्वेधा वर्णाः संस्कृते सन्ति। स्वयंभुवा प्रोक्ताः शम्भुमते ६३ वर्णाः ६४ वा वर्णाः सन्ति। स्वराणाम् उदात्तः अनुदात्तः स्वरितः ह्रस्वः दीर्घः प्लुतः अनुनासिकः अननुनासिकः इति भेदाः भवन्ति। वर्णानाम् ऊरः कण्ठः शिरः जिह्वामूलं दन्ताः नासिका ओष्ठौ तालु चेति अष्टौ उच्चारणस्थानानि सन्ति। आभ्यन्तरबाह्यभेदेन यत्नः द्विविधो भवति। आभ्यन्तरः चतुर्धा पञ्चधा वा वर्तते। बाह्यः एकादशधा वर्तते। इति नैके विषयाः शिक्षाग्रन्थेषु अन्तर्भवन्ति। वर्णस्य शुद्धम् उच्चारणं कर्तुं शिक्षाशास्त्रम् अवलम्ब्यते वैदिकैः। शुद्धम् उच्चारणं न क्रियते चेद् मन्त्रः अर्थहीनः विपरीतार्थको वा सम्पद्यते। तदा इष्टं फलं न लभ्यते। अपि च मन्त्रेण यः विपरीतः अर्थः प्रकटितः तथाविधं फलम् उत्पद्यते। अतः इष्टप्राप्तये अनिष्टहानाय शुद्धम् उच्चारणम् नूनं कर्तव्यम्। तत्र इन्द्रवृत्रासुरयोः आख्यायिका सुप्रसिद्धा अस्ति। विस्तरभिया अत्र न दीयते।

पाणिनिमतम् अवलम्ब्य पाणिनीयशिक्षा प्रणीता अस्ति। इयं सर्ववेदसाधारणी अस्ति। तस्यां पञ्च खण्डाः सन्ति। वेदानां बहवः शाखाः सन्ति। शाखानां स्वकीयाः काश्चित् शिक्षाः मुनिभिः कृताः। प्रतिशाखं भिन्नाः ताः शिक्षाः प्रातिशाख्यम् इति कथ्यन्ते।

## ३.३.२) व्याकरणम्

पाणिनिमुनिः महेश्वरप्रसादेन चतुर्दश सूत्राणि लेभे। तानि अवलम्ब्य अष्टाध्यायी नाम सूत्रात्मकं ग्रन्थं स प्रणीतवान्। तस्मिन् अष्टौ अध्यायाः, प्रत्यध्यायं चत्वारः पादाः च सन्ति। ३९९२ सूत्राणि तत्र सन्ति। तत्र प्रथमं सूत्रम् तावत् - वृद्धिरादैच् इति। भगवता पाणिनिना अष्टाध्याय्यां यदुक्तं तस्य चिन्तां, यन्नोक्तं किन्तु आवश्यकं तस्य चिन्तां, यद् अवक्तव्यम् किन्तु उक्तं तस्य चिन्तां वार्तिके कात्यायनमुनिः कृतवान्। सा चिन्ता उक्तानुक्तदुरुक्तचिन्ता कथ्यते। कात्ययनेन यद् वार्तिकं विरचितं तस्मिन् भगवान् पतञ्जलिः महाभाष्यम् आरचितवान्। महाभाष्ये मूलसूत्रव्याख्यानमपि वर्तते, वार्तिकव्याख्यानमपि वर्तते। कात्यायनेन कृतानि बहूनि वार्तिकानि पतञ्जलिना प्रत्याख्यातानि। इत्थं पाणिनिकात्यायनपतञ्जलिभिः त्रिभिः मुनिभिः अस्य व्याकरणस्य सर्वाङ्गसम्पूर्णता साधिता। अत इदं व्याकरणं त्रिमुनिव्याकरणं कथ्यते। महेश्वरप्रसादेन अस्यारम्भः अभवत्। अतः अयं सम्प्रदायः माहेश्वरसम्प्रदायः कथ्यते। पाणिनिव्याकरणे एव वैदिकमपि व्याकरणमस्ति। अत एव इदं वेदाङ्गत्वं भजते। अन्यानि सन्ति बहूनि व्याकरणानि। किन्तु तेषु वेदानां व्याकरणं नास्ति इति हेतोः तानि वेदाङ्गत्वेन न गण्यन्ते। रक्षा ऊहः आगमः लघुः असन्देहः इति एतानि व्याकरणाध्ययनस्य मुख्यानि प्रयोजनानि सन्ति। अन्यानि गौणप्रयोजनानि अपि सन्ति। तानि सविस्तरं महाभाष्ये सुव्यक्तानि। व्याकरणे प्रतिपदं प्रकृतिप्रत्ययविभागः कल्प्यते। तयोः योगेन साधुपदानि व्याक्रियन्ते। इत्थं व्याकरणं साधुपदानि कानि इति ज्ञानं कारयति।





## पाठगतप्रश्नाः

३२. वेदस्य हस्तस्थानीयं किमङ्गं भवति।
(क) शिक्षा (ख) व्याकरणम् (ग) छन्दः (घ) कल्पः

३३. वेदस्य मुखस्थानीयं किमङ्गं भवति।
(क) शिक्षा (ख) व्याकरणम् (ग) छन्दः (घ) कल्पः

३४. वेदस्य श्रोत्रस्थानीयं किमङ्गं भवति।
(क) शिक्षा (ख) व्याकरणम् (ग) छन्दः (घ) निरुक्तम्

३५. शिक्षा वेदस्य किमङ्गमिव भवति।
(क) हस्तौ (ख) पादौ (ग) श्रोत्रम् (घ) घ्राणम्

३६. व्याकरणं वेदस्य किमङ्गमिव भवति।
(क) हस्तौ (ख) पादौ (ग) श्रोत्रम् (घ) मुखम्

३७. ज्योतिषम् वेदस्य किमङ्गमिव भवति।
(क) हस्तौ (ख) पादौ (ग) श्रोत्रम् (घ) चक्षुः

३८. स्वरवर्णोच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते तदङ्गं किमुदीर्यते।
(क) शिक्षा (ख) व्याकरणम् (ग) छन्दः (घ) निरुक्तम्

३९. अष्टाध्याय्याम् कति पादाः सन्ति।
(क) १० (ख) १६ (ग) २४ (घ) ३२

४०. त्रिमुनिव्याकरणे त्रिषु मुनिषु अयं नास्ति।
(क) पाणिनिः (ख) पतञ्जलिः (ग) कात्यायनः (घ) कैयटः

४१. अयं व्याकरणस्य सम्प्रदायः।
(क) काणादः (ख) माहेश्वरः (ग) पातञ्जलः (घ) पाणिनीयः

४२. प्रकृतिप्रत्ययविभागेन पदसाधुत्वस्य ज्ञानं केन शास्त्रेण भवति।
(क) शिक्षा (ख) व्याकरणम् (ग) छन्दः (घ) निरुक्तम्

## ३.३.३) निरुक्तम्

शिक्षया शुद्धम् उच्चारणं, व्याकरणेन च साधुपदानि ज्ञायन्ते। ततः वेदस्य मन्त्रेषु स्थितानां पदानाम् अर्थः कः इति जिज्ञासा सुतराम् उदेति। तदर्थं भगवान् यास्कः निरुक्तं नाम ग्रन्थं व्यरचयत्। तस्मिन् चतुर्दश अध्यायाः सन्ति। क्वचित् द्वादश अध्यायाः, त्रयोदश अध्यायाः इत्यपि पाठभेदाः सन्ति।



अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम् इति सायणः ऋग्वेदभाष्यभूमिकायामाह। निरुक्ते के विषयाः सन्ति इति निम्नश्लोके सुनिबद्धमस्ति।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।

धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥

वर्णागमः वर्णविपर्ययः वर्णविकारः वर्णनाशः अर्थातिशयेन धातोः योगः इतीमे विषया निरुक्ते।

निरुक्ते नाम आख्यातम् निपातः उपसर्गः इति चत्वारि पदानि सन्ति इति निरूपितम्। ततश्च वैदिकमन्त्राणाम् अर्थः अपि प्रकाशितः। अनुष्ठेयस्य अर्थस्य प्रकाशनं मन्त्राः कुर्वन्ति। अतः तत्र ते करणरूपेण सन्ति। वाक्यार्थस्य ज्ञानं च वाक्यघटकीभूतानां पदानाम् अर्थज्ञानेन सम्भवति नान्यथा। अतः वेदमन्त्रे स्थितानां पदानाम् अर्थानाम् ज्ञानाय निरुक्तम् अपेक्षितमस्ति।

निश्चयेन घटयति पठति शब्दान् इति निघण्टुः। येषां पदानां प्रकृतिप्रत्ययविभागः न सुलभः तेषाम् अन्तर्भावः निघण्टौ वर्तते। निरुक्ते अन्तर्भूता एव वैदिकद्रव्याणां वैदिकदेवतानां च पर्यायशब्दाः निघण्टौ सन्ति। भगवान् यास्कः पञ्चाध्यायात्मकं निघण्टुनामकं ग्रन्थम् उपनिबबद्ध। तस्य व्याख्यां च कृतवान्। सा व्याख्या एव निरुक्तमुच्यते।

यास्ककृता निघण्टुव्याख्या निरुक्तं कथ्यते। नैघण्टुकाण्डम् नैगमकाण्डम् दैवतकाण्डमिति निघण्टोः त्रीणि काण्डानि सन्ति। तथाहि कारिका-

आद्यं नैघण्टुकाणं द्वितीयं नैगमन्तथा।

तृतीयं दैवतं चेति समाम्नायस्त्रिधा मतः॥ इति। (अनुक्रमणिकाभाष्यम्)

निघण्टुशब्दस्यार्थस्तावत्- एकार्थवाचिनां पर्यायशब्दानां सङ्घो यत्र प्रायेणोपदिश्यते तत्र निघण्टुशब्दः प्रसिद्धः। नैघण्टुकाण्डे पर्यायशब्दसङ्घातस्य उपदेशः अस्ति। तस्मिन् काण्डे त्रयः अध्यायाः सन्ति। निगमशब्दः वेदवाची। प्रायेण वेदे एव वर्तमानानाम् शब्दानां चतुर्थाध्याये निरूपणम् अस्ति। तदिदं नैगमकाण्डम्। तृतीयं काण्डं दैवतकाण्डम्। पञ्चमाध्यायः तत्रान्तर्भवति।

निघण्टोः त्रीणि काण्डानि। तेषां व्याख्या एव निरुक्तम्। निघण्टोः नैघण्टुनामकस्य प्रथमकाण्डस्य व्याख्या त्रिभिः अध्यायैः कृता। निघण्टोः नैगमनामकस्य द्वितीयकाण्डस्य व्याख्या चतुर्थाध्यायेन कृता। निघण्टोः दैवतकाण्डस्य व्याख्या पञ्चमाध्यायेन कृता। इत्थं निघण्टोः त्रीणि काण्डानि पञ्चसु अध्यायेषु विभक्तानि सन्ति।

निघण्टोः नैघण्टुकाण्डस्य व्याख्या निरुक्तस्य आद्येषु त्रिषु अध्यायेषु समुपलभ्यते। निघण्टोः चतुर्थाध्यायात्मकस्य नैगमकाण्डस्य व्याख्या निरुक्ते चतुर्थपञ्चमषष्ठाध्यायेषु विराजते। निघण्टोः पञ्चमाध्यायात्मकस्य दैवतकाण्डस्य व्याख्या नैरुक्ते सप्तमाध्यायम् आरभ्य द्वादशाध्यायपर्यन्तं विलसति। इत्थम् द्वादश अध्यायाः निरुक्ते। ततोऽपि अध्यायद्वयम् सर्वतो भिन्नं परिशिष्टरूपेण विद्यते। संकलनया चतुर्दश अध्यायाः निरुक्ते विलसन्ति। द्वयोः अध्याययोः अपूर्णतावशात् त्रयोदश अध्यायाः निरुक्तस्य इत्यपि केचित्। तत्रैत्थं विभागो विभावनीयः-

- निघण्टोः प्रथमद्वितीयतृतीयाध्यायाः=नैघण्टुकाण्डम्=निरुक्तस्य प्रथमद्वितीयतृतीयाध्यायाः



- निघण्टोः चतुर्थाध्यायः=नैगमकाण्डम्=निरुक्तस्य चतुर्थपञ्चमषष्ठाध्यायाः
- निघण्टोः पञ्चमाध्यायः=दैवतकाण्डम्=निरुक्तस्य सप्तमाध्यायतः द्वादशाध्यायं यावत्

व्याकरणनिरुक्तयोः अस्ति किञ्चिद् वैलक्षण्यम्। तद्यथा- औषधस्य द्वे रासायनिके स्थाने भवतः। प्रथमम् निर्माणस्थानम्। अत्र नानानिधानाम् ओषधानां युक्तेन मिश्रणेन वटीचूर्णादिकम् औषधं निर्मीयते। द्वितीयम् विश्लेषणस्थानम्। प्रथमस्थाने वटीचूर्णादिरूपेण निर्मितस्य औषधस्य अवयवाः पृथक् क्रियन्ते। ततः परीक्षणं क्रियते यत् एकस्मिन् ओषधे कस्य ओषधस्य कियती मात्रा अस्तीति।

एवमेव शब्दविषये द्वे शास्त्रे स्तः। प्रथमं व्याकरणम्। अत्र शब्दस्य मूलभागान् आदाय शब्दो निर्मीयते। द्वितीयं निरुक्तम्। पूर्वतः निर्मितस्य शब्दस्य निरुक्ते अवयवाः पृथक् पृथक् क्रियन्ते तदर्थज्ञानाय। एवं पूर्वतो वर्तमानस्य पुरातनस्य शब्दस्य विभागकरणशास्त्रं निरुक्तम् इति निरुक्तस्य शाब्दिकं स्वरूपम्।

## ३.३.४) छन्दः

ऋग्वेदस्य मन्त्रे पादाः सन्ति। मन्त्रे छन्दः अर्थात् वृत्तम् अस्ति। यः मन्त्राणां छन्दः न जानाति तथापि पठति, तस्य निन्दा श्रूयते। अपायः सम्भवति। यज्ञादिषु बहुविधानि कर्माणि भवन्ति। तानि च कर्माणि ब्राह्मणेन क्षत्रियेण वैश्येन च क्रियन्ते अधिकारभेदात्। तैत्तिरीयब्राह्मणे निर्देशो लभ्यते यत् ब्राह्मणः गायत्रीमन्त्रेण अग्न्यधिष्ठानं कुर्यात्। राजन्यः त्रिष्टुभा कुर्यात्। वैश्यः जगतीवृत्तेन कुर्यात्। इत्थम् अनुष्ठानविशेषः छन्दोविशेषनिमित्तेन विधीयते। अतः अत्रापि वेदप्रयोगः छन्दोज्ञानं विना नैव कर्तुं शक्यते। अतः छन्दोज्ञानं प्रयोजनम्। अतः छन्दसां प्रकाशनाय पिङ्गलेन मुनिना छन्दःसूत्रम् विरचितम्। तत्र त्रिषु अध्यायेषु गायत्री उष्णिग् अनुष्टुब् बृहती पङ्क्तिः त्रिष्टुब् जगती इति सप्त अलौकिकानि च्छन्दांसि विवृतानि, तेषाम् अवान्तरभेदाश्च। ततः परं लौकिकानि छन्दांसि पञ्चसु अध्यायेषु प्रकाशितानि। एतानि छन्दांसि पुराणेतिहासादिषु सन्ति।

## ३.३.५) ज्यौतिषम्

वैदिककर्माणि कदा कर्तव्यानि, कियता कालेन च कर्तव्यानि इति वेदे आम्नातमस्ति। अत एव कालस्य समुचिता गणना ज्ञानं च आवश्यकम्। वसन्ते ब्राह्मणोऽग्निमादधीत। ग्रीष्मे राजन्य आदधीत। शरदि वैश्य आदधीत।(तै.ब्रा.) फल्गुनीपूर्णमासे दीक्षेरन्। (तै.सं.७.४.८) कृत्तिकास्वग्निमादधीत। (तै.ब्रा.१.१.२.१) इत्यादिवचनैः ज्ञायते यद् विशिष्टे काले कर्माणि अनुष्ठेयानि इति। कालज्ञः एव एतत्कर्तुं समर्थः। अतः एव ज्यौतिषशास्त्रं प्रवृत्तम्। अनेन शास्त्रेण कालज्ञानं भवति। भगवान् आदित्यः गर्गादयश्च विविधान् ग्रन्थान् प्रणीतवान् कालज्ञानाय।

ज्यौतिषं कालबोधकं शास्त्रं भवतीति उक्तमेव। वेदे विहितानि कर्माणि यस्मिन् विशिष्टे काले कर्तव्यानि भवन्ति, स च काल विशिष्ट मास-पक्ष-तिथिप्रभृतीन् अंशान् आश्रित्य सिद्ध्यति। मास-पक्ष-तिथ्यादीनां विवेकः ज्यौतिषेण भवति। अतः कालविशेषमाश्रित्य विहितानां वैदिककर्मणाम् अनुष्ठाने



कालबाधकतया ज्यौतिषं महान्तम् उपकारं करोति। वेदभेदेन वेदाङ्गभूतं ज्यौतिषमपि भिन्नं भवति। लगधकृतं वैदाङ्गज्योतिषं बहु प्रसिद्धं वर्तते।

| अनुक्रमः | वेदाङ्गम् | प्रणेता | ग्रन्थनाम | अध्यायदिसंख्या |
|---|---|---|---|---|
| १ | शिक्षा | (अज्ञातः) | पाणिनीयशिक्षा | ५ खण्डाः |
| २ | व्याकरणम् | पाणिनिः | अष्टाध्यायी | ८ अध्यायाः |
| ३ | निरुक्तम् | यास्कः | निरुक्तम् | १४ अध्यायाः |
| ४ | छन्दः | पिङ्गलः | छन्दःसूत्रम् | ८ अध्यायाः |
| ५ | ज्यौतिषम् | आदित्यादयः | - | - |
| ६ | कल्पः | (नैके) | - | - |

## ३.३.६) कल्पः

यज्ञः यागः इष्टिः इत्यादिरूपेण विविधानि कर्माणि वेदेन प्रतिपाद्यन्ते। तेषु कर्मसु विविधाः मन्त्राः प्रयुज्यन्ते। एतेषां मन्त्राणां संख्या विपुला अस्ति। एकैकस्मिन् यागाद्यनुष्ठाने विविधानि कर्माणि भवन्ति। तेषामपि संख्या विपुला अस्ति। स्वरूपं च जटिलमस्ति। कदा केन क्रमेण किं कर्म कर्तव्यम्। कदा केन कस्य मन्त्रस्य प्रयोगः कर्तव्यः इति विषये स्पष्टता आवश्यकी। सर्वोऽपि जनः समग्रं वेदं पठित्वैव निर्णेतुम् असमर्थः। अतः विभागशः एते विषयाः विद्वद्भिः प्रतिपदिताः सकलहिताय। एते एव विषयाः कल्पस्य। तत्र आश्वलायनः शाङ्खायनः इत्यादिभिः आचार्यैः हौत्रप्रयोगाय कल्पसूत्राणि प्रणीतानि। अर्थात् ऋग्वेदीयः ऋत्विक् होता, तेन कर्तव्यः यः प्रयोगः हौत्रप्रयोगः, तदुद्दिश्य कल्पसूत्राणि प्रणीतानि। बौधायनः आपस्तम्बः कात्यायनः इत्यादिभिः आचार्यैः आध्वर्यवप्रयोगाय कल्पसूत्राणि प्रणीतानि। अर्थात् यजुर्वेदीयः ऋत्विक् अध्वर्युः, तेन कर्तव्यः यः प्रयोगः आध्वर्यवप्रयोगः, तदुद्दिश्य कल्पसूत्राणि प्रणीतानि। लाट्यायनः द्राह्यायणः इत्यादिभिः आचार्यैः औद्गात्रप्रयोगाय कल्पसूत्राणि प्रणीतानि। अर्थात् सामवेदीयः ऋत्विक् उद्गाता, तेन कर्तव्यः यः प्रयोगः औद्गात्रप्रयोगः, तदुद्दिश्य कल्पसूत्राणि प्रणीतानि। वैतानसूत्राणि अथर्ववेदीयानि कल्पसूत्राणि गोपथब्राह्मणम् अवलम्ब्य प्रणीतानि।

कल्पः यज्ञप्रक्रियानिर्वहणाय आवश्यकानां विषयाणां बोधकं शास्त्रं सूत्ररूपेण उपलभ्यते इति उक्तमेव।

प्रधानतया कल्पसूत्राणि द्विविधानि भवन्ति। श्रौतसूत्राणि स्मार्तसूत्राणि चेति। वेदोक्तानाम् अर्थात् श्रुत्युक्तानां कर्मविधीनां बोधकानि श्रौतसूत्राणि। स्मृत्युक्तानां कर्मविधीनां बोधकानि स्मार्तसूत्राणि। स्मार्तसूत्राण्यपि श्रुत्युक्तानां कर्मविधीनामेव बोधकानि भवन्ति। तत्र पुनः विभागद्वयमस्ति धर्मसूत्राणि गृह्यसूत्राणि चेति। वर्णाश्रमभेदेन धर्मं बोधयन्ति धर्मसूत्राणि। गृह्यसूत्राणि तु षोडशसंस्काराणां विधिबोधकं



शास्त्रम्। तस्य उपयोगः गृहस्थाश्रमे विशिष्य भवति। शुल्बसूत्रं तु श्रौतसूत्रे अन्तर्भवति। तच्च यज्ञकुण्ड-यज्ञशालादीनां मापनार्थम् अपेक्षितं भवति।



## पाठगतप्रश्नाः

४३. अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तत् सायणमतेन किम्।
(क) शिक्षा (ख) व्याकरणम् (ग) छन्दः (घ) निरुक्तम्

४४. निघण्टोः त्रिषु काण्डेषु इदं नास्ति।
(क) नैघण्टु (ख) नैरुक्त (ग) नैगम (घ) देवता

४५. निरुक्ते कति अध्यायाः।
(क) १० (ख) १४ (ग) १६ (घ) १८

४६. ब्राह्मणः कीदृशमन्त्रेण अग्न्यधिष्ठानं कुर्याद्।
(क) गायत्रीमन्त्रेण (ख) त्रिष्टुब्-मन्त्रेण (ग) बृहतीमन्त्रेण (घ) उष्णिग्-मन्त्रेण

४७. पैङ्गलच्छन्दोविवृतौ अलौलिकच्छन्दांसि कतिषु अध्यायेषु सन्ति।
(क) आद्येषु त्रिषु (ख) शेषेषु त्रिषु (ग) आद्येषु चतुर्षु (घ) शेषेषु चतुर्षु



## पाठसारः

भारतीयज्ञानसागरस्य जलदः वेदः। स च ज्ञानराशिः। तेन पुरुषार्थस्य अलौकिक उपायो बुध्यते। अन्यथा मानवः न पुरुषार्थं जानीयात् न वा तस्य अलौकिकम् उपायं जानीयात्। अत एव देवानां पितॄणां मानवानां वेदः एव दिव्यं सनातनं च चक्षुः इति कथ्यते।

धर्मार्थकाममोक्षरूपः चतुर्विधः पुरुषार्थः ज्ञातव्यश्चेद् वेदः एव परमं प्रमाणम्। तस्य च ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति वेदाः चत्वारः सन्ति। प्रतिवेदं मन्त्रः ब्राह्मणमिति विभागः भवति। कर्मणः अनुष्ठानम् , अनुष्ठानस्य द्रव्यम् , देवता इत्यादीनां प्रकाशकाः प्रतिपादकाः च मन्त्राः सन्ति। मन्त्रांशं विहाय शेषः भागः ब्राह्मणं कथ्यते। ब्राह्मणे यागादिक्रियाविधिः प्राधान्येन प्रतिपाद्यते। ब्राह्मणेषु वर्ण्यमाणाः विषयास्तावत् षट् - विधिः, अर्थवादः, निन्दा, प्रशंसा, पुराकल्पः, पराकृतिश्चेति।

ब्राह्मणस्य परिशिष्टभूतम् आरण्यकम् उपनिषद् इति एतद्द्वयम्। आरण्यं रहस्यमपि कथ्यते गोपथब्राह्मणे। आरण्यकस्य परिशिष्टभूता उपनिषत्। उपनिषद् ब्रह्मविद्या भवति। अधिकारी तां विद्यां लभते चेत् सा विद्या तस्य संसारबन्धं नाशयति, तं परं ब्रह्म गमयति, जन्मजरादिकम् सादयति।



मर्त्यः काम्यनिषिद्धकर्माणि हित्वा नित्यनैमित्तिकप्रायश्चित्तैः चित्तशुद्धिं सम्पादयति। उपासनया चित्तस्य एकाग्रताम् आसादयति। विवेकादिसाधनचतुष्टसम्पन्नः भवति। तदा संसारज्वालाम् असहमानः गुरुम् उपसर्पति। गुरुश्च अध्यारोपापवादन्यायेन तम् उपदिशति। ततश्च स श्रवणमनननिदिध्यासनसमाधिदिभिः जीवब्रह्मणोः ऐक्यम् जानाति। तदा तस्य हृदयग्रन्थिः भिद्यते, सर्वसंशयाः छिद्यन्ते, कर्मबन्धनानि क्षीयन्ते। अतः मुक्तो भवति। ब्रह्मविद् ब्रह्मैव भवति इति वेदान्तस्य सारः। प्रयोजनभेदादपि कर्मकाण्डज्ञानकाण्डे इति द्वेधा विभागः भवति वेदस्य।

वेदस्य षडङ्गानि सन्ति। शिक्षा व्याकरणं निरुक्तं छन्दः ज्योतिषम् कल्पः इतीमानि वेदस्य षडङ्गानि। स्वरवर्णोच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते सा शिक्षा। व्याकरणे प्रतिपदं प्रकृतिप्रत्ययविभागः कल्प्यते। तयोः योगेन साधुपदानि व्याक्रियन्ते। इत्थं व्याकरणं साधुपदानि कानि इति ज्ञानं कारयति। वैदिकपदानाम् अर्थज्ञानं निरुक्तेन भवति। मन्त्रेषु विद्यमानानां छन्दसां ज्ञानं छन्दःशास्त्रेण भवति। कर्मानुष्ठानस्य कालगणना ज्यौतिषेन शास्त्रेण भवति। मन्त्रप्रयोगः स्थण्डिलमण्डपादिनिर्माणम् कस्य ऋत्विजः किं कर्म इत्यादिज्ञानं कल्पशास्त्रेण भवति। इत्थं निरूपितानि वेदाङ्गानि।



## पाठान्तप्रश्नाः

१. वेदशब्दस्यार्थं प्रतिपादयत।

२. वेदस्य महिमानं लिखत।

३. वेदस्य वैलक्षण्यं किम्।

४. मन्त्रान् परिचाययत।

५. ऋङ्मन्त्रेभ्यः यजुर्मन्त्राणां को भेदः।

६. वेदभागं ब्राह्मणं परिचाययत।

७. ब्राह्मणभेदान् लिखत।

८. विधिभेदान् परिचाययत।

९. गुणकर्म विशदयत।

१०. अर्थकर्म विशदयत।

११. ब्राह्मणे को निषेधः।

१२. ब्राह्मणे को नामधेयः।

१३. अर्थवादं परिचाययत।

१४. गुणवादं परिचाययत।

१५. भूतार्थवादस्य गुणवादानुवादयोः किं वैलक्षण्यम्।



१६. आरण्यकानां परिचयः देयः।

१७. वेदान्तस्य परिचयः देयः।

१८. उपनिषदः परिचयः कार्यः।

१९. प्रयोजनभेदेन वेदभेदान् वदत।

२०. वेदपुरुषस्य अङ्गानि कानि किंस्थानीयानि च।

२१. शिक्षां समासेन शिक्षयत।

२२. व्याकरणम् ईषद् व्याकुरुत।

२३. निरुक्तं निरुच्यताम्।

२४. छन्दो गीयताम्।

२५. ज्यौतिषस्य दिग्दर्शनं कारयत।

२६. कल्पः कल्प्यताम्।



## पाठान्तप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. विद्- ज्ञाने इत्यस्मात् धातोः घञ्-प्रत्यययोगेन वेदशब्दः निष्पन्नः। अतः वेदः अलौकिकज्ञानराशिः एव भवति।

२. ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्यो ज्ञेयश्च।

३. (घ)

४. (घ)

### उत्तराणि-२

५. (क)

६. (ग)

७. (ख)

८. (ख)

९. (घ)

१०. (घ)

११. (क)

### उत्तराणि-३

१२. (घ)

१३. (ख)

१४. (ग)

१५. (घ)

१६. (घ)

१७. (क)

१८. (ख)

१९. (ग)

### उत्तराणि-४

२०. (घ)

२१. (घ)

२२. (क)

२३. (घ)

२४. (ग)

२५. (ख)

२६. (क)

२७. (ख)

२८. (ग)

२९. (क)

३०. (ख)

३१. (ग)



### उत्तराणि-५

३२. (घ)

३३. (ख)

३४. (घ)

३५. (घ)

३६. (घ)

३७. (घ)

३८. (क)

३९. (घ)

४०. (घ)

४१. (ख)

४२. (ख)

### उत्तराणि-६

४३. (घ)

४४. (घ)

४५. (ख)

४६. (क)

४७. (क)

॥ इति तृतीयः पाठः ॥






# भारतीयविद्यापरिचयः-२

## प्रस्तावना

भारतभूमौ प्रायः दश सहस्रं वर्षाणि यदाविष्कृतं यच्चिन्तितं यत् शास्त्रार्थेन निश्चितं तत्सर्वमपि प्रायः संस्कृतभाषया निबद्धमस्ति। भारते विद्यालयानां भाषा, राजव्यवहारस्य भाषा, शास्त्रलेखनस्य भाषा, काव्यनाटकादिलेखनस्य भाषा च संस्कृतमेव आसीत्। तया भाषया इहपरलोकसाधनाय अपि विद्याः सुनिबद्धाः सन्ति। तासां विद्यानां संक्षेपेण परिचयः छात्राणां भवतु इति धिया इतः पूर्वपाठेषु विद्याविभागः प्रदर्शितः। ततश्च वेदतदङ्गानां च परिचयः कारितः। तत्र भारतीयविद्यापरिचये वेदस्य उपाङ्गानि उपवेदाः इतीदम् अवशिष्टम्। तस्य परिचयः प्रस्तोष्यते।



## उद्देश्यानि

पाठस्यास्याध्ययनेन-

- वेदस्य उपाङ्गानि बुध्यात्।
- वेदस्य उपवेदान् परिचिनुयात्।
- वेदेतदङ्गोपाङ्गोपवेदानां विभागान् निश्चिनुयात्।
- विभिन्नानां प्रस्थानाम् प्रयोजनम् अवधारयेत्।
- भारतीयस्य संस्कृतवाङ्मयस्य प्रारूपं जानीयात्।

## ४.१) उपाङ्गानि

अष्टादश विद्यास्थानानि सन्ति। तत्र प्रथमं चत्वारो वेदाः, ततः षड् अङ्गानि च निरूपितानि। अधुना उपाङ्गानि निरूप्यन्ते। पुराणानि न्यायः मीमांसा धर्मशास्त्रम् इति चत्वारि उपाङ्गानि सन्ति। तानि क्रमशः निरूप्यन्ते।

## ४.२) पुराणम्

वेदमधीत्य जीवनस्य कृत्याकृत्यविवेकं प्राप्तुमसमर्थानां तद्विवेकाय तत्त्वदर्शिनो मुनयः पुराणानि विरचितवन्तः। ते च पुराणकर्तारो भगवन्तः वेदव्यासाः। पुराणेषु वेदोक्तम् तत्त्वं दृष्टान्तरूपैः पुरातनैः देव-मुनि-राजप्रभृतीनां वृत्तान्तैः बोध्यते। अतः "**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्**" इति साम्प्रदायिका वदन्ति। इतिहासेन पुराणेन च वेदतात्पर्यस्य विस्तरेण निरूपणम् उपबृंहणं भवति। अर्थात् विस्तरेण



दृष्टान्तादिभिः अर्थं विवृत्य विवृत्य प्रकाशनम्। पुराणेषु वर्णिताः विषयाः वेदोक्तस्य निगूढस्यापि तत्त्वस्य सरलतया निरूपणाय अत्यन्तम् उपकुर्वन्ति। पुरातनाः वृत्तान्ताः धर्मादितत्त्वनिरूपणाय निदर्शनरूपेण यदा वर्ण्यन्ते तदा तत्त्वाभिव्यञ्जकाः ते सर्वदा नवा इव भवन्ति। अतः पुरा अपि नवं पुराणम् इति वदन्ति। पुरा नाम प्राचीनम् इत्यर्थः। पुराणग्रन्थानां सामान्यं स्वरूपम् भवति यथा

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।**

**वंशानुचरितं चैव पुराणं पञ्चलक्षणम्॥**

सर्गः, प्रतिसर्गः, वंशः, मन्वन्तराणि, वंशानुचरितम् इति पञ्चभिः अंशैः युक्तं पुराणं भवति। सर्गः सृष्टिः। प्रतिसर्गः हि सृष्टिः लयः पुनः सृष्टिश्च इति। वंशः हि सृष्ट्यादौ कदा कदा कः कः वंशः आसीत् इत्येवं वर्णनम्। वंशानुचरितं हि सूर्यचन्द्रवंशीयानां राजादीनां वर्णनम्। एते पञ्च अंशाः पुराणे अन्तर्भवन्ति। एतान् अतिरिच्यापि अनेके विषयाः पुराणेषु भवन्ति।

भक्तिमार्गस्य प्रतिपादनं, तस्य प्रसारः चेति पुराणांनां प्रधानं प्रयोजनम्। दुष्कृतां विनाशं कृत्वा भगवान् कथं भक्तान् रक्षति इति विषयस्य ललिततया प्रतिपादनेन एतानि पुराणानि मानवान् भक्तिमार्गे प्रेरयन्ति। भक्त्या दुःखक्षयः भवति, पुरुषार्थचतुष्टयं च सिध्यति इति भक्तेषु भावना जायते। बाहुल्येन पुराणानि शिवभक्तिपराणि। कानिचन विष्णुभक्तिपराणि। एकं च देवीपरम्।

पुरा पुराणश्लोकसंख्या एककोटिः आसीद्। भगवान् बादरायणः व्यासदेवः संक्षिप्य ताम् लक्षचतुष्टयं चकार। अष्टादश महापुराणानि सन्ति। उपपुराणानि अवान्तरपुराणानि अपि बहूनि सन्ति।

अत्र अधः तालिकायां पुराणनाम तस्य श्लोकसंख्या च प्रदत्तास्ति।

| अनुक्रमः | पुराणनाम | श्लोकसंख्या |
|---|---|---|
| १ | ब्राह्मम् | ३०००० |
| २ | पाद्मम् | ५५००० |
| ३ | वैष्णवम् | २३००० |
| ४ | शैवम् | २४००० |
| ५ | भागवतम्(देवी) | १८००० |
| ६ | नारदीयम् | २५००० |
| ७ | मार्कण्डेयम् | ९००० |
| ८ | आग्नेयम् | १६००० |
| ९ | भविष्यम् | १४५०० |
| १० | ब्रह्मवैवर्तम् | १८००० |
| ११ | लैङ्गम् | ११००० |
| १२ | वाराहम् | २४००० |



| | | |
|---|---|---|
| १३ | स्कान्दम् | ८११०० |
| १४ | वामनम् | १०००० |
| १५ | कौर्मम् | १८००० |
| १६ | मात्स्यम् | १४००० |
| १७ | गारुडम् | १९००० |
| १८ | ब्रह्माण्डम् | १२००० |

### पुराणानां कर्तृ-संख्या-नामानि

पुराणानां रचयिता भगवान् वेदव्यासः। तस्य पुराणमुनिः इति नाम प्रसिद्धमेव भवति। पुराणानां संख्या भवति अष्टादश। तेषां नामानि ग्रहीतुं कश्चन प्राचीनश्लोकः सर्वत्र उद्घ्रियते। स च यथा -

**मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्।**

**अनापलिङ्गकूस्कानि पुराणानि प्रचक्षते॥**

अत्र पुराणानाम् प्रथमाक्षराणि गृहीत्वा तेषां नामानि स्मार्यन्ते।

**म**द्वयम् - मकारप्रथमाक्षरयुक्तं पुराणद्वयं भवति। तच्च **म**त्स्यपुराणं **मा**र्कण्डेयपुराणम् इति।

**भ**द्वयम् - भकारप्रथमाक्षरयुक्तं पुराणद्वयं नाम **भ**विष्यपुराणं **भा**गवतपुराणम् चेति।

**ब्र**त्रयम् - ब्रकारप्रथमाक्षरयुक्तं पुराणत्रयं नाम **ब्र**ह्माण्डपुराणं, **ब्र**ह्मपुराणं, **ब्र**ह्मवैवर्तपुराणम् चेति।

**व**चतुष्टयम् - वकारप्रथमाक्षरयुक्तं पुराणचतुष्टयं नाम **व**राहपुराणं, **वा**मनपुराणं, **वायु**पुराणं, **वि**ष्णुपुराणम्।

**अ** – अग्निपुराणम्

**ना** - नारदपुराणम्

**प** – पद्मपुराणम्

**लि** - लिङ्गपुराणम्

**ग** – गरुडपुराणम्

**कू** - कूर्मपुराणम्

**स्क** – स्कन्दपुराणम्

### पुराणप्रवचनकर्तारः

केन किं पुराणं प्रोक्तमिति अधो दीयते।

आद्यं सनत्कुमारेण प्रोक्तं वेदविदां वराः।



द्वितीयं नारसिंहाख्यं तृतीयं नान्दमेव च ॥
चतुर्थं शिवधर्माख्यं दौर्वासं पञ्चमं विदुः।
षष्ठं तु नारदीयाख्यं कापिलं सप्तमं विदुः ॥
अष्टमं मानवं प्रोक्तं ततश्चोशनसेरितम्।
ततो ब्रह्माण्डसंज्ञं तु वारुणाख्यं ततः परम् ॥
ततः कालीपुराणाख्यं वाशिष्ठं मुनिपुङ्गवाः।
ततो वाशिष्ठं लैङ्गाख्यं प्रोक्तं माहेश्वरं परम् ॥
ततः साम्बपुराणाख्यं ततः सौरं महाद्भुतम्।
पाराशरं ततः प्रोक्तं मारीचाख्यं ततः परम् ॥
भार्गवाख्यं ततः प्रोक्तं सर्वधर्मार्थसाधकम्।

एवमुपपुराणानि अनेकप्रकाराणि द्रष्टव्यानि।

एवम् अष्टादश पुराणनि प्रसिद्धानि सन्ति। एतानि अतिरिच्य गणेश-नारसिंह-सौरादीनि अष्टादश उपपुराणानि सन्ति। सर्वेषां पुराणानां विस्तरः अनन्ताकाश इव गोचरीभवति। पुराणानि वेदोक्तमेव जीवनविवेकं बोधयन्ति। परन्तु वेदे सूक्ष्मतया उक्ताः सृष्टिप्रलयविचाराः युग-मन्वन्तरादिकालपरिमाणानि भगवतः अवताराः इत्येवं विलक्षणाः विषयाः पुराणेषु सुष्ठु निरूपिताः सन्ति। धर्माधर्मनिर्णयप्रसङ्गे पुराणानां श्लोकाः प्रमाणरूपेण स्वीक्रियन्ते।

पुराणेषु प्रतिपादनशैली वेदशैलीतः भिन्ना दृश्यते। मन्दमतीनामपि गभीरतत्त्वग्रहणं यथा शक्यं तथा अत्र भवति विषयनिरूपणम्। प्राचीनवृत्तान्तनिरूपणपुरःसरमेव प्रायः सर्वं प्रकाशितं भवति। परन्तु वैदिकपरिभाषा अत्र न भवति। लोकजीवननिदर्शनेन कृतं निरूपणं जनानां सरलतया हृदयग्राह्यं भवति। पुराणेषु वेदकाव्यशैलीमध्यस्था काचित् शैली भवति। तेषु कृत्याकृत्योपदेशः मित्रोपदेश इव नाति कठिनः नापि सहसा परिहार्यः भवति। तस्मात् पुराणं मित्रसम्मितमिति आलङ्कारिका वदन्ति।



## पाठगतप्रश्नाः

१. पुराणे यो विषयः प्रधानं तस्य प्रतिपादकं श्लोकं लिखत।

२. महापुराणानि कति।

(क) १२ (ख) १४ (ग) १६ (घ) १८

३. पुराणानां रचयिता कः।

(क) वेदव्यासः (ख) शुकः (ग) सनत्कुमारः (घ) नारदः

४. पुराणं कीदृशं भवति।

(क) प्रभुसम्मितम् (ख) कान्तासम्मितम् (ग) मित्रसम्मितम् (घ) मातृसम्मितम्

५. सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च कस्मिन् शास्त्रे प्रतिपाद्यन्ते।



(क) पुराणम्  (ख) महाभारतम्  (ग) रामायणम्  (घ) धर्मशास्त्रम्

## ४.३) न्यायः

भारतीयशास्त्राणां समेषामपि उपकारकः न्यायः। न्यायः आन्वीक्षिकी इत्यपि कथ्यते। चाणक्यमते सांख्यं योगः लोकायतं चेति एतत्त्रयम् आन्वीक्षिकी भवति। लोकायतं न्यायशास्त्रं ब्रह्मगार्ग्योक्तं शास्त्रम्। तर्कविद्या आन्वीक्षिक्याम् कथमन्तर्भवति। तर्कविद्या इति पदे तर्कः अनुमानम्। अतः यया विद्यया अनुमानं सुष्ठु प्रतिपाद्यते सा तर्कविद्या। अनुमानं सांख्ये मीमांसायां गौतमीयन्याये काणादवैशेषिके च सुष्ठु प्रतिपाद्यते। अतः तर्कविद्या कणादस्य गौतमस्य चापि। अतः तदुभयं न्यायः इति कथ्यते नैयायिकैः। ब्रह्मसूत्रादिषु यदा तार्किकः इति उल्लेखः क्रियते तदा तर्किकपदेन सांख्या एव बोध्यन्ते, न तु नैयायिकाः। चाणक्यमते या आन्वीक्षिकी तस्या आन्वीक्षिक्याः महिमानम् आह चाणक्यः-

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता॥

**सरलार्थः** - सकलविद्यानाम् प्रदीपः आन्वीक्षिकी विद्या। अर्थात् तासु विद्यासु निहितानाम् निगूढानां तत्त्वानां ज्ञानम् आन्वीक्षिक्या विद्यया भवति। यथा अन्धकारे स्थितानि द्रव्याणि प्रदीपप्रकाशेन दृश्यन्ते तथा प्रत्यक्षेण शब्देन वा प्रमाणेन यद् ज्ञायते तस्य गृढार्थज्ञानं प्रामाण्यज्ञानं च आन्वीक्षिक्या विद्यया भवति। सर्वाणि कर्माणि अन्वीक्षापुरःसरं क्रियन्ते। अर्थात् कर्मस्वरूपादिकं वेदादिभ्यः ज्ञात्वा आन्वीक्षिक्या सम्परीक्ष्यते। सर्वधर्माणाम् वैदिककर्मणाम् आश्रयः प्रवर्तिका- देहान्तरलभ्यस्वर्गादिसाधनीभूतेषु कर्मसु तर्केण शरीरातिरिक्तनित्यात्मनिश्चयादेव प्रवृत्तिसम्भवाद् उक्तं - यस्तर्केण अनुसन्धत्ते स धर्मं वेद नेतरः। कर्मणः सम्यक् ज्ञानवशात् कर्मणि प्रवर्तते। अतः इयं विद्या उपायः अर्थात् साधनभूता अस्ति। समेषां धर्माणाम् आश्रयभूता इयम् आन्वीक्षिकी विद्या।

आन्वीक्षिक्याः उपकारिता भारतीयैः सुज्ञाता। अत एव सर्वत्र युक्तियुक्तं प्रतिपादनं शास्त्रेषु समुलभ्यते। तर्कस्य उपकारिता निम्नश्लोके सनिबद्धा।

मोहं रुणद्धि विमलीकुरुते च बुद्धिं
सूते च संस्कृतपदव्यवहारशक्तिम्।
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति
तर्कश्रमो न कुरुते कमिहोपकारम्॥ इति

कणादगौतमयोः सम्प्रदायेऽपि आन्वीक्षिकी न्यायः इति कथ्यते। न्यायभाष्यकार आह- 'कः पुनरयं न्यायः। प्रमाणैरर्थपरीक्षणं न्यायः। प्रत्यक्षागमाश्रितम् अनुमानं सा आन्वीक्षिकी। प्रत्यक्षागमाभ्यामीक्षितस्य अन्वीक्षणम् अन्वीक्षा, तया प्रवर्तते इति आन्वीक्षिकी' इति। किं करोति न्यायः। नीयते प्राप्यते विवक्षितार्थसिद्धिरनेन स न्यायः। न्यायपदस्य अन्योऽपि अर्थः प्रसिद्धः, यथा- प्रतिज्ञाद्यवयवसमूहो न्यायः। स्यादेतत्।



पाणिनीयपदशास्त्रस्य कणादप्रणीतस्य पदार्थशास्त्रस्य सर्वशास्त्रोपकारिता अत्रापि इत्थं बहुविश्रुता प्रतिपाद्यते -

काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्।ऽ॥

अशरीरं वाव सन्तं न प्रियाऽप्रिये स्पृशत इत्यादिवेदवाक्यैः आत्मा शरीरादितः अतिरिक्तः इति ज्ञायते। अर्थात् जडाद् भिन्नः आत्मा। तथापि मिथ्याज्ञानवशाद् शरीरादिकमेव आत्मा इति भ्रान्तः जीवः दुःखम् उपलभते निरन्तरम्। श्रवणमनननिदिध्यासनसमाधयः मोक्षसाधनानि भवन्ति। तत्र आत्मा तदिरदेहादिजडभिन्नः श्रुत्या तथा प्रतिपादितत्वात् इति अनुमानं क्रियते। ततश्च योगसमाधिना आत्मसाक्षात्कारः भवति। तत्र आत्मस्वरूपं यथायथं प्रकटीभवति। तदा वासनासहितमिथ्याज्ञानस्य नाशः भवति। देहः अहम् इत्यादिज्ञानस्य नाशः भवति। तदा देहादिसम्बन्धवशाद् रागादिदोषाणां नाशः भवति। रागद्वेषवशादेव विहिते निषेद्धे वा कर्मणि प्रवर्तते। दोषाभावे न प्रवर्तते। विहितकर्मणा पुण्याखः धर्मः जायते। निषिद्धकर्माचरणेन पापख्यः अधर्मः जायते। कर्मणि अकृते धर्माऽधर्मौ अपि न उत्पद्येते। पूर्वजन्मकृतेन कर्मणा उत्पन्नौ धर्माधर्मौ संचितं कथ्यते। आत्मसाक्षात्कारेण धर्माऽधर्मात्मकस्य संचितस्य नाशः भवति। प्रारब्धस्य तु अनुभवेन नाशः भवति। अतः धर्माधर्मयोः पूर्णतः विलये जाते दुःखजनकं किमपि नावशिष्यते। तदा चरमदुःखस्यापि ध्वंसः भवति। अयमेव गौतमीयन्यायमते मोक्षः। तथाहि सूत्रम्-

दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानाम् उत्तरोत्तरापाये तदनन्तरापायादपवर्गः।।

**सरलार्थः -** दुःखस्य कारणं जन्म। जन्मनः कारणं प्रवृत्तिः। प्रवृत्तेः कारणं दोषः। दोषस्य कारणं मिथ्याज्ञानम्। अतः देहादिः आत्मा इति मिथ्याज्ञाननाशे रागद्वेषादिदोषः नश्यति। ततः कर्मणि प्रवृत्तिः न भवति। कर्माभावे धर्माधर्मयोः अभावः भवति। तेन पुनर्जन्म न भवति। जन्माभावे दुःखं न भवति।

अत्र हि पदार्थानां यथार्थज्ञानं विना तेषां साधर्म्यवैधर्म्यज्ञानं न सम्भवति। यथार्थज्ञाने सति सम्भवति। तदैव आत्मा देहादिजडभिन्नः इति अनुमानं कर्तुं शक्यते। इदम् युक्त्यनुसन्धारूपम् अनुमानं मनने उपयोगि भवति। इत्थं मननोपयोगि न्यायशास्त्रम्। अतः मोक्षोपयोगि अपि। इत्थं मोक्षः पदार्थज्ञानस्य परमप्रयोजनम्। तदेव पदार्थज्ञानं न्यायशास्त्रे सुष्ठु भवति।

### गौतमीयो न्यायः

तत्र महर्षिः गौतमः सूत्ररूपेण ग्रन्थं प्रणीतवान्। (गौतमस्य अपरं नाम अक्षपादः इति) तस्मिन् पञ्च अध्यायाः सन्ति। प्रत्यध्यायम् आह्निकद्वयम् अस्ति। मधुसूदनसरस्वतीमते गौतमप्रणीतं शास्त्रम् आन्वीक्षिकी। तदेव सम्प्रति न्यायशास्त्रमिति प्रचारः। तस्मिन् षोडश पदार्थाः सन्ति। ते हि - प्रमाणम् प्रमेयम् संशयः प्रयोजनम् दृष्टान्तः सिद्धान्तः अवयवः तर्कः निर्णयः वादः जल्पः वितण्डा हेत्वाभासः छलम् जातिः निग्रहस्थानानि इति। एतेषां पदार्थानाम् उद्देशः लक्षणम् परीक्षा च इति एतत् कर्तव्यम्। तेन तत्त्वज्ञानं भवति। तथा तत्त्वज्ञाने सति एव मिथ्याज्ञाननाशः भवति। एवं क्रमशः मोक्षः सिद्ध्यति।

**न्यायमते मोक्षलाभप्रक्रिया किञ्चिदुपन्यस्यते**



शरीरं षडिन्द्रियाणि षड् विषयाः षड् बुद्धयः सुखं दुःखं चेत्येकविंशतिः गौणमुख्यभेदभिन्नानि दुःखानि तेषाम् आत्यन्तिकी दुःखनिवृत्तिः अपवर्गः। 'तदत्यन्तविमोक्षोऽपवर्गः' इति न्यायसूत्रम्। आत्यन्तिकी दुःखनिवृत्तिश्च बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्म-संस्काराणां नवानाम् आत्मविशेषगुणानाम् उच्छेदाद् एव।

यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः।
तावदात्यन्तिकी दुःखनिवृत्तिर्नावकल्प्यते।।
धर्माधर्मनिमित्तो हि सम्भवः सुखदुःखयोः।
मूलभूतौ च तावेव स्तम्भौ संसारसद्मनः।।
तदुच्छेदे तु तत्कार्यशरीरानुपलम्भनात्।
नात्मनः सुखदुःखे स्त इत्यासौ मुक्त उच्यते।। (इति न्यायमञ्जरी)

तदुपायश्च दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानाम् उत्तरोत्तरापाये तदनन्तरापायदपवर्गः इति सूत्रात् मिथ्याज्ञाननिवृत्तिः, मिथ्याज्ञानं च अस्तित्वेन अधिगते आत्मनि नास्तीति अनात्मनि शरीरे आत्मा इत्यादिरूपम्। एतन्निवृत्त्यर्थम् एव आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इति श्रुत्या स्वात्मसाक्षात्कारो विधीयते। एतदेव न ततोऽन्यः प्रतियोग्यनुयोगितया चात्मैव तत्त्वतो ज्ञेयः इत्यनेन आत्मतत्त्वविवेके उक्तम्। एवञ्च शरीरभिन्नत्वेन आत्मज्ञानस्य इव आत्मभिन्नत्वेन शरीरज्ञानस्यापि मोक्षहेतुत्वं सिद्धम्।

## काणादं वैशेषिकम्

महर्षिः कणादः वैशेषिकसूत्राणि प्रणीतवान्। (अस्य दर्शनस्य औलुक्यदर्शनमिति अपरम् अभिधानमस्ति।) तस्य ग्रन्थे दश अध्यायाः सन्ति। प्रत्यध्यायम् आह्निकद्वयम् अस्ति। तत्र द्रव्यं गुणः कर्म सामान्यं विशेषः समवायः इति षड् भावपदार्थाः, अभावः इति सप्तमः पदार्थः अस्ति। एवं संकलनया वैशेषिकदर्शने सप्त पदार्थाः प्रतिपादिताः। एतेषां पदार्थानां साधर्म्यवैधर्मज्ञानं भवति चेत् तत्त्वज्ञानं भवति इति कणादाभिप्रायः। एतस्मिन् दर्शने विशेषः नाम कश्चित् पदार्थः अभ्युपगतः। अत एव अस्य दर्शनस्य नाम वैशेषिकदर्शनम् इति।

वैशेषिकमते सप्त एव ये पदार्थाः सन्ति। ते च द्रव्यं गुणः कर्म सामान्यं विशेषः समवायः अभावः चेति। तत्र द्रव्याणि नव एव। तानि च पृथिवी आपः तेजः वायुः आकाशं कालः दिग् आत्मा मनः चेति। गुणाः चतुर्विंशतिः सन्ति। ते च रूपम् रसः गन्धः स्पर्शः संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् गुरुत्वम् द्रवत्वम् स्नेहः शब्दः बुद्धिः सुखम् दुःखम् इच्छा द्वेषः प्रयत्नः धर्मः अधर्मः संस्कारः इति। कर्माणि पञ्च भवन्ति। तानि च उत्क्षेपणम् अपक्षेपणम् आकुञ्चनम् प्रसारणम् गमनम् इति। सामान्यं द्विविधं भवति। तच्च परम् अपरमिति। विशेषाः अनन्ताः सन्ति। समवायः एकः एव वर्तते। अभावस्य चत्वारो भेदाः सन्ति। ते च प्रागभावः प्रध्वंसाभावः अत्यन्ताभावः अन्योन्याभावः चेति।





## पाठगतप्रश्नाः

६. सर्वशास्त्रोपकारकं किम्।

(क) व्याकरणम् (ख) मीमांसा (ग) योगः (घ) सांख्यम्

७. अक्षपादः कः।

(क) जैमिनिः (ख) कणादः (ग) गौतमः (घ) व्यासः

८. न्यायमते कति पदार्थाः।

(क) १२ (ख) १४ (ग) १६ (घ) १८

९. कणादस्य कति पदार्थाः।

क) ५ (ख) ६ (ग) ७ (घ) ८

१०. कणादमते भावपदार्थाः कति।

क) ५ (ख) ६ (ग) ७ (घ) ८

११. विशेषः नाम कश्चित् पदार्थः इति कः अभ्युपगच्छति।

(क) जैमिनिः (ख) कणादः (ग) गौतमः (घ) व्यासः

## ४.४) मीमांसा

"वेदोऽखिलो धर्ममूलम्"इति। समग्रोऽपि वेदः धर्मस्य मूलम् अस्ति। ते च वेदाः शब्दस्वरूपा एव सन्ति। तेषां वेदानां वाक्यानां तात्पर्यबोधनाय मीमांसदर्शनस्य प्रादुर्भावः सञ्जातः। मीमांसादर्शनं हि वेदवाक्यानां तात्पर्यं कुत्र कस्मिंश्चार्थे वर्तते, इति प्रतिपादयति। अत एव मीमांसादर्शने अपि वाक्यार्थविचारप्रक्रिया वर्णिता। व्याकरणदर्शनस्यापि प्रादुर्भावोऽपि वेदानां रक्षणाय एवाभवत्। अत एव प्रोक्तमपि व्याकरणशास्त्रस्य प्रयोजनवर्णनप्रसङ्गे रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति। तेषां वेदानां तात्पर्यभूतार्थं सप्रमाणं युक्तिपूर्वकं च प्रतिपादयितुं न्यायदर्शनस्य प्रादुर्भावः सञ्जातः।

षट्सु भारतीयदर्शनेषु साक्षात् वेदम् आश्रित्य दर्शनद्वयं प्रवृत्तम्। तद्धि पूर्वमीमांसादर्शनम् उत्तरमीमांसादर्शनं च। मीमांसाशब्दस्य अर्थः पूजितविचारः, विचारपूर्वक-तत्त्वनिर्णयः। उत्तरमीमांसादर्शनं वेदान्तदर्शननाम्ना, पूर्वमीमांसादर्शनं च मीमांसादर्शनम् इति नाम्ना प्रथितम्। एतयोः मध्ये मीमांसादर्शनं कर्मकाण्डात्मकस्य वेदभागस्य विचाराय प्रवृत्तम्। अर्थात् वेदस्य कर्मकाण्डे विहितानां विषयाणां यत्र युक्त्या निर्णयः भवति, यत्र च वेदविहितेषु विषयेषु संशये सति समाधानं लभ्यते तदेव पूर्वमीमांसादर्शनम्। धर्मजिज्ञासा एव तत्र मुख्यः विषयः। उत्तरमीमांसादर्शनं हि वेदान्तदर्शनत्वेन प्रसिद्धम्। तत्र ज्ञानकाण्डीयविषयाणाम् अर्थात् उपनिषत्प्रतिपादितविषयाणां विस्तरेण विचारो लभ्यते। ब्रह्मजिज्ञासा एव तत्र मुख्यः विषयः।



## ४.४.१) कर्ममीमांसा

मीमांसापदेन कर्ममीमांसा शारीरकमीमांसा इति मीमांसाद्वयं बोध्यते। कर्ममीमांसा एव धर्ममीमांसा अपि कथ्यते। कर्ममीमांसां महर्षिः जैमिनिः प्रणीतवान्। तस्य प्रथमं सूत्रम् - अथातो धर्मजिज्ञासा। व्यासप्रणीतायां शारीरकमीमांसायां प्रथमं सूत्रम् - अथातो ब्रह्मजिज्ञासा इति। इत्थं धर्ममीमांसा ब्रह्ममीमांसा इत्यपि व्यवहारः द्वयोः मीमांसयोः अस्ति। कालक्रमेण साम्प्रतिकाः मीमांसा इत्युक्ते कर्ममीमांसा पूर्वमीमांसा इति एव गृह्णन्ति। ब्रह्ममीमांसा तु वेदान्तः, ब्रह्मसूत्रम् इत्यादि कथयन्ति।

जैमिनिमुनिप्रणीताः षोडश अध्यायाः सन्ति। तेषु आद्याः द्वादश अध्यायाः कर्म प्रतिपादयन्ति। कर्मणः एव कर्ममीमांसायां प्राधान्यम्। अतः द्वादशाध्यायी इति एव नाम प्रसिद्धिं गतम्। अवशिष्टेषु चतुर्षु अध्यायेषु उपासना प्रतिपादिता। तद् उपासनाकाण्डं कथ्यते। तत् संकर्षणकाण्डम् देवताकाण्डम् इत्यपि आख्यायते। उपासना अपि कर्म एव। अतः कर्ममीमांसायाम् एव देवताकाण्डस्यापि अन्तर्भावः क्रियते।

यज्ञादिभिः स्वर्गलाभः एव परमपुरुषार्थः जैमिनिमते। स्वर्गः कर्मसाध्यः। अतः कर्म प्रतिपाद्यते।

## ४.४.२) शारीरकमीमांसा

इयं शारीरकमीमांसा ब्रह्ममीमांसा, ब्रह्मसूत्रम् , उत्तरमीमांसा इत्याद्यपि कथ्यते। इयं चतुरध्यायी शारीरकमीमांसा 'अथातो ब्रह्मजिज्ञासा' इत्यादिः 'अनावृत्तिः शब्दाद्' इत्यन्ता जीवब्रह्मैकत्वसाक्षात्कारहेतुः श्रवणाख्यविचारप्रतिपादकान् न्यायान् उपदर्शयन्ती भगवता बादरायणेन कृता। इदमत्र अवधेयं यत् वेदान्तस्य प्रस्थानत्रयमस्ति। तेषु त्रिषु प्रस्थानेषु शारीकमीमांसा इति अन्यतमम्। इदं च न्यायप्रस्थानं युक्तिप्रस्थानं वा कथ्यते। श्रुतिप्रस्थानम् स्मृतिप्रस्थानमति प्रस्थानद्वयम् इतो भिन्नमेव।

जीवब्रह्मणोः ऐक्यज्ञानेन मर्त्यस्य परमपुरुषार्थः मोक्षः सिद्ध्यति इति अस्याः मीमांसायाः प्रतिपाद्यो विषयः। अत एव ब्रह्म तल्लाभः जीवः सृष्टिः ईश्वरः माया बन्धः मोक्षः तत्साधनम् समाधिः इत्यादिविषया अत्र अन्तर्भवन्ति। शारीरकमीमांसायां ५५५ सूत्राणि सन्ति। अद्वैतमते १९१ अधिकरणानि सन्ति। अध्यायानां नामानि सन्ति। तथाहि कारिका-

शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः।

समन्वयाविरोधौ द्वौ साधनं फलं तथा॥ इति।

| अध्यायः | सूत्रसंख्या | अधिकरणसंख्या | अध्यायनाम |
|---|---|---|---|
| प्रथमः | १३४ | ३९ | समन्वयः |
| द्वितीयः | १५७ | ४७ | अविरोधः |
| तृतीयः | १८६ | ६७ | साधनम् |
| चतुर्थः | ७७ | ३८ | फलम् |



अस्याः मीमांसायाः कस्मिन् अध्याये कस्मिन् पादे कः विषयः आलोचितः इति अत्र समासेन प्रस्तूयते।

**प्रथमाध्यायः- समन्वयः**

उत्तरमीमांसायां सर्वेषामपि वेदान्तवाक्यानां साक्षात् परम्परया वा प्रत्यगभिन्नाऽद्वितीये ब्रह्मणि तात्पर्यमिति समन्वयः प्रथमाध्यायेन प्रदर्शितः। तत्र च प्रथमे पादे स्पष्टब्रह्मलिङ्गयुक्तानि वाक्यानि विचारितानि। द्वितीये तु अस्पष्टलिङ्गानि उपास्यब्रह्मविषयाणि। तृतीये पादे अस्पष्टब्रह्मलिङ्गानि प्रायशो ज्ञेयब्रह्मविषयाणि। एवं पादत्रयेणं वाक्यविचारः समापितः। चतुर्थपादे तु प्रधानविषयत्वेन संदिह्यमानानि अव्यक्ताजादिपदानि चिन्तितानि।

**द्वितीयाध्यायः- अविरोधः**

एवं वेदान्तानाम् अद्वये ब्रह्मणि सिद्धे समन्वये तत्र संभावितस्मृतितर्कादिप्रयुक्तैः तर्कैः विरोधम् आशङ्क्य तत्परिहारः क्रियत इति अविरोधो द्वितीयाध्यायेन दर्शितः। तत्राऽऽद्यपादे साङ्ख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्तैः तर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः। द्वितीये पादे सांख्यादिमतानां दुष्टत्वं प्रतिपादितम्। स्वपक्ष-स्थापन-परपक्ष-निवारण-रूप-पर्वद्वयात्मकत्वाद् विचारस्य। तृतीये पादे महाभूतसृष्ट्यादिश्रुतीनां परस्परविरोधः पूर्वभागेण परिहृतः। उत्तरभागेण तु जीवविषयाणाम्। चतुर्थपादे इन्द्रियविषयश्रुतीनां विरोधः परिहृतः।

**तृतीयाध्यायः- साधनम्**

तृतीयेऽध्याये साधननिरूपणम्। तत्र प्रथमे पादे जीवस्य परलोकगमनागमननिरूपणेन वैराग्यं निरूपितम्। द्वितीये पादे पूर्वभागेण त्वंपदार्थः शोधितः। उत्तरभागेण तत्पदार्थः। तृतीये पादे निर्गुणे ब्रह्मणि नानाशाखापठितपुनरुक्तपदोपसंहारः कृतः। प्रसङ्गाच्च सगुणनिर्गुणविद्यासु शाखान्तरीयगुणोपसंहारानुपसंहारौ निरूपितौ। चतुर्थे पादे निर्गुणब्रह्मविद्याया बहिरङ्गसाधनानि आश्रमयज्ञादीनि अन्तरङ्गसाधनानि शमदमनिदिध्यासनादीनि च निरूपितानि।

**चतुर्थाध्यायः- फलम्**

चतुर्थेऽध्याये सगुणनिर्गुणविद्ययोः फलविशेषनिर्णयः कृतः। तत्र प्रथमे पादे श्रवणाद्यावृत्त्या निर्गुणं ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यालेपलक्षणा जीवन्मुक्तिः अभिहिता। द्वितीये पादे म्रियमाणस्य उत्क्रान्तिप्रकारः चिन्तितः। तृतीये पादे सगुणब्रह्मविदो मृतस्य उत्तरमार्गोऽभिहितः। चतुर्थे पादे पूर्वभागेण निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरुक्ता। उत्तरभागेण सगुणब्रह्मविदो ब्रह्मलोकस्थितिरुक्तेति। इदमेव सर्वशास्त्राणां मूर्धन्यम्। शास्त्रान्तरं सर्वमस्यैव शेषभूतमितीदमेव मुमुक्षुभिः चरमत्वेन आदरणीयं श्रीशंकरभगवत्पादोदितप्रकारेणेति रहस्यम्।



### वेदान्तदर्शनम्

वेदान्तदर्शनम् इति यदा उच्यते तदा ब्रह्मसूत्राणि, ब्रह्ममीमांसा, शारीरकमीमांसा इत्यादिकमेव प्रतिपाद्यते। तथापि वेदान्तदर्शनपदेन अद्यत्वे तावान् एव सीमितः अर्थः नास्ति। वेदान्ते द्वैतम् विशिष्टाद्वैतम् अद्वेतम् इत्यादीनि विविधानि दर्शनानि, एते सम्प्रदायाः अन्तर्भवन्ति। उपनिषद् ब्रह्मसूत्राणि भगवद्गीता चेति ग्रन्थसामग्री अपि वेदान्तः कथ्यते। तदेव प्रस्थानत्रयम् इति कथ्यते। उपनिषत् श्रुतिप्रस्थानम्। ब्रह्मसूत्रम् न्यायप्रस्थानम् (युक्तिप्रस्थानम्)। गीता च स्मृतिप्रस्थानम् इति। एतेषां समेषाम् ग्रन्थानां विपुलानि भाष्याणि तद्व्याख्यानानि टीकाः इति नैके नैकासु भाषासु ग्रन्थाः जाताः। प्रकरणग्रन्थाः अपि विविधाः सन्ति। एवमयम् समग्रः विस्तरः एव वेदान्तपदव्यवदेश्यः इति अवधेयम्। एतेषां परिचयः यथास्थानं भविष्यति। अतोऽत्र विरम्यते विस्तरादधिकाद्।

## ४.५) धर्मशास्त्रम्

धर्मशास्त्रम् चतुर्दशम् उपाङ्गम्। स्मृतिशास्त्राणि इतिहासः सांख्यं योगः इत्येषां धर्मशास्त्रे अन्तर्भावः। वाल्मीकिना मुनिना प्रणीतं रामायणम्, भगवता व्यासेन प्रणीतं महाभारतं च इतिहासे अन्तर्भवति। स्मृतिकाराः नैके बभूवुः। तेषु मनुः याज्ञवल्क्यः विष्णुः यमः अङ्गिराः वसिष्ठः दक्षः सवर्तः शातातपः पराशरः गौतमः शङ्खः लिखितः हारीतः आपस्तम्बः उशनाः व्यासः कात्यायनः बृहस्पतिः देवलः नारदः पैठिनसिः इति २२ मुनयः सन्ति येषां स्मृतिशास्त्राणि प्रसिद्धानि।

ब्राह्मणः क्षत्रियः वैश्यः शूद्रः इति वर्णचतुष्टम्। वर्णसृष्टिं स्वयं भवगान् करोति। तथाहि गीतोक्तिः - चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः इति। ब्रह्मचर्याश्रमः गृहस्थाश्रमः वानप्रस्थाश्रमः सन्न्यासः इति चत्वारः आश्रमाः वयोविभागेन भवन्ति। वर्णानाम् आश्रमाणां च आचारस्य नियमाः सन्ति। तन्नियमान् अनुसृत्य वैदिकसंस्कृतिः प्रवर्तते। कानिचन तत्त्वानि कालेन परिवर्तन्ते। अतः तेषु तेषु कालेषु क आचारः साधीयान् इति बोधयितुं तदा तदा स्मृतिकाराः स्मृतीः लिलिखुः। कानिचन तत्त्वानि कालेन न परिवर्तन्ते। तद्विषये मतभेदस्य परिवर्तनस्य वा प्रयोजनमेव नास्ति।



## पाठगतप्रश्नाः

१२. किम् धर्ममूलम् मनुराह।

(क)वेदः (ख)न्यायः (ग)काव्यम् (घ)युक्तिः

१३. साक्षाद् वेदमाश्रित्य किं दर्शनं प्रवृत्तम्।

(क)मीमांसा (ख)न्यायः (ग)सांख्यम् (घ)योगः

१४. साक्षाद् वेदमाश्रित्य किं दर्शनं प्रवृत्तम्।

(क)पूर्वमीमांसा (ख)न्यायः (ग)सांख्यम् (घ)योगः

१५. साक्षाद् वेदमाश्रित्य किं दर्शनं प्रवृत्तम्।



(क)उत्तरमीमांसा (ख)न्यायः (ग)सांख्यम् (घ)योगः

१६. जैमिनिना आहत्य कति अध्यायाः प्रणीताः।

(क)१२ (ख)१४ (ग)१६ (घ)१८

१७. कर्ममीमांसायां कति अध्यायाः।

(क)१२ (ख)१४ (ग)१६ (घ)१८

१८. जैमिनिप्रणीतस्य द्वितीयकाण्डस्य नाम किम्।

(क) कर्मकाण्डम् (ख) ज्ञानकाण्डम् (ग) देवताकाण्डम् (घ)न्यायकाण्डम्

१९. जैमिनिप्रणीतस्य द्वितीयकाण्डस्य इदं नाम नास्ति।

(क) कर्मकाण्डम् (ख) उपासनाकाण्डम् (ग) देवताकाण्डम् (घ)संकर्षणकाण्डम्

२०. जैमिनिमते परमपुरुषार्थः कः।

(क)मोक्षः (ख) धर्मः (ग) मृत्युः (घ)स्वर्गः

२१. शारीरमीमांसां कः प्रणीतवान्।

(क)जैमिनिः (ख)कणादः (ग)बादरायणः (घ)कपिलः

२२. शारीरमीमांसाया अपरं नाम किम्।

(क)उत्तरमीमांसा (ख)पूर्वमीमांसा (ग)कर्ममीमांसा (घ)धर्ममीमांसा

२३. शारीरमीमांसाया अपरं नाम किम्।

(क)ब्रह्मसूत्रम् (ख)पूर्वमीमांसा (ग)कर्ममीमांसा (घ)धर्ममीमांसा

२४. शारीरकमीमांसायां कति अध्यायाः सन्ति।

(क)१ (ख)२ (ग)३ (घ)४

२५. शारीरकमीमांसायां कति सूत्राणि सन्ति।

(क)३९९२ (ख)४०० (ग)५५० (घ)५५५

२६. शारीरकमीमांसायाम् प्रथमाध्यायस्य नाम किम्।

(क)समन्वयः (ख)अविरोधः (ग)साधनम् (घ)फलम्

२७. रामायणस्य चतुर्दशसु विद्यासु क्वान्तर्भावः।

(क)ब्राह्मणे (ख)कल्पे (ग)अर्थशास्त्रे (घ)धर्मशास्त्रे

२८. महाभारतस्य चतुर्दशसु विद्यासु क्वान्तर्भावः।

(क)ब्राह्मणे (ख)कल्पे (ग)अर्थशास्त्रे (घ)धर्मशास्त्रे



## ४.६) उपवेदाः

अष्टादश विद्यास्थानानि सन्ति। तत्र प्रथमं चत्वारो वेदाः, ततः षड् अङ्गानि निरूपितानि। ततः परम् पुराणानं न्यायः मीमांसा धर्मशास्त्रम् इति चत्वारि उपाङ्गानि निरूपितानि। सम्प्रति उपवेदाः निरूप्यन्ते। ते च आयुर्वेदः धनुर्वेदः गान्धर्ववेदः अर्थशास्त्रं चेति चत्वारः उपवेदाः इति ते निरूप्यन्ते।

ऋग्वेदस्य उपवेदो हि आयुर्वेदः। यजुर्वेदस्य उपवेदो हि धनुर्वेदः। अस्य राजविद्या इति नामान्तरम्। सामवेदस्य उपवेदो हि गान्धर्ववेदः। अथर्ववेदस्य उपवेदो हि अर्थशास्तरम्। अर्थशास्त्रम् अर्थवेद इत्यपि आख्यायते।

### ४.६.१) आयुर्वेदः

ब्रह्मा प्रजापतिः अश्विनीकुमारौ इन्द्रः धन्वन्तरी भरद्वाजः आत्रेयः अग्निवेश्यः इत्यादिभिः आयुर्वेदस्य उपदेशः कृतः। तस्यैव संक्षेपः चरकेण कृतः। चरकमतेन सूत्रं शारीरम् ऐन्द्रियं चिकित्सा निदानं विमानं विकल्पः सिद्धिः चेति अष्टौ स्थानानि भवन्ति आयुर्वेदस्य। सुश्रुत-वाग्भटयोः मतेन सूत्रं शारीरं निदानं चिकित्सा कल्पः इति पञ्च अङ्गानि प्रतिपादितानि।

आयुर्वेदस्य अष्टौ अङ्गानि भवन्ति। तानि हि - १)कायचिकित्सा २)कौमारभृत्यम्/बालचिकित्सा ३)ग्रहचिकित्सा/भूतविद्या ४)ऊर्ध्वाङ्गचिकित्सा/शालाक्यचिकित्सा ५)शल्यचिकित्सा ६)दंष्ट्रचिकित्सा ७)जराचिकित्सा ८)वृषचिकित्सा/वाजीकरणम् इति।

सुश्रुतेन कामशास्त्रस्य वाजीकरणम् इति नाम कृतम्। अपिच कामशास्त्रं प्रतिपादितम्। अतः कामशास्त्रम् आयुर्वेदे एव अन्तर्भवति। वात्स्यायनो मुनिः कामशास्त्रं सविस्तरं लिखितवान्। तस्मिन् पञ्च अध्यायाः सन्ति। शास्त्रोक्तरीत्या विषयोभोगे क्रियमाणेऽपि दुःखं जायते एव इति कामशास्त्रेण प्रदर्श्यते। अतः येन केनापि मार्गेण विषयवैराग्यमेव जायताम् इति कामशास्त्रस्य अभिमतम्। अत एव विषयवैराग्यम् अस्य प्रयोजनम्।

रोगः तत्कारणानि, रोगनिवृत्तिः आरोग्यसाधनं चेति एतेषां ज्ञानं चिकित्साशास्त्रस्य प्रयोजनम्।

### ४.६.२) धनुर्वेदः

धनुर्वेदः पादचतुष्टयात्मको विश्वामित्रप्रणीतः। तत्र प्रथमो दीक्षापादः। द्वितीयाः संग्रहपादः। तृतीयः सिद्धिपादः। चतुर्थः प्रयोगपादः। तत्र प्रथमे पादे धनुर्लक्षणम् अधिकारिनिरूपणं च कृतम्। अत्र धनुःशब्दः चापे रूढोऽपि धनुर्विधायुधे प्रवर्तते। तच्चायुधं चतुर्विधम्- मुक्तममुक्तं मुक्तामुक्तं यन्त्रमुक्तम्। मुक्तं चक्रादि। अमुक्तं खड्गादि। मुक्तामुक्तं शल्यावान्तरभेदादि। यन्त्रमुक्तं शरादि। तत्र मुक्तमस्त्रमुच्यते। अमुक्तं शस्त्रमित्युच्यते। तदपि ब्राह्मवैष्णवपाशुपतप्राजापत्याग्नेयादिभेदाद् अनेकविधम्। एवं साधिदैवतेषु समन्त्रकेषु चतुर्विधायुधेषु येषाम् अधिकारः क्षत्रियकुमाराणां तदनुयायिनां च ते सर्वे चतुर्विधाः पदाति-रथ-गज-तुरुगारूढाः। दीक्षाभिषेक-शकुन-मङ्गल-करणादिकं च सर्वमपि प्रथमे पादे निरूपितम्। सर्वेषां शस्त्रविशेषाणाम् आचार्यस्य च लक्षणपूर्वकं संग्रहणप्रकारो दर्शितो द्वितीयपादे गुरुसम्प्रदायसिद्धानां



शस्त्रविशेषाणां पुनः पुनरभ्यासो मन्त्रदेवतासिद्धिकरणमपि निरूपितं तृतीयपादे। एवं देवतार्चनाभ्यासादिभिः सिद्धानाम् अस्त्रविशेषाणां प्रयोगः चतुर्थपादे निरूपितः। क्षत्रियाणां स्वधर्माचरणं युद्धं दुष्टस्य दण्डः चोरादिभ्यः प्रजापालनं च धनुर्वेदस्य प्रयोजनम्। एवं च ब्रह्मप्रजापत्यादिक्रमेण विश्वामित्रप्रणीतं धनुर्वेदशास्त्रम्।

### ४.६.३) गान्धर्ववेदः

गीतं वाद्यं नृत्यम् इत्यादयः मनोरञ्जनस्य नैके उपायाः सन्ति। एतेषाम् उपयोगः देवताराधाने निर्विकल्पसमाधौ च भवतु इति धिया इदं शास्त्रं प्रणीतम् आचार्येण मुनिना भरतेन। तदेवास्य मुख्यं प्रयोजनम्। तथाह मधुसूदनसरस्वती- देवताराधननिर्विकल्पकसमाध्यादिसिद्धिश्च गान्धर्ववेदस्य प्रयोजनम्। अस्मिन् सङ्गीतशास्त्रतत्त्वानि व्याख्यायन्ते।

### ४.६.४) अर्थशास्त्रम्

एवमर्थशास्त्रं च बहुविधम्। नीतिशास्त्रम् अश्वशास्त्रं शिल्पशास्त्रं सूपकारशास्त्रं चतुःषष्टिकलाशास्त्रं चेति नानामुनिभिः प्रणीतं तत्सर्वमस्य च सर्वस्य लौकिकवत् प्रयोजनभेदो द्रष्टव्यः।

एवमष्टादश विद्याः त्रयीशब्देनोक्ताः। अन्यथा न्यूनताप्रसङ्गात्।

नीतिशास्त्रम् अश्वशास्त्रं शिल्पशास्त्रं सूपकारशास्त्रं (पाकशास्त्रं) चतुःषष्टिकलाशास्त्रं चेति विविधाः प्रकाराः सन्ति अर्थशास्त्रस्य।



## पाठगतप्रश्नाः

२९. ऋग्वेदस्य उपवेदः कः।

(क)आयुर्वेदः (ख) धनुर्वेदः (ग) गान्धर्ववेदः (घ) अर्थशास्त्रम्

३०. यजुर्वेदस्य उपवेदः कः।

(क)आयुर्वेदः (ख) धनुर्वेदः (ग) गान्धर्ववेदः (घ) अर्थशास्त्रम्

३१. सामवेदस्य उपवेदः कः।

(क)आयुर्वेदः (ख) धनुर्वेदः (ग) गान्धर्ववेदः (घ) अर्थशास्त्रम्

३२. आयुर्वेदः कस्य उपवेदः।

(क) ऋग्वेदस्य (ख) यजुर्वेदस्य (ग) सामवेदस्य (घ)अर्थवेदस्य

३३. अयम् आयुर्वेदस्य आचार्यः।

(क) चरकः (ख)विश्वामित्रः (ग) भरतमुनिः (घ) वशिष्ठः

३४. अयम् धनुर्वेदस्य प्रणेता।

(क) चरकः (ख)विश्वामित्रः (ग) भरतमुनिः (घ) वशिष्ठः

३५. चरकमतेन आयुर्वेदस्य कति स्थानानि।



(क)३ (ख) ४ (ग) ७ (घ)८

३६. आयुर्वेदस्य कति अङ्गानि।

(क)३ (ख) ४ (ग) ७ (घ)८

३७. कामशास्त्रं कुत्र अन्तर्भवति।

(क) आयुर्वेदे (ख) गान्धर्ववेदे (ग) कल्पे (घ) तन्त्रशास्त्रे

३८. कामशास्त्रं कः प्रणीतवान्।

(क)वात्स्यायनः (ख) वाग्भटः (ग) सुश्रुतः (घ)चरकः

३९. कामशास्त्रस्य प्रयोजनं किम्।

(क)धर्मः (ख) अर्थः (ग) कामः (घ) वैराग्यम्

४०. विश्वामित्रप्रणीतस्य धनुर्वेदस्य तृतीयाध्यायस्य नाम किम्।

(क)दीक्षापादः (ख)संग्रहपादः (ग) सिद्धिपादः (घ)प्रयोगपादः

४१. शरादिकं कीदृशम् आयुधम्।

(क)मुक्तम् (ख) अमुक्तम् (ग) मुक्तामुक्तम् (घ)यन्त्रमुक्तम्

४२. गान्धर्ववेदस्य मुख्यं प्रयोजनम् किम्।

(क)मनोरञ्जनम् (ख) गीतम् (ग) नृत्यम् (घ)निर्विकल्पकसमाधिसिद्धिः

## ४.७) सांख्यं योगः च

### ४.७.१) सांख्यम्

सांख्यस्य योगस्य च पृथक् दर्शनत्वेन गणना भवति।

महर्षिः कपिलः सांख्यशास्त्रस्य प्रणेता। स ५२७ सांख्यसूत्राणि रचयामास। तत्र ६ अध्यायाः सन्ति। तत्र प्रथमेऽध्याये विषया निरूपिताः। द्वितीयेऽध्याये प्रधानकार्याणि। तृतीयेऽध्याये विषयेभ्यो वैराग्यम्। चतुर्थेऽध्याये विरक्तानां पिङ्गलाकुरवादीनाम् आख्यायिकाः। पञ्चमेऽध्याये परपक्षनिर्णयः। षष्ठे सर्वार्थसंक्षेपः।

त्रिविधदुःखानाम् आत्यन्तिकी ऐकान्तिकी च निवृत्तिः एव मोक्षाख्यः पुरुषार्थः इति सांख्याभ्युपगमः। प्रकृतिपुरुषयोः विवेकज्ञानेन पुरुषार्थसिद्धिः भवति, तदेव प्रकृतिपुरुषविवेकज्ञानं सांख्यशास्त्रस्य प्रयोजनम्।

दुःखस्य आत्यन्तिकी निवृत्तिर्नाम दुःखस्य नाशानन्तरं पुनः तस्य उत्पत्तिः नैव भवति चेत् सा आत्यन्तिकी निवृत्तिः। दुःखस्य नाशः निश्चयेन भवति चेत् सा ऐकान्तिकी निवृत्तिः इति। दुःखं हि आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकं चेति भेदेन त्रिविधम्।

सांख्यदर्शने पञ्चविंशतितत्त्वानि प्रपञ्चितानि। एवं पञ्चविंशतिसंख्यया सह सम्बन्धाद् अस्य शास्त्रस्य सांख्यम् इति नाम इति केचन आमनन्ति। महाभारते उक्तञ्च –

संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते।
तत्त्वानि च चतुर्विंशत् तेन सांख्यं प्रकीर्तितम्॥ इति।

तानि च (२५) पञ्चविंशतिः तत्त्वानि हि - पुरुषः प्रकृतिः महत् अहङ्कारः शब्द-स्पर्श-रूप-रस-गन्ध इति पञ्चतन्मात्राणि, आकाश-वायु-तेजो-जल-पृथिवीति पञ्चमहाभूतानि, श्रोत्र-त्वक्-चक्षू-रसन-घ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि वाक्-पाणि-पाद-पायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि मनश्चेति।

## ४.७.२) योगः

महर्षिपतञ्जलिना सूत्ररूपेण प्रणीतं योगशास्त्रम्। तस्मिन् समाधिपादः साधनपादः विभूतिपादः कैवल्यपादः चेति चत्वारः पादाः सन्ति। १९५ सूत्राणि च सन्ति।

सांख्ये यानि तत्त्वानि सन्ति तानि एव योगशास्त्रेऽपि सन्ति। सांख्याः ईश्वरं नाङ्गीकुर्वन्ति। योगः अङ्गीकरोति। एवं २६ तत्त्वानि सन्ति। अतः योगः सेश्वरसांख्यमिति अपि प्रचारः अस्ति। योगाभ्यासेन कैवल्यलाभः इति योगस्य मुख्यं प्रयोजनम्। विजातीयप्रत्ययनिरोधद्वारेण निदिध्यासनसिद्धिः ततश्च कैवल्यलाभः।

यागशास्त्रे 'अथ योगानुशासनम्' इति प्रथमं सूत्रम्। तत्र प्रथमपादे चित्तवृत्तिनिरोधात्मकः समाधिः अभ्यासवैराग्यरूपं च तत्साधनं निरूपितम्। द्वितीये पादे विक्षिप्तचित्तस्यापि समाधिसिद्ध्यर्थं चित्तवृत्तिनिरोधात्मकः यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टाङ्गानि निरूपितानि। तृतीये पादे योगिविभूतयः। चतुर्थे पादे कैवल्यमिति।



## पाठगतप्रश्नाः

४३. सांख्यसूत्राणि कति।

(क) ५५५ (ख) ६०५ (ग) ३००० (घ) ५२७

४४. सांख्यशास्त्रे कति अध्यायाः सन्ति।

(क)४ (ख) ५ (ग) ६ (घ)७

४५. सांख्यानां कति तत्त्वानि।

(क) १६ (ख) २४ (ग) २५ (घ)२६

४६. योगशास्त्रे कति अध्यायाः सन्ति।

(क)४ (ख) ५ (ग) ६ (घ)७

४७. योगसूत्राणि कति।

(क) १५५ (ख) १९५ (ग) ३०० (घ) ५२७



४८. योगशास्त्रस्य कति तत्त्वानि।

(क) १६ (ख) २४ (ग) २५ (घ)२६

४९. योगशास्त्रे अस्ति परन्तु सांख्यशास्त्रे नास्ति तदिदं तत्त्वम्।

(क) पुरुषः (ख) ईश्वरः (ग) प्रकृतिः (घ) महत्

५०. योगशास्त्रस्य चतुर्थाध्यायस्य नाम किम्।

(क) समाधि

## ४.८) निगमः आगमः तन्त्रम्

तनु विस्तारे इति त्रैङ् पालने इति द्वयोः धात्वोः योगेन तन्त्र इति शब्दस्य निष्पत्तिः जाता इति कामिकागमतन्त्रस्य मतम्। तनु विस्तारे इति धातोः ष्ट्रन्-प्रत्यययोगेन तन्त्रशब्दस्य निष्पत्तिम् अपि अभ्युपगच्छन्ति नैके। तन्यते विस्तार्यते ज्ञानमनेन इति तन्त्रम्। अर्थात् येन शास्त्रेण ज्ञानस्य विस्तारः भवति तत् शास्त्रम् तन्त्रम् इति। तन्त्रशब्दस्य अत्यन्तं व्यापकोऽपि अर्थोऽस्ति।

तनोति विपुलान् अर्थान् तन्त्रमन्त्रसमन्वितान्।
त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते॥

**सरलार्थः**- तन्त्रसमन्वतान् मन्त्रसमन्वितान् विपुलान् अर्थान् विषयान् तनोति विस्तारयति ददाति, अपिच त्राणं रक्षणं करोति। अतः तन्त्रम् इति आचक्षते।

आगच्छन्ति बुद्धिमारोहन्ति यस्मादभ्युदयनिःश्रेयोपायाः स आगमः इति वाचस्पतिमिश्रेण योगभाष्ये आगमपदस्य अर्थः प्रकटितः।

### तन्त्रस्य विभाजनम्

तन्त्रस्य वैपुल्याद् वैविध्याच्च विभाजनस्य नैके प्रकाराः सन्ति। अतः विविधान् प्रकारान् अत्र संक्षेपतः उपन्यस्यते।

### मुख्यविभागः

ब्राह्मणतन्त्रम् बौद्धतन्त्रम् जैनतन्त्रम् इति तन्त्रस्य त्रैविध्यम्। अयं भारतीयतन्त्राणां समेषां समावेशकः विभागः।

तत्र बौद्धानां तन्त्रम् वज्रयानम् सहजयानम् कालचक्रयानम् इति भेदेन त्रिविधम्।

### ब्राह्मणतन्त्रस्य विभागनस्य प्रकारः-१

ब्राह्मणतन्त्रे उपास्यदेवताभेदात् त्रयो भेदाः सन्ति। ते हि - १)वैष्णवागमः (पाञ्चरात्रम्), २)शैवागमः, ३)शाक्तागमः चेति। वैष्णवागमे विष्णुः, शैवागमे शिवः, शाक्तागमे शक्तिः इति एताः परा देवता उपास्यन्ते।



### ब्राह्मणतन्त्रस्य विभागनस्य प्रकारः-२

प्रकारान्तरेण तन्त्रशास्त्रम् प्रधानतया त्रिविधम्- १)आगमः २)यामलः ३)तन्त्रम् चेति।

**१)आगमम्**

तत्र निगमागमयोः विभाजनं क्रियते। यत्र पार्वती प्रश्नान् पृच्छति भगवान् शिवः उत्तराणि ददाति तत् तन्त्रम् आगमम् कथ्यते। यत्र तु शिवः प्रश्नान् पृच्छति पार्वती उत्तराणि ददाति तत् तन्त्रम् निगमः इति समाख्यायते। तथाहि कारिका-

आगतं च शिववक्त्रेभ्यो गतञ्च गिरिजाश्रुतौ।
मतञ्च वासुदेवस्य तस्मादागममुच्यते॥ इति।

आगमलक्षणं तावत् -

सृष्टिश्च प्रलयश्चैव देवतानां तथार्चनम्।
साधनञ्चैव सर्वेषां पुरश्चरणेव च॥
षट्कर्मसाधनञ्चैव ध्यानयोगश्चतुर्विधः।
सप्तभिर्लक्षणैर्युक्तमागमं तद् विदुर्बुधाः॥ इति वाराहितन्त्रम्।

**सरलार्थः** - वाराहीतन्त्रे आगमस्य सप्तलक्षणानि उक्तानि। तानि हि - १)सृष्टिः २)प्रलयः ३)देवार्चनम् ४) सर्वसाधनम् ५) पुरश्चरणम् ६)षट्कर्मसाधनम् ७)ध्यानयोगः चेति। अयं च ध्यानयोगः चतुर्विधः भवति।

**२)यामलः**

सृष्टिश्च ज्यौतिषाख्यानं नित्यकृत्यप्रदीपनम्।
क्रमसूत्रं वर्णभेदो जातिभेदस्तथैव च।
युगधर्मश्च संख्यातो यामलस्याष्टलक्षणम्॥

**सरलार्थः**- यमलस्य अष्टौ लक्षणानि- १)सृष्टिः २)ज्यौतिषाख्यानम् ३)नित्यकृत्यप्रदीपनम् ४)क्रमसूत्रम् ५) वर्णभेदः ६)जातिभेदः ७)युगधर्मः ८)

यमला नाम कामसिद्धाम्बा, तत्प्रदिपादिकानि तन्त्राणि यामलान्यष्टौ। तेषां गणो यामलाष्टकम्।

यामलः षोढा। १)आदित्यामलम् २)ब्रह्मयामलम् ३)विष्णुयामलम् ४)रुद्रयामलम् ५)गणेशयामलम् ६)आदित्ययामलम् चेति।

### ब्राह्मणतन्त्रस्य विभागनस्य प्रकारः-३

तन्त्रमेव आगम इत्यपि कथ्यते। क्वचित् वैष्णवानां शैवानां वाङ्मयम् आगमपदेन व्यपदिश्यते, शाक्तानां बौद्धानां जैनानां च वाङ्मयं तन्त्रपदेन व्यपदिश्यते।

क्वचित् निगमपदेन वेदः बोध्यते। निगमे सिद्धान्तपक्षः आगमे व्यवहारपक्षः च प्रामुख्यं भजेते। अर्थात् यत् तत्त्वं निगमे प्रतिपाद्यते तस्य लाभाय साधना आगमे उपदिश्यते। वेदः विशेषतः वेदान्तः ज्ञानात्मकः, आगमः क्रियात्मकः वेदज्ञानानुकूलः।



### ब्राह्मणतन्त्रस्य विभागनस्य प्रकारः-४

भूक्षेत्रभेदेनापि तन्त्रविभागः परिलक्ष्यते। यथा विष्णुक्रान्ता रथक्रान्ता अश्वक्रान्ता (गजक्रान्ता) चेति। प्रतिक्षेत्रम् ६४ तन्त्राणि सन्ति।

### ब्राह्मणतन्त्रस्य विभागनस्य प्रकारः-५

दार्शनिकसिद्धान्तभेदाद् भिन्नप्रकारेणापि विभागः तन्त्रस्य भवितुमर्हति। यथा - अद्वैतप्रधानं द्वैतप्रधानम् द्वैताद्वैतप्रधानं चेति त्रिधा। रामानुजमतेन पाञ्चरात्रागमः विशिष्टाद्वैतस्य प्रतिपादकः। शैवागमे त्रीणि मतानि मिलितानि सन्ति। शाक्तागमे अद्वैतमेव प्रतिपाद्यते।

### ब्राह्मणतन्त्रस्य विभागनस्य प्रकारः-६

प्रकारान्तरेण तन्त्रस्य द्वेधा विभागः क्रियते- १)वेदानुकूलतन्त्रम् २)वेदबाह्यं तन्त्रम् इति। पाञ्चरात्रस्य शैवागमस्य च नैके सिद्धान्ताः वेदाद् उद्भूताः वेदानुकूलाश्च। शाक्तानाम् सप्त आचाराः। तेषु सप्तसु आचारेषु वामाचारः वेदबाह्यः वर्तते। अन्ये आचारः वेदसम्मताः एव। वेदबाह्यतन्त्रेषु आचारः पूजापद्धतिः इत्यादिकं वेदाद् भिन्नं भवति।

### शाक्तानाम् आचारः

शाक्तमते पशुभावः वीरभावः दिव्यभावः चेति त्रयो भावाः। आचाराश्च सप्त। तथाहि- वेदाचारः वैष्णवाचारः शैवाचारः दक्षिणाचारः वामाचारः सिद्धान्ताचारः कौलाचारः चेति। भावः अत्र मनसः विशिष्टा स्थितिः, आचारश्च भावप्रभावितम् बाह्यम् आचरणम्।

### ब्राह्मणतन्त्रस्य विभागनस्य प्रकारः-७

श्रीकण्ठः पाशुपतमतस्य आद्यः प्रवर्तकः। ततः २८ योगाचार्याः समभवन्। तेषु अन्तिमः योगाचार्यः लकुलीशः। श्रीकण्ठः लकुलीशः इति द्वाभ्यां पाशुपतमतं प्रवर्तितम् इति प्रायः प्रचारः। तत्र श्रीकण्ठस्य चतुर्भेदभिन्नं विशिष्टाद्वैतम् १)शुद्धद्वैताद्वैतम् २)सेश्वराद्वैतम् ३)शिवाद्वैतम् (विशेषाद्वैतम्/वीरशैवमतम्) ४)रसेश्वरमतम् इति अस्ति। तस्य अन्तर्भावः प्रोक्ते द्वैताद्वैते रौद्रागमे भवति इति केचित्। द्वैतस्य द्वे दर्शने, द्वैताद्वैतस्य चत्वारि, अद्वैतस्य चत्वारि इति आहत्य दश दर्शनानि शैवागमस्य।

अद्वैतवादिनाम् चत्वारि दर्शनानि- नन्दिकेश्वरप्रतिपदितं दर्शनम्, प्रत्यभिज्ञादर्शनम् क्रमदर्शनम् कुलदर्शनम् चेति।

### ब्राह्मणतन्त्रस्य विभागनस्य प्रकारः-८

### माहेश्वरसम्प्रदायाः

महेश्वरप्रणीतस्य सिद्धान्तानुयायित्वात् चत्वारः माहेश्वराः- शैवाः पाशुपताः कारुणिकसिद्धान्तिनः(कालामुखः) कापालिकाश्चेति वाचस्पतिमिश्रः भामत्याम् आह। शैवस्य सम्बन्धः



ब्राह्मणेन सह, पाशुपतस्य क्षत्रियेण सह, कालामुखस्य वैश्येन सह, कापालिकस्य च शूद्रेण सह इति चतुर्णां भेदानां वर्णेन सह सम्बन्धः अस्ति इति वामनपुराणम् (६.८६-९१)

अत्र शैवपदेन द्वैतवादिनां शैवानां ग्रहणं क्रियते। आगमशास्त्रेषु शैवागमस्य त्रयो भेदाः प्रथिताः। ते हि- १) द्वैतवादी शैवागमः, २) द्वैताद्वैतवादी रौद्रामगमः, ३) अद्वैतवादी भैरवागमः इति। द्वैतवादिनाम् आगमसंख्या दश, रौद्रागमसंख्या अष्टादश, भैरवागमसंख्या चतुषष्टिः इति। कर्णाटकराज्ये प्रसिद्धः वीरशैवसम्प्रदायः शैवरौद्रागमानाम् अष्टाविंशतेः प्रामाण्यम् उरीकरोति।

### पञ्चरात्रम्

#### पञ्चरात्रशब्दस्यार्थः

पञ्चानां रात्रीणां समाहारः पञ्चरात्रम्। तस्येदम् पाञ्चरात्रम्। शाण्डिल्यः औपगायनः मौञ्जायनः कौशिकः भारद्वाजः इति पञ्चभिः योगिभिः तोताद्रौ दुष्करं तपः तप्तम्। तेषु प्रसन्नः भगवान् वासुदेवः पञ्चसु रात्रिषु तान् उपदिदेश। अतः तन्मतं पाञ्चरात्रम् इत्याचक्षते। अस्य आविर्भावः महाभारतसमये इति।

सार्धकोटिप्रमाणेन कथितं तस्य विष्णुना।
रात्रिभिः पञ्चभिः सर्वं पाञ्चरात्रमिति स्मृतम्॥ (मार्कण्डेयसंहिता)

महाभारते पाञ्चरात्रस्य अति विस्तृतं स्वरूपं प्रतिपाद्यते। तथाहि श्लोकः-

एवमेकं सांख्ययोगं वेदारण्यकमेव च।
परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यते॥ (महाभारतम् शान्ति.३४९.८१, ८२)

एतदनुसारं सांख्यं योगः वेदः आरण्यकम् पञ्चरात्रं एतानि परस्परम् अङ्गानि सन्ति।

पाञ्चरात्रे ब्रह्मा सप्तविधानि जन्मानि लेभे। तथाहि-

ब्रह्मणो मानं जन्म प्रथमं चाक्षुषं स्मृतम्।
द्वितीयं वाचिकं चान्यच्चतुर्थं श्रोत्रसम्भवम्॥
नासिक्यमपरं चान्यदण्डजं पङ्कजं तथा। इति। (पारमेश्वरसंहिता १.३८-३९)

अत्र उक्तेषु पङ्कजं जन्म भवति तदा नारायणः ब्रह्मा दक्षप्रजापतिः आदित्यः विवस्वान् मनुः इक्ष्वाकुः इति पाञ्चरात्रस्य सम्प्रदायस्य क्रमः। अस्य उल्लेखः गीतायामपि लभ्यते।

इमं विवस्वते योगं प्रोक्तवानमहव्ययम्।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥ (गीता ४.१)

**सरलार्थः** - अयम् अव्यययोगः मया पूर्वं विवस्वते प्रोक्तः। विवस्वान् मनवे प्रोक्तवान्। मनुश्च इक्ष्वाकुम् आह इति। अत एव गीता पाञ्चरात्रसम्प्रदायस्य ग्रन्थः इति वक्तुं शक्यते। एतदर्थमेव पाञ्चरात्रस्य विस्तरः अत्र अधिकः कृतः।



### चातूरूप्यम्

भगवतो वासुदेवस्य चत्वारि रूपाणि सन्ति। तानि हि- १)परः २)व्यूहः ३)विभवः ४)अर्चा चेति। क्वचित् अन्तर्यामी इति पञ्चममपि रूपं गृह्यते। एतेषां रूपाणां नामानि सन्ति। यथा- परः वासुदेवः, व्यूहः संकर्षणः, विभवः प्रद्यम्नः, अर्चा अनिरुद्धः इति।

यद् वैष्णवं नारदादिभिः कृतं पञ्चरात्रम् तत्र वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाः चत्वारः पदार्था निरूपिताः। भगवान् वासुदेवः सर्वकारणं परमेश्वरः। तस्मादुत्पद्यते संकर्षणाख्यो जीवः। तस्माद् मनः प्रद्युम्नः। तस्माद् अनिरुद्धोऽहंकारः। सर्वे चैते भगवतो वासुदेवस्य एव अंशभूताः। तदभिन्ना एवेति भगवतो वासुदेवस्य मनोवाक्कायवृत्तिभिः आराधनं कृत्वा कृतकृत्यो भवतीत्यादि च निरूपितम्।

### विशिष्टाद्वैतम्

पाञ्चरात्रस्य कांश्चित् सिद्धान्तान् आदाय प्रवर्तितं शास्त्रम् विशिष्टाद्वैतमिति।

भोक्ता भोग्यं प्रेरितारं च मत्वा (श्वे.उ १.१२) इति श्रुतिप्रमाणेन विशिष्टाद्वैतवेदान्ते विशेषेण तत्त्वत्रयम् अभ्युपगच्छन्ति। जीवः चित् , जगत् अचित् , चिदचिद्विशिष्टः ईश्वरः चेति तानि त्रीणि तत्त्वानि। तत्र शेषत्वेन चिदचित्तत्त्वयोः परमात्मनि आश्रयः। परमात्मनः चिदचित्तत्त्वयोश्च अपृथग्भावसम्बन्धः (अङ्गाङ्गिभावः) अस्ति। एतत् तत्त्वत्रयमपि सत्यरूपम्। चिदचिद्विशिष्टः ईश्वरः एक एव इति विशिष्टाद्वैतम् इदं मतमुच्यते।

### पाशुपतम्

मधुसूदनसरस्वतीमहाभागः प्रस्तानभेदाः इति स्वकीये ग्रन्थे पाशुपतमतविषये इत्थं लिखितवान्-- पशुपतिमतं पाशुपतं शास्त्रं पशुपतिना पशुपाशविमोक्षणाय - अथातः पाशुपतं योगविधिं व्याख्यास्यामः इत्यादिपञ्चाध्यायं विरचितम्।तत्राध्यायपञ्चकेनापि कार्यरूपो जीवः पशुः, कारणं पतिरीश्वरः। योगः पशुपतौ चित्तसमाधानम्। विधिः भस्मना त्रिषवणस्नानादिः निरूपितः दुःखान्तसंज्ञो मोक्षश्च प्रयोजनम्। एत एव कार्यकारणयोगविधिदुःखान्ता इत्याख्यायन्ते।

## ४.९) सृष्टिविचारभेदेन दर्शनभेदः

सर्वेषां दर्शनानां संक्षेपेण त्रिविध एव भेदः इत्यपि प्रकारनान्तरेण वक्तुं शक्यते। तत्राऽऽरम्भवादः एकः। परिणामवादो द्वितीयः। विवर्तवादस्तृतीयः। पार्थिवाप्यतैजसवायवीयाः चतुर्विधाः परमाणवो द्व्यणुकादिक्रमेण ब्रह्माण्डपर्यन्तं जगदारभन्ते। असदेव कार्यं कारकव्यापाराद् उत्पद्यत इति प्रथमः तार्किकाणाम्। मीमांसकानां च सत्त्वरजस्तमोगुणात्मकं प्रधानमेव महदहंकारादिक्रमेण जगदाकारेण परिणमते। पूर्वमपि सूक्ष्मरूपेण सदेव कार्यं कारणव्यापारेण अभिव्यज्यत इति द्वितीयः पक्षः सांख्ययोगपातञ्जलपाशुपतानाम्। ब्रह्मणः परिणामो जगदिति वैष्णवानाम्। स्वप्रकाशपरमानन्दाद्वितीयं ब्रह्म स्वमायावशाद् मिथ्या एव जगदाकारेण कल्पत इति तृतीयः पक्षो ब्रह्मवादिनाम्। सर्वेषां प्रस्थानकर्तृणां



मुनीनां विवर्तवादपर्यवसानेन अद्वितीये परमेश्वर एव प्रतिपाद्ये तात्पर्यम्। न हि ते मुनयो भ्रान्ताः सर्वज्ञत्वात् तेषाम्। किन्तु बहिर्विषयप्रवणानाम् आपाततः पुरुषार्थे प्रवेशो न संभवतीति नास्तिक्यवारणाय तैः प्रकारभेदाः प्रदर्शिताः। तत्र तेषां तात्पर्यम् अबुद्ध्वा वेदविरुद्धेऽप्यर्थे तात्पर्यम् उत्प्रेक्ष्यमाणाः तन्मतमेव उपादेयत्वेन गृह्णन्तो जना नानापथजुषो भवन्तीति सर्वमनवद्यम्॥



## पाठगतप्रश्नाः

५१. तन्त्रस्य मुख्यविभागान् लिखत।

५२. बौद्धतन्त्रस्य विभागान् लिखत।

५३. उपास्यदेवताभेदात् तन्त्रभेदान् लिखत।

५४. भूक्षेत्रभेदेन तन्त्रविभागान् लिखत।

५५. शाक्तानाम् भावाः कति के च।

५६. शाक्तानाम् आचाराः कति के च।

५७. पाञ्चरात्रमतेन वासुदेवस्य चत्वारि रूपाणि लिखत।

५८. सृष्टिविषये कति वादाः सन्ति के च ते।



## पाठगतप्रश्नानामुत्तराणि

१. सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितं चैव पुराणं पञ्चलक्षणम्॥

२. (घ)

३. (ग)

४. (क)

५. (क)

६. (क)

७. (ग)

८. (ग)

९. (ग)

१०. (ख)

११. (ख)

१२. (क)

१३. (क)



१४. (क)
१५. (क)
१६. (ग)
१७. (क)
१८. (ग)
१९. (क)
२०. (घ)
२१. (ग)
२२. (क)
२३. (क)
२४. (घ)
२५. (घ)
२६. (क)
२७. (घ)
२८. (घ)
२९. (क)
३०. (ख)
३१. (ग)
३२. (क)
३३. (क)
३४. (ख)
३५. (घ)
३६. (घ)
३७. (क)
३८. (क)
३९. (घ)
४०. (ग)
४१. (घ)
४२. (घ)
४३. (घ)
४४. (ग)



४५. (ग)

४६. (क)

४७. (ख)

४८. (घ)

४९. (ख)

५०. (घ)

५१. ब्राह्मणतन्त्रम् बौद्धतन्त्रम् जैनतन्त्रम् इति तन्त्रस्य मुख्यतः त्रैविध्यम्।

५२. बौद्धानां तन्त्रम् वज्रयानम् सहजयानम् कालचक्रयानम् इति भेदेन त्रिविधम्।

५३. उपास्यदेवताभेदात् तन्त्रस्य त्रयो भेदाः सन्ति। ते हि - १)वैष्णवागमः (पाञ्चरात्रम्), २)शैवागमः, ३)शाक्तागमः चेति। वैष्णवागमे विष्णुः, शैवागमे शिवः, शाक्तागमे शक्तिः इति एताः परा देवता उपास्यन्ते।

५४. भूक्षेत्रभेदेनापि तन्त्रविभागः यथा- विष्णुक्रान्ता रथक्रान्ता अश्वक्रान्ता (गजक्रान्ता) चेति। प्रतिक्षेत्रम् ६४ तन्त्राणि सन्ति।

५५. शाक्तमते पशुभावः वीरभावः दिव्यभावः चेति त्रयो भावाः।

५६. शाक्तमते आचाराः सप्त। तथाहि- वेदाचारः वैष्णवाचारः शैवाचारः दक्षिणाचारः वामाचारः सिद्धान्ताचारः कौलाचारः चेति।

५७. पाञ्चरात्रमतेन भगवतो वासुदेवस्य चत्वारि रूपाणि सन्ति। तानि हि- १)परः २)व्यूहः ३)विभवः ४)अर्चा चेति। क्वचित् अन्तर्यामी इति पञ्चममपि रूपं गृह्यते। एतेषां रूपाणां नामानि सन्ति। यथा- परः वासुदेवः, व्यूहः संकर्षणः, विभवः प्रद्यम्नः, अर्चा अनिरुद्धः इति।

५८. सृष्टिविषये त्रयो वादाः सन्ति। ते हि- आरम्भवादः परिणामवादो विवर्तवादः चेति।

॥ इति चतुर्थः पाठः ॥



# ५

# प्रस्थानत्रये श्रुतिप्रस्थानम्

## प्रस्तावना

प्रस्थीयते अनेनेति प्रस्थानम्। प्रत्येकं दर्शनं कस्मिंश्चित् केषुचिद् वा प्रतिष्ठितं भवति। वेदान्तदर्शनमपि येषु प्रतिष्ठितं तानि प्रत्येकं प्रस्थानमिति शब्देन अभिधीयन्ते। तानि च **श्रुतिः**, **स्मृतिः**, **न्यायः** चेति। तथा च समेषां प्रस्थानत्रयमिति संज्ञा। एतान्येव वेदान्तदर्शनस्य भित्तिभूतानि।

श्रुतिः खलु वेदान्तस्य उत्तरमीमांसायाः वा आदिः। किन्तु उपनिषदुक्तविषयाणां बोधः सारल्येन न भवति। तज्जातानाम् अर्थानां ज्ञाने भ्रान्ताः स्युर्लोका इति निश्चित्य तत्सारोन्मोचनाय शास्त्रस्य च रक्षणाय ग्रन्थान्तराणि विरचितानि। तेषु महाभारते भीष्मपर्वणि उदीरिता श्रीमद्भगवद्गीता तथा महर्षिबादरायणप्रणीतं वेदान्तसूत्रं प्रामुख्येन प्रमाणभूतम्। एवं श्रुतिप्रस्थानत्वेन ईशाद्यः उपनिषदः, स्मृतिप्रस्थानत्वेन श्रीमद्भगवद्गीता, न्यायप्रस्थानत्वेन वेदान्तसूत्रं शारीरिकसूत्रं वा स्वीकृतं विपश्चितैः।

एतानि सर्वाणि वेदान्तशास्त्रे प्रमाणानि। किन्तु तत्र श्रुतिः परमप्रमाणभूता, ततः स्मृतिः, ततः न्यायश्च प्रमाणभूतः। यदि क्वचिद् एतेषां परस्परविरोधः भवति तदा श्रुतेरेव प्रमाणत्वम्।

अत्र एवं बोद्धव्यं यत् न केवलं स्मृतौ गीता एव। किन्तु वेदान्तप्रतिपाद्यतत्त्वानि पुराणादिषु यत्र यत्र उपलभ्यन्ते तानि सर्वाणि एव स्मृतिरूपप्रमाणाणि। एवमेव उपनिषदामेव न केवलं श्रुतित्वेन ग्रहणम्। अपि च समग्रे वेदे यत्र यत्र वेदान्तप्रतिपादकवाक्यानि सन्ति तत्सर्वाणि श्रुतिप्रमाणत्वेन स्वीकृतानि इति वेदान्तपरम्परा। किन्तु न्यायप्रस्थानत्वेन शारीरिकसूत्रमेव स्वीक्रियते।



## उद्देश्यानि

अस्य पाठस्य अध्ययनेन -

- प्रस्थानविषये ज्ञानं भवेत्।
- श्रुतिः का इति जानीयात्।
- उपनिषच्छब्दार्थं जानीयात्।
- उपनिषदां प्राप्तिः कुत्र भवतीति जानीयात्।
- उपनिषदा वेदान्तशब्दस्य कः सम्बन्ध इति जानीयात्।
- उपनिषदां समासेन परिचयं प्राप्नुयात्।

# श्रुतिप्रस्थानम्

## ५.१) श्रुतिः

श्रुतिर्हि वेदः। वेदस्य पर्यायशब्देषु श्रुतिरिति अन्यतमः। श्रूयते अनया इति व्युत्पत्तिः। तेन श्रवणार्थकश्रुधातोः क्तिन्प्रत्यये श्रुतिः इति पदमुपलभ्यते। वेदः द्विधा विभज्यते कर्मकाण्डात्मकः ज्ञानकाण्डात्मकः चेति। ज्ञानकाण्डमेव उत्तरमीमांसाया विषयः। कर्म तु पूर्वमीमांसायाः भाट्टादीनाम्। ईशाद्युपनिषदां ज्ञानकाण्डे अन्तर्भावः।

## ५.२) उपनिषत्

उपनिषत् नाम ब्रह्मविद्या। उपपूर्वकात् निपूर्वकात् सद्–धातोः क्विप्प्रत्यये उपनिषत् इति स्त्रीलिङ्गरूपं प्राप्यते। षद्लृ विशरणगत्यवसादनेषु इति पाणिनीयधातुपाठोक्तिः। तेन सदेः अर्थत्रयं प्राप्यते। तेन एवं तावद् धातुगतार्थत्रयम् उपनिषदिति शब्दस्य –

१) **विशरणम्** – विशरणं नाम विनाशः हिंसा वा। तेन मुमुक्षुः यां विद्याम् उप उपगम्य समीपं गत्वा तन्निष्ठतया तत्परायणो भूत्वा नि निश्चयेन तां परिशीलयन्ति, तेन या विद्या तस्य अविद्यादिसंसारबीजं सीदति विशरणं प्राप्नोति विनश्यति इत्यर्थः।

२) **गतिः** – मुमुक्षुः यां विद्याम् उप उपगम्य समीपं गत्वा तन्निष्ठतया तत्परायणो भूत्वा नि निश्चयेन तां परिशीलयन्ति, तेन या विद्या तं परं ब्रह्म गमयति इति ब्रह्मविद्यागमयत्रीत्यर्थः।

३) **अवसादनम्** – उपगतस्य मुमुक्षोः निश्चयेन या विद्या गर्भवासजन्मजरामरणाद्युपद्रवं संसारचक्रम् अवसादयति शिथिलयतीत्यर्थः।

अत्र ये अर्थाः स्वीकृताः ते खलु श्रीमद्भगवत्पादैः शङ्कराचार्यैः तदीयायां कठोपनिषदः भाष्यभूमिकायाम् आलोचिताः। तथाहि भाष्यम्– ये मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णाः सन्तः उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्यामुपसद्य उपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणात् हिंसनात् विनाशनादित्यनेनार्थयोगेन विद्योपनिषदित्युच्यते इति।

## ५.३) उपनिषदां वेदान्तत्वम्

उपनिषद् वेदान्तशब्देनापि अभिधीयते। कथमिति प्रश्ने वेदान्तशब्दस्य ज्ञानमादौ आवश्यकं भवति। तत्र वेदान्तो नाम यद्यपि न्यायसूत्रगीतादिसकलानां परम्परायां ग्रहणं भवति तथापि उपनिषदः विशेषतो वेदान्तशब्देन भवन्ति अभिहिताः। तथाहि वेदस्य अन्तः इति वेदान्तः। तेन मनसि एवं ज्ञानमुदेति तर्हि वेदस्य अन्तिमे उपनिषत् प्राप्यते इति। न, यद्यपि प्रायः वेदानाम् अन्ते एव उपनिषत् प्राप्यते, तथापि तदर्थम् एवम् अभिधा न जाता। अत्र अन्तशब्दस्य अर्थः रहस्यम् इति ज्ञेयम्। वेदस्य अन्तः रहस्यम् इत्यर्थः तेन प्राप्यते। वेदस्य रहस्यं सारः अत्र गृहीतः अस्तीत्याशयः। उपनिषदः खलु



वेदस्य सारभूता वर्तन्ते। उपनिषदि एव उपनिषच्छब्देन रहस्यं ज्ञायत इत्यस्ति आम्नातम्। तथाहि केनोपनिषदि उपनिषच्छब्दः रहस्यविद्यार्थे प्रयुक्तः चतुर्थे खण्डे –

**उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद् ब्राह्मीं वाव त उपनिषदमब्रूमेति॥ इति।** (केन. ४। ७)

अथ एवमागतं यत् कदाचित् वेदस्य अन्तिमभागे कदाचित् मध्ये वेदस्य सारभूता उपनिषदः प्राप्यन्ते। वस्तुतः प्रायः आरण्यके ब्राह्मणे वा प्राप्यते उपनिषत्। कदाचित् संहितायामपि। तत्र मुक्तिकोपनिषदि अष्टोत्तरशतसंख्यकानाम् उपनिषदां परिचयः प्राप्यते। तदनुसारेण प्रतिवेदमेवम् उपनिषदां संख्या –

- ❖ ऋग्वेदे **दश** उपनिषदः।
- ❖ शुक्लयजुर्वेदे **नवदश** उपनिषदः।
- ❖ कृष्णयजुर्वेदे **द्वात्रिंशत्** उपनिषदः।
- ❖ सामवेदे **षोडश** उपनिषदः।
- ❖ अथर्ववेदे **एकत्रिंशत्** उपनिषदः।

एतानि विहाय अपि उपनिषदः सन्ति बह्व्यः। किन्तु तासां सम्प्रदाये नास्ति तथा स्थानम्। तासां किल उपनिषदां विशेषदैवताश्रयत्वात् न उत्तरमीमांसायामन्तर्भावः। अपि कासांचन अर्वाचीनत्वात् सम्प्रदाये न स्थानम्।

अथ केवलम् दशानां मुख्यत्वं स्वीक्रियते सम्प्रदाये। केचन तु एकादशेति। ताः खलु –

१. ईशोपनिषत्
२. केनोपनिषत्
३. कठोपनिषत्
४. प्रश्नोपनिषत्
५. मुण्डकोपनिषत्
६. माण्डूक्योपनिषत्
७. तैत्तिरीयोपनिषत्
८. ऐतरेयोपनिषत्
९. छान्दोग्योपनिषत्
१०. बृहदारण्यकोपनिषत्

तत्र एवं संग्रहश्लोकः भवति –

**ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तित्तिरिः।**
**ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा॥ इति।**

किञ्च श्वेताश्वेतरोपनिषत् कौषीतक्युपनिषत् इत्यनयोः अपि यद्यपि प्रमाणकोटौ अन्तर्भावः अस्ति तथापि न तयोः मुख्यत्वम् स्वीक्रियते।

एवं विभागे शङ्करभगवत्पादः एव मानम्। उपर्युक्तोपनिषदाम् आचार्यैः कृतानि भाष्याणि सन्ति। तासां विषयगाम्भीर्यादिकारणात् एव तासां वेदान्तसम्प्रदाये ग्रहणम्। तस्मात् ता दश एव मुख्यत्वेन स्वीक्रियन्ते सम्प्रदाये। केचन श्वेताश्वेतरोपनिषदः भाष्यमपि भगवत्पादैः कृतमिति वदन्ति।

कौषीतक्युपनिषत् तु आचार्यैः तत्र तत्र श्रुतिप्रमाणत्वेन स्वीकृता। मैत्रायण्यादीनामपि तत्र केषाञ्चिन्मते अन्तर्भावः।

अत्र नीचैः प्रकोष्ठे मुख्याः दश उपनिषदः कस्मिन् वेदे प्राप्यन्ते इत्युच्यते –

| उपनिषत् | वेदः |
|---|---|
| ईशोपनिषत् | शुक्लयजुर्वेदः |
| केनोपनिषत् | सामवेदः |
| कठोपनिषत् | कृष्णयजुर्वेदः |
| प्रश्नोपनिषत् | अथर्ववेदः |
| मुण्डकोपनिषत् | अथर्ववेदः |
| माण्डूक्योपनिषत् | अथर्ववेदः |
| तैत्तिरीयोपनिषत् | कृष्णयजुर्वेदः |
| ऐतरेयोपनिषत् | ऋग्वेदः |
| छान्दोग्योपनिषत् | सामवेदः |
| बृहदारण्यकोपनिषत् | शुक्लयजुर्वेदः |

किञ्च गद्यपद्यरीतिभेदेन अस्ति उपनिषदः नामभेदः आरण्यकोपनिषत्, मन्त्रोपनिषद् चेति।



## पाठगतप्रश्नाः-१

५९. किं नाम प्रस्थानम्।

६०. कानि प्रस्थानानि। नामानि वदत।

६१. श्रीमद्भगवद्गीता प्राप्यते –

(क) शान्तिपर्वणि (ख) भीष्मपर्वणि (ग) अनुशासनपर्वणि

६२. वेदान्तसूत्रप्रणेता कः।

६३. प्रस्थानत्रये स्मृतिः न्यायात् प्रबला। सत्यं वा एतत्।

६४. उपनिषच्छब्दस्य प्रकृतिप्रत्ययनिरूपणपूर्वकम् अर्थं वदत।

६५. वेदान्तशब्दस्य अर्थं समासेन लिखत।

६६. कति उपनिषदः। तत्र कति मुख्याः।

६७. मुख्योपनिषदां मुख्यत्वे किं मानम्।

६८. मुख्योपनिषदां सङ्ग्रहश्लोकं लिखत।

६९. पद्यात्मकोपनिषदः का संज्ञा।



७०. कठोपनिषत् – (क) ऋग्वेदीया (ख) सामवेदीया (ग) यजुर्वेदीया वा।

## उपनिषत्परिचयः

वेदान्तस्य विषयः खलु जीवब्रह्मणोः ऐक्यं यत् शुद्धचैतन्यम्। उपनिषदः वेदान्तत्वात् समान एव विषयः। उपनिषदः तदेव प्रतिपादयन्ति।

सर्वासाम् उपनिषदां परिचयः एवंप्रकारेण विन्यस्तः स्यात् –

- कस्मिन् वेदे उपनिषदोऽन्तर्भावः।
- नामवैशिष्ट्यम्।
- गद्यात्मिका उत पद्यात्मिका तथा अध्यायादिविवेचनम्।
- संक्षेपेण मुख्यविषयज्ञानम्।

## ५.४) ईशोपनिषत्

शुक्लयजुर्वेदस्य माध्यन्दिनशाखायाः संहितायां खलु चत्वारिंशद् अध्याया राजन्ते। तत्र अन्तिमाध्यायः एव ईशोपनिषन्नाम्ना प्रसिद्धः। आचार्येण तु काण्वशाखानुसारिपाठस्य भाष्यं व्यरचि। शाखाभेदेन तत्र तत्र पाठभेदा दृश्यन्ते।

### ५.४.१) नामकरणम्

इयम् उपनिषद् **ईशा वास्यमिदं सर्वम्** इत्यादिमन्त्रैः आरभ्यते, तस्मात् अस्या ईशावास्योपनिषद् इत्यपि अभिधा। शुक्लयजुर्वेदस्य अपरं नाम वाजसनेयीसंहिता इत्यतः अस्य उपनिषदः वाजसनेयसंहितोपनिषद् इत्यपि नाम। केवलं संहितोपनिषद् मन्त्रोपनिषत् इत्यपि क्वचिदुच्यते।

### ५.४.२) रीतिः अध्यायादिः च

इयमुपनिषत् पद्यात्मिका। एकः एव अध्यायः। तथा च अष्टादश मन्त्राः सन्ति।

### ५.४.३) विषयः

उपनिषदि अस्याम् ईशस्य निर्मातृत्वादिगुणा आम्नाताः। आत्मनः याथात्म्यप्रकाशनमेव अत्र विषयत्वमवगाहते। अत्र उच्यते हे मनुजाः इदं सर्वम् अनित्यं सत् तेन ईश्वरेण व्याप्तं वर्तते। अनित्यानां त्यागेनैव आत्मा प्राप्यते। कस्यचिद् वा धनम् आकाङ्क्ष्यते। अर्थात् धनाकाङ्क्षां मा कुरु। सर्वमेव तस्य ईशस्य तस्माद् तमेव इच्छतु तेन सर्वावाप्तिः फलतीत्याशयः। अत्र निवृत्तिमार्गगामिनां कृते उपदेशः। निवृत्तिः सन्न्यासः समस्तकर्मभ्यः उपरतिः। तस्माद् एवं मन्त्रः –



**ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम्॥ इति।** (ईश. १)

यः शतं समाः जीवितुमिच्छति तेन कर्म कार्यमेव। न खलु कर्म कुर्वाणः कश्चित् कर्मलेपहीनः भवति। वेदान्ते हि पापपुण्ये वर्जनीये। द्वयोरेव संसारचक्रपतनकारणत्वात् छर्दितान्नवत् हेयत्वम्। तस्मात् यदि त्वं प्रवृत्तिमार्गे तिष्ठन् संसारं भेत्तुमिच्छसि तर्हि ईश्वरशरणं विहाय नास्ति निर्लेपस्य साधनम्। अत्र साधकः प्रवृत्तिमार्गी संसारी गृहस्थ इति।

ये तावत् आत्मानम् अजानन् शरीरं त्यजन्ति ते सर्वे असुर्या इति लोकं गच्छति। असुर्यः इति परमात्माभावात् देवादीनां समेषामेव लोकाः असुर्याः। ते सर्वे एव लोकाः अन्धकारावृताः। तथाहि –

**असुर्या नाम ते लोका अन्धेन तमसावृताः।**
**तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥ इति।** (ईश. ३)

अथ आत्मदर्शिनः विषये उच्यते यत् यः पुरुषः सर्वत्रैव अन्तः बहिश्च आत्मानं पश्यति स कमपि जुगुप्सनीयं निन्दनीयं घृण्यं वा न मनुते। तदा भूतानि सर्वाणि तस्य पुरुषस्य आत्मैव भवति। ब्रह्म किल निरञ्जनम् अपापविद्धं सर्वदुःखरहितमानन्दस्वरूपम्। अथातो न विद्यते तस्य पुरुषस्य मोहः शोकः वा। स सर्वत्र आत्मानमेव पश्येत्। तथाहि –

**यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥ इति।** (ईश. ७)

तद् ब्रह्म स्वप्रकाशकत्वसर्वव्यापित्वसर्वज्ञत्वसर्वनियन्तृत्वादिगुणान्वितम्। प्रजापत्यादीनां कर्म तेनैव विहितम्। तस्मात् केवलकर्मणि निरताः अन्धकारं गच्छति, दैवतादिज्ञानमवलम्ब्य च ये तिष्ठन्ति ते तु अन्धकारं गच्छतितमाम्।

किञ्च वर्तते तावत् अपर एको मन्त्रः। यत्र उच्यते तावत् सत्यस्वरूपस्य आदित्यमण्डलस्थः पुरुषः हिरण्मयेन ज्योतिर्मयेण पात्रेण आवृतो वर्तते। अथ पूषसमक्षं प्रार्थना, हे पूषन् सूर्य अपसारय तत् पात्रं येन मम ब्रह्मोपलब्धिः भवेत्। तथाहि –

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये॥ इति।** (ईश. १५)

## ५.५) केनोपनिषत्

सामवेदस्य जैमिनीयशाखायाः तलबकारब्राह्मणे प्राप्यते उपनिषद् इयं केननाम्नी।

### ५.५.१) नामकरणम्

तलबकारब्राह्मणे अस्या अन्तर्भावात् तलबकारोपनिषत् इत्यपि अभिधा। अत्र केन केनेति आरम्भे बहुधा पाठात् अस्या उपनिषदः केनेति अभिधा।



## ५.५.२) रीतिः अध्यायादिः च

इयं गद्यपद्यात्मिका। अत्र अध्यायाः खण्डनामकाः। तेन अत्र चत्वारः खण्डा विलसन्ति। तत्र प्रथमद्वितीयखण्डौ पद्यात्मकौ। तृतीयतुरीयखण्डौ च गद्यात्मकौ।

## ५.५.३) विषयः

अत्र प्रथमद्वितीययोः खण्डयोः आत्मोपदेशः वर्तते गुरुशिष्यसंवादमाध्यमेन। शिष्यः तावत् स्वस्य प्रश्नान् स्थापयति गुरोः सकाशं यत् केन अस्माभिः सर्वं क्रियते, केन वयं संसारेऽस्मिन् आगताः, इमानि इन्द्रियाणि केन खलु स्वकर्मणि निरतानीति। गुरुस्तु सत्यनिष्ठः शिष्याज्ञानं निवारयति यत् स श्रोत्रस्य श्रोत्रं मनसोऽपि मनः, समेषाम् इन्द्रियाणां स एव इन्द्रः। यः तं जानाति स अमृतत्वं लभते। तथाहि –

**श्रोत्रस्य श्रोत्रं मनसो मनो यद्**
**वाचो ह वाचं स उ प्राणस्य प्राणः।**
**चक्षुषश्चक्षुरतिमुच्य धीराः**
**प्रेत्यास्माल्लोकादमृता भवन्ति॥ इति।** (केन १। २)

शिष्यस्य प्रश्नः पुनः यत् यः इन्द्रियाविषयः, कथं ज्ञानविषयीभवेत् स इति। अथ गुरुणोच्यते यत् तद् ब्रह्म खलु ज्ञानाज्ञानविषयभिन्नम्। वचसा मनसा चक्षुषा वा सर्वैः इन्द्रियैः यन्न विषयीभवति तदेव तद् ब्रह्म। तर्हि कथं भवतीति चेत् **तस्य भासा सर्वमिदं विभाति** इत्यादिश्रुतेः प्रकाशशीलस्यैव प्रकाशे हेतुत्वात्। न हि आत्मानं कोऽपि प्रकाशयितुं शक्यते इति वक्तव्यं सूर्यस्य आत्मप्रकाशे प्रत्यक्षमेव प्रमाणम्। अत्र खलु आत्मतत्त्वज्ञानं दीयते गुरुणा शिष्याय। जीवब्रह्मणः ऐक्ये एव वेदान्तस्य तात्पर्यात्।

अथ शिष्यज्ञानपरिपाकार्थं गुरुः वादं कुरुते यत् यदि त्वया मन्यते यत्तद्ब्रह्म त्वया ज्ञातं तर्हि तद् भ्रमः तव, अल्पमेव ज्ञातं त्वया। अतः अधुनापि ब्रह्म त्वया विचारणीयम्।

किञ्च एवमुच्यते तावद् यत् आत्मज्ञानं यदि अस्मिन् जन्मनि भवति तदा महान् लाभः। नोचेत् पतनं निश्चितम्। तथाहि आत्मज्ञानाभावे जीवः पौनःपुन्येन संसारे आवर्तते, जराव्याधिभयादिदुःखं सहते, न खलु आनन्दात्मकावाप्तिं विहाय शोकपरागः भवितुं शक्यः। तस्माद् गुरुमुखेन श्रुतेरुपदेशः –

**इह चेदवेदीदथ सत्यमस्ति**
**न चेदिहावेदीन्महती विनष्टिः।**
**भूतेषु भूतेषु विचित्य धीराः**
**प्रेत्यास्माल्लोकादमृता भवन्ति॥ इति।** (केन २। ५)

अत्र तृतीयतुरीयाध्याये आख्यानमुखेन श्रुतिः उपदिशति। एवं तावद् आख्यानम् –



कदाचित् देवासुरसंग्रामो जातः। देवाः विजयन्ते स्म। वस्तुतः सर्वकारणात्मकस्य ब्रह्मणः हेतुत्वाद् एव तेषां विजयः, तथापि मोहान्वितास्ते वयं विजयिन इति भावयामासुः। तदा निराकारोऽप्यात्मा स्वात्मानं देवानां ज्ञानप्रचोदनार्थं साकारो बभूव। यक्षरूपं पूज्यरूपं धरत् ब्रह्म प्रेक्ष्य देवाः अग्निं प्राहुः – हे जातवेद विजानीहि सम्यग्रूपेण किमिदं यक्षम् इति। अथ तथेत्युक्त्वा अग्निः जगाम। अग्निं प्रेक्ष्य तद् यक्षमुवाच कोऽसीति। अग्निरपि स्वपरिचयं ददौ। ब्रह्म किं तव सामर्थ्यमिति अवोदत्। अग्निः जगति सर्वं दग्धुं शक्नोमीत्यवदत्। तदा ब्रह्म तृणमेकं स्वीकृत्य एतद् दह इत्युवाच। सर्वशक्त्या अपि दग्धुं न शशाक तृणं सोऽग्निः। स देवान् आगम्य उवाच यक्षं विज्ञातुम् अशकमहम् इति।

अथ वायुं प्रेषयामासुः। वायुरपि तथैव पृष्टः यक्षेण। स चोवाच पृथिव्यां सर्वमहं ग्रहीतुं शक्नोमीति। पूर्ववद् अस्मै अपि तृणग्रहणाय ददौ। किन्तु अयमपि असमर्थोऽभवत्। निराशश्च प्रत्यायातः।

तदा इन्द्रं प्रेषयामासुः। इन्द्रे गते तु सहसा तिरोहितम्। अथ तद् ज्ञातुं तत्र ध्यानमग्नः इन्द्रः आकाशे स्त्रीरूपं ददर्श, सा खलु उमा रुद्रपत्नी हैमवती, ब्रह्मैवैवं दधार। तेन उमैव ब्रह्मविद्या। अथ तां पप्रच्छ इन्द्रः, तस्या एव वचनात् स ब्रह्म अजानत। अत्रैवमाशयो यत् गुरूपसदनं विना न भवति ज्ञानोन्मेषः इति।

## ५.६) कठोपनिषत्

कृष्णयजुर्वेदस्य कठशाखायां प्राप्यते इयमुपनिषत्।

### ५.६.१) नामकरणम्

कठशाखायां पठितत्वात् अस्याः कठेति नाम। काठकोपनिषद् इत्यपि उच्यते सम्प्रदाये।

### ५.६.२) रीतिः अध्यायादिः च

इयं पद्यात्मिका। अत्र द्वौ अध्यायौ स्तः। प्रत्यध्यायं तिस्रः वल्ल्यः लसन्ति।

### ५.६.३) विषयः

कठोपनिषदि खलु आख्यायिकामुखेन ब्रह्मविद्या उपदिष्टा। आख्यायिकायाः विषय एव ब्रह्मविद्यास्तुतिः। **आख्यायिका ब्रह्मविद्यास्तुत्यर्था** इति शङ्करभगवत्पादः तदीये कठोपनिषद्भाष्ये।

कदाचित् वाजश्रवसः विश्वजिन्नामकं यागमाचरितवान्। अस्मिन् यागे सर्वमेव दक्षिणात्वेन दातव्यं भवन्ति। तस्य पुत्रः आसीत् नचिकेताः। स च कुमारः आसीत्। वाजश्रवसेन जीर्णगावः दक्षिणात्वेन दीयन्ते इति दृष्ट्वा नचिकेताः विचारयामास यत् अधमदक्षिणादानेन पितुः पापं स्यात्। तेन च तस्मिन् श्रद्धा आविवेश। अथ स श्रद्धावान् पितरमुवाच पितः मां कस्मै दास्यसीति। बालकस्य वचनमिति मत्वा यदा वाजश्रवसः कर्णं न ददौ तदा वारं वारं नचिकेताः स्ववाक्यावर्तनं चकार। अथ क्षिप्रः सन् स उवाच मृत्यवे त्वा ददामीति। तदैव सहसा किमिदं मया उक्तमिति खिन्नमनाः संवृत्तः वाजश्रवसः। किन्तु नचिकेतास्तु श्रद्धावान् अचिन्तयत् अहं तु शिष्यपरिषदि अनेकेषु उत्तमः मध्यमो वा नाहम् अधमः



कदाचित्। तस्मात् माम् एव दक्षिणात्वेन यच्छति चेत् अस्ति तत्र किमपि विशेषम्। अतः सः अवोचत् पितः भवान् सत्यं पालय, चिन्तां मा कार्षीरिति। तेन नचिकेताः यमसदनं ययौ।

यमसदने तदा यमः नासीत्। तत्र च स रात्रीत्रयमुषितवान्। अथ गृहे प्रत्यायाते यमे गृहपरिषदा तेन सर्वं ज्ञातम्। अनश्नन् खलु अस्ति अतिथिः, अपि च स ब्राह्मणः। गृहे अप्राप्ताहारः अतिथिः साक्षात् अग्नितुल्यः सर्वं च तस्य पुण्यादिकं हरति। तस्मात् पाद्यादिभिः पूजितः तेन नचिकेताः। ततः प्रायश्चित्तार्थमुवाच भो नचिकेतः यतः तिस्रो रात्र्यः अभक्षन् उषितवान्, तेन प्रतिरात्रि एकैकं वरम् इच्छेति। अथ नचिकेताः प्रथमं वरम् इष्टवान् – अहमत्र आगतः इति पिता निश्चयेन उत्कण्ठितः वर्तते। तस्मात् तस्य शान्तिः यथा स्यात् तथा, अपि च भवत्सकाशात् गमनात् परं प्रेतलोकाद् गच्छामि इत्यतः मां पूर्वमिव जानीयात् इति करोत्विति। यमः सन्तुष्टः सन् ईप्सितं वरं ददौ।

ततः स द्वितीयवरम् ऐच्छत् – स्वर्गे लोके हे मृत्यो त्वं नासि। पिपासादिदुःखमपि नास्ति। तस्मात् हे यम तं स्वर्गलोकप्राप्तिसाधनं अग्निं ब्रूहीति। तदा यमः अग्निविद्यां शिक्षापयामास नचिकेतसे। अध्यापितश्च स यथायथं सर्वं प्रोवाच। येन उत्तमशिष्यः अयमिति जानन् हृष्टः मृत्युः अधिकवरं ददौ। स च विविधरत्नमयीं मालामेकां नचिकेतसे समर्प्य उवाच अधुना प्रभृतिः यः अग्निः ते उपदिष्टः स तवैव नाम्ना भविता। तस्य नाचिकेतस इति नाम लोके प्रथितं भवितेति।

अथ तृतीयं वरं वृणुते यत् मनुष्ये प्रेते सति केचन वदन्ति अस्ति केचन नास्तीति वदन्ति। अस्मिन् विषये या विद्या भवति तां मे ब्रूहीति। मृत्युरुवाच – अयं विषयो देवैरपि पृष्टः। किन्तु अयं न खलु सुविज्ञेयः, यतो हि सूक्ष्मः। तस्मात् हे नचिकेतः पृच्छ अन्यं वरम्। अयं च न काङ्क्ष्यः। नचिकेताः श्रद्धालुः तमेव प्रश्नं चकार पुनः। महतः लाभः न खलु सारल्येन भवति। तस्मिन् वर्त्मनि अस्ति इन्द्रियपरिपूरकव्यसनव्रातः। किन्तु ब्रह्मविद्या न खलु विवेकवैराग्यादिहीने अधिकारिणि प्रतिष्ठिता स्यात्। तस्मात् भूमिधननारीपुत्रपौत्रशतवर्षीयजीवितादिप्रलोभनपुरःसरं नचिकेतसं विचारयति यमः। किन्तु तथापि नचिकेताः स्ववचसि एव प्रतिष्ठितः। स खलु अनित्यानां तेषां धर्मं जानाति। तस्मादेव –

**श्वोभावा मर्त्यस्य यदन्तकैतत्**
**सर्वेन्द्रियाणां जरयन्ति तेजः।**
**अपि सर्वं जीवितमल्पमेव**
**तवैव वाहास्तव नृत्यगीते॥ इति।** (कठ १।। १। २६)

एवं निकषप्रस्तरेण यथा सुवर्णस्य याथार्थ्यं परिज्ञायते तथैव नचिकेता अपि विद्याधारणपटुर्वटुरिति बुद्ध्वा मृत्युः तस्मै ब्रह्मविद्यां प्राह।

अस्याम् उपनिषदि ब्रह्मतत्त्वप्रतिष्ठापकमन्त्राः सन्ति बहवः। कणशः तावत् उदाह्रियते ज्ञानाय –

तत्र रथरूपककल्पनात्मको मन्त्रः बहुप्रसिद्धः। तथाहि जीवात्मा एव रथी रथस्वामी, शरीरं तु रथं, बुद्धिः सारथिः, मनः च वल्गा प्रग्रहं वा, तत्र इन्द्रियाणि अश्वाः, तथा च गमनमार्गस्तु



इन्द्रियविषयाः इति कल्पितम्। तेन शरीरेन्द्रियमनःसहित एव आत्मा मनीषिभिः संसारी इत्युच्यते। तेन केवलस्य आत्मनः भोक्तृत्वं निराकृतम्। कथं तर्हि प्राप्यते आत्मत्वप्राप्तिः इति चेत् रथी सत्पुरुषः चेत् सम्भवेत्, नोचेत् दुष्टेन रथिना आत्मावाप्तिः कपोलकल्पितेव। तत्रैवं मन्त्राः –

**आत्मानं रथिनं विद्धि शरीरं रथमेव तु।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥**
**इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥**
**यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा।**
**तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः॥**
**यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा।**
**तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः॥ इति।** (कठ १।। ३। ३६)

## ५.७) प्रश्नोपनिषत्

अथर्ववेदस्य पैप्पलादशाखायामियं प्राप्यते उपनिषत्।

### ५.७.१) नामकरणम्

अत्र गुरोः समीपं प्रश्नपुरःसरं ब्रह्मविद्या आम्नाता। अध्यायानां नाम अपि प्रश्नः इति तेनैव इयं प्रश्नोपनिषदिति।

### ५.७.२) रीतिः अध्यायादिः च

इयं गद्यपद्यात्मिका। तथापि बाहुल्येनात्र गद्यं वर्तते मध्ये मध्ये क्वचित् पद्यम्। अत्र प्रश्ननामकाः अध्यायाः सन्ति षष्ठसंख्यकाः।

### ५.७.३) विषयः

कदाचित् भरद्वाजतनयः सुकेशा, शिबिपुत्रः सत्यकामः, गर्गगोत्रीयः सौर्यायणिः, अश्वलतनयः कौसल्यः, भृगुवंशीयः वैदर्भिः, कत्यतनयः कबन्धी च ब्रह्मजिज्ञासवः समित्पाणयः सन्तः पिप्पलादमहर्षिं ययुः। तान् प्रेक्ष्य वर्षमेकं ब्रह्मचर्येण श्रद्धया तपसा च स्थातुमुपदिदेश। ततः गते वर्षे ते पुनराजग्मुः।

कबन्धी उवाच – हे भगवन् इमाः प्रजाः कुतः प्रजायन्ते इति। तदा पिप्पलादः प्रजापतेः सर्जनमुवाच। तथा च सृष्ट्यादिविषयमुक्त्वा चन्द्रादिलोकगमनसामर्थ्यमुवाच।

अथ वैदर्भिः पप्रच्छ – भगवन् के देवाः प्रजाशरीरान् धरन्तीति, कः वरिष्ठश्चेति। तदा पिप्पलादः आकाशादिषु देवत्वारोपेण तमुपदिदेश। ततः उपदेशक्रमेण प्राणः वरिष्ठ इति आगतम्। तथाहि सर्वमेव प्राणाश्रितम्। तत्रैवं निदर्शनं यत् यथा चक्रनाभौ अराः चक्रधारणशलाकाः प्रतिष्ठिता भवन्तीति।



तदा कौसल्यो बुद्धिमान् विचार्य प्राणस्य अनित्यत्वं पप्रच्छ – भगवन् प्राणः कुतः जायत इति। तथा च तेन प्राणस्य कार्यादिकमपि जिज्ञासितम्। तदा पिप्पलादः सन्तुष्टः सन् आत्मनः प्राणस्य जनिरित्यादिविषयमुपदिदेश। पञ्चविधप्राणानां वर्णनमपि तेन कृतम्। तथा प्राणः एक एव मुख्यः कार्यभेदात् पञ्च। ते हि प्राणापानव्यानोदानसमानाः। प्राणः सम्मुखगमनवान् नासाग्रवर्ती। अपानः अवाग्गमनवान् पाय्वादिस्थानवर्ती। व्यानः सर्वत्रगमनवान् अखिलशरीरवर्ती। उदानः कण्ठस्थानीयः ऊर्ध्वगमनवान् उत्क्रमणवायुः। समानश्च शरीरमध्यगताशितपीतान्नादिसमीकरणकरः वायुः।

एतावता अनित्यस्य संसारस्यालोचनमासीत्। अथ सौर्यायणिनः प्रश्नात् परविद्यायाः साधनादिकं वदति। ततः सत्यकामेन प्रणवसाधनं पृष्टम्। पिप्पलादेन परापरब्रह्मणोः प्रणवत्वप्रतिस्थापनपुरःसरं प्रणवं व्याख्ययामास। एवमन्त्ये सुकेशा उवाच यत् कोसलदेशीयराजकुमारेण स पृष्ट आसीद्यत् स षोडशकलं पुरुषं वेत्ति न वेति। तदा अजानता तेन राजपुत्रः प्रेषितः। अधुना भगवते पुरुषः कोऽसौ इति प्रश्नः।

अथ पिप्पलादः पुरुषं वेदयति। पुरे देहे शेते इति पुरुषः। तस्मात् पुरुषः अस्मिन् देहाकाशे एव विराजते। स खलु आत्मा। तत्र प्राणादीनां भवति पुरुषे एव लयः। ते नामरूपात्मके प्रणष्टा भवन्ति, पुरुष एव विराजते। यः पुरुषं जानीयात् स मृत्युं तरति **तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय** (श्वेताश्वेतर. ३। ८) इत्यादिश्रुतेः। तस्मादेव आम्नातम् –

**अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः।**
**तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति॥ इति।** (प्रश्न. ६। ६)

एवमस्याम् उपनिषदि आदौ आत्मभिन्नपदार्थवचनपुरःसरं तेषां च अपवादेन आत्मतत्त्वं प्रतिष्ठापितम्।

## ५.८) मुण्डकोपनिषत्

अथर्ववेदीया इयम् उपनिषत्।

### ५.८.१) नामकरणम्

मुण्डकाभिधैरध्यायैर्विभक्तत्वात् अस्या एवं नाम।

### ५.८.२) रीतिः अध्यायादिः च

पद्यात्मिकेयम् उपनिषत्। मुण्डकनामकेन अध्यायत्रयेण विराजते। प्रतिमुण्डकं च खण्डद्वयम् अस्ति।



### ५.८.३) विषयः

अत्र ब्रह्मविद्यापरम्परा निर्देशिता अस्ति। तथाहि ब्रह्मा आदौ विद्यामुपदिदेश अथर्वणे। अथर्वा अङ्गिराय, अङ्गिरा भारद्वाजसत्यवहाय, सत्यवहश्च अङ्गिरसे उपदिदेश। अत्र परापरविद्यायाः सङ्कलनं वर्तते। तथाहि –

**तत्रापरा ऋग्वेदो यजुर्वेदः सामदेवोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते॥ इति।** (मुण्डक. १। १। ५)

अस्यामुपनिषदि बहवः विषयाः आबहोः कालात् विचारपथे मनीषिणां भवन्ति। बहुश्रुताः मन्त्रा अपि अत्र प्राप्यन्ते। यथा **सत्यमेव जयते** इति। तस्य सम्पूर्णशरीरं तावत् –

**सत्यमेव जयते नानृतं**
**सत्येन पन्था विततो देवयानः।**
**येनाक्रमन्त्यृषयो ह्याप्तकामा**
**यत्र तत्सत्यस्य परमं निधानम्॥ इति।** (मुण्डक. ३। १। ६)

अस्यां तृतीयमुण्डके प्रथमखण्डे एकस्मिन्नेव वृक्षे तिष्ठन्तौ पक्षिणौ वर्णितौ। तयोरेकः स्वादु फलं भुङ्क्ते, अपरश्च अभक्षन् केवलद्रष्टृरूपेण तिष्ठति। आदिमः जीवात्मा, अपरः परमात्मा। स खलु कर्म कुर्वन् पापपुण्यावृतः संसारे पतति। अपरः असङ्गः निर्विकारः। किन्तु यदा संसारानलसंतप्तः सन् स स्वात्मनि नियोजयति निरतिशयानन्दप्रापणहेतोः तदैव वीतशोकः भवति।

अपिच, एवं रूपकमुपस्थापितं यत् प्रणव एव धनुः शरः बाणो वा जीवात्मा, लक्ष्यं तु परमात्मा परब्रह्म, प्रमादहीनः संयतपुरुषः एव तस्य भेदने क्षम इति। ततः शरः यथा लक्ष्ये तन्मयः तद्गतः भवति तथैव जीवात्मापि परमात्मनि। तथाहि –

**प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।**
**अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्॥ इति।** (मुण्डक. २। २। ४)

## ५.९) माण्डूक्योपनिषत्

अथर्ववेदीया इयम् उपनिषत्।

### ५.९.१) नामकरणम्

न विशेषः।

### ५.९.२) रीतिः अध्यायादिः च

गद्यात्मिका इयम् उपनिषत्। अत्र च द्वादश कण्डिकाः सन्ति।



### ५.९.३) विषयः

अस्यां जीवस्य अवस्थात्रयम् उच्यते। जाग्रत्, स्वप्नः, सुषुप्तिः चेति अवस्थात्रयम्। अवस्थासु सन्ति भिन्नानि शरीराणि। शीर्यते इति शरीरम्। तथाहि जाग्रति स्थूलः, सूक्ष्मं स्वप्ने, कारणं सुषुप्तौ। स्थूलशरीरोऽपि व्यष्टिसमष्टिभेदेन द्विधा। व्यष्टिस्थूलशरीराभिमानी जीवः विश्वः। समष्टिस्थूलशरीराभिमानी जीवः वैश्वानरः। व्यष्टिसूक्ष्मशरीराभिमानी जीवः तैजसः। समष्टिसूक्ष्मशरीराभिमानी जीवः हिरण्यगर्भः। व्यष्टिकारणशरीराभिमानी जीवः प्राज्ञः। समष्टिकारणशरीराभिमानी जीवः ईश्वरः। एतेषां वेदान्तनये प्रौढग्रन्थेषु आलोचनाबाहुल्यं तत्र तत्र दृश्यते। विद्यारण्यमुनिकृतौ पञ्चदश्याम् अस्मिन् विषये वर्तते महाती आलोचना। इयमुपनिषदेव विषयस्य तस्य सूतिः। यद्यपि अस्ति इयं लघुकाया तथापि विषयगाम्भीर्यं गौडपादाचार्यकृतमाण्डूक्यकारिका तस्याश्च शङ्करभगवत्पादैः कृतं भाष्यं स्पष्टं प्रकाशते।

एतेषाम् अवस्थात्रयवर्णनान्तरं समेषां न्यक्करणपुरःसरं तुरीयं ब्रह्म प्रतिपादयति। तथाहि –

**नान्तःप्रज्ञं न बहिष्प्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्टमव्यवहार्यमग्राह्यम–लक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते। स आत्मा। स विज्ञेयः॥ इति।** (माण्डूक्य. ७)

प्रतिवेदं महावाक्यमेकं स्वीकृतम्। तदेव महावाक्यं भवति यत्र जीवब्रह्मणः ऐक्यं सुस्पष्टं प्रकाशितम् इति। अस्यां तु अथर्ववेदीयायामुपनिषदि अथर्ववेदीयमहावाक्यम् अस्ति – **अयमात्मा ब्रह्म** (माण्डूक्य. २) इति। तेन उपनिषत्सु अस्याः स्थानमवश्यमेव आन्यतम्यं भजते।

## ५.१०) तैत्तिरीयोपनिषत्

कृष्णयजुर्वेदीयतैत्तिरीयशाखायाः तैत्तिरीयारण्यके प्राप्यते इयम् उपनिषत्।

### ५.१०.१) नामकरणम्

तैत्तिरीयारण्यकस्य अंशत्वाद् अस्याः तैत्तिरीयेति नाम।

### ५.१०.२) रीतिः अध्यायादिः च

गद्यात्मिकायामस्याम् उपनिषदि क्वचित् श्लोकः प्राप्यते। अस्याम् अध्यायः वल्लीति उच्यते। तथा ह्यत्र तिस्रो वल्ल्यः सन्ति। तासां नामानि यथाक्रमं – शीक्षावल्ली, ब्रह्मानन्दवल्ली, भृगुवल्ली चेति। वल्ल्योऽपि अनुवाकेन विभक्ताः। तत्र शीक्षायां द्वादश, ब्रह्मानन्दे नव, भृगौ च दश अनुवाकाः सन्ति।



### ५.१०.३) विषयः

अस्यामादौ वर्णानामुच्चारणविषयः आम्नातः। शिक्षाग्रहणं कथं स्यात् ब्रह्मचर्यादिपालनपूर्वकं तदत्र निबद्धम्। सदा सदाचाराचरणनिष्टतां शिक्षापयति। अध्ययनसमापनान्ते समावर्तनकाले आचार्यस्य शिष्येभ्यः उपदेशः नितरां वैदिकनिष्ठाया धारकतया विराजते। तथाहि –

**वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति – सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्॥ इति।** (तैत्तिरीय. १। ११। १)

मातृपित्रादीन् देवबुद्ध्या पूजनमित्यादिसदाचारशिक्षणमत्र उपन्यस्तम्। तेन **मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव।** (तैत्तिरीय. १। ११। २) इत्यादिमन्त्रा अत्रत्या एव।

अस्यामेव द्वितीयवल्ल्यां **सह नाववतु** (तैत्तिरीय. २। १। १)इति **शन्नो मित्रः** (तैत्तिरीय. २। १। २)इति च शान्तिमन्त्रौ प्राप्येते। सच्चिदानन्दस्वरूपस्य यत् श्रुतिप्रमाणं तदस्याम् उपनिषदि वर्तते यच्च बहूद्धृतमपि – **सत्यं ज्ञानमनन्तं ब्रह्म** (तैत्तिरीय. २। १। ३) इति। अत्र पञ्चभूतानामपि सृष्टितत्त्वमुपन्यस्तम्। येन आकाशादि क्रमेण सृष्टिः ज्ञायते। सृष्टिः किल ब्रह्मणः एव। तथाहि –

**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। इत्यादिः।** (तैत्तिरीय. २। १। ३)

अत्रैव ब्रह्मणः स्वरूपविषये विश्रुतानि श्रुतिपदानि वर्तन्ते। **यतो वाचो निवर्तन्ते** (तैत्तिरीय. २। ४) इत्यादि तत्र निदर्शनम्।

अथ भृगुवल्ल्यां वेदान्तप्रसिद्धकोशानां वर्णनमस्ति। यद्यपि श्रुतौ कोशशब्दप्रयोगः नास्ति तथापि तेषां कोशवदाच्छादकत्वात् कोशत्वमिति सम्प्रदाये। पञ्च कोशाः अन्नमयः, प्राणमयः, मनोमयः, विज्ञानमयः, आनन्दमयश्चेति। एतेषां विषये सदानन्दयोगीन्द्रविरचिते वेदान्तसारे सुष्ठु निगदितं वर्तते। पञ्चदश्यामपि अस्मिन् विषये विस्तरेण आलोचना विहिता।

## ५.११) ऐतरेयोपनिषत्

ऋग्वेदीयस्य ऐतरेयब्राह्मणस्थस्य ऐतरेयारण्यकस्य द्वितीयारण्यके वर्तते इयम् उपनिषत्।

### ५.११.१) नामकरणम्

ऐतरेयारण्यकस्य अंशत्वाद् अस्य ऐतरेयेति नाम।



### ५.११.२) रीतिः अध्यायादिः च

गद्यात्मिकेयम् उपनिषत्। अध्यायत्रयोपेता च। आदिमाध्याये खण्डत्रयं वर्तते। शेषाध्यायौ एकखण्डात्मकौ च स्तः।

### ५.११.३) विषयः

अस्यामेव ऋग्वेदान्तर्गतमहावाक्यं यत्सम्प्रदाये स्वीकृतं तदस्ति। तद्धि – **प्रज्ञानं ब्रह्म** (ऐतरेय. ३। १। ३) इति।

अपरविद्याज्ञानान्तरं तु कर्मणः असत्त्वात् पराविद्यायां प्रवेशनीयम्। अथ अत्र परगतिविषयः श्रुतिरुपदिष्टा। तत्र वामदेव इति ऋषिः श्रूयते यः खलु मातृगर्भे एव आत्मस्वरूपज्ञानं प्राप्य जनिं लेभे।



## पाठगतप्रश्नाः-२

७१. ईशोपनिषत् वाजसनेयसंहितायां कुत्र अस्ति।

७२. कः लोकः ईशोपनिषदि वर्णितः इति प्राप्यते।

७३. कति मन्त्राः उपलभ्यन्ते ईशोपनिषदि।

७४. कः यागः वाजश्रवसेन आचरितः।

७५. रात्रीणां कति यमगृहे नचिकेतसा यापितम्।

७६. रथरूपकम् अत्र प्राप्यते –

(क) मुण्डके (ख) काठके (ग)तैत्तिरीये

७७. केन ऋषिणा प्रश्नोपनिषदि कौसल्यादयः उपदिष्टाः।

७८. अतिथिदेवो भव इति मन्त्रः प्राप्यते कुत्र।

७९. के पञ्चकोशाः।

८०. ईशोपनिषत् कीदृशी उपनिषत्, मन्त्रोपनिषत् वा आरण्यकोपनिषत् वा।

८१. शङ्कराचार्येण कस्याः शाखायाः ईशोपनिषन्मन्त्राणां भाष्यं व्यरचि।

८२. अथर्ववेदीयं महावाक्यं किम्।

८३. सत्यमेव जयते इति प्राप्यते –

(क) तैत्तिरीये (ख) ईशे (ग) न अत्रत्ये कुत्रचित्

८४. कठोपनिषदः आख्यायिकां संक्षिपत।

८५. स्तम्भयोर्मेलनं कुरुत –

| कस्तम्भः | खस्तम्भः |
|---|---|



| | |
|---|---|
| तैत्तिरीयः | हिरण्मयेन पात्रेण |
| नचिकेताः | सह नाववतु |
| ईशोपनिषत् | माण्डूक्योपनिषत् |
| अवस्थात्रयम् | प्रज्ञानं ब्रह्म |
| ऋग्वेदः | वाजश्रवसः |

## ५.१२) छान्दोग्योपनिषत्

सामवेदीये छान्दोग्यब्राह्मणे वर्तते इयम् उपनिषत्।

### ५.१२.१) नामकरणम्

छान्दोग्यब्राह्मणान्तर्गतत्वात् अस्या एवं नाम।

### ५.१२.२) रीतिः अध्यायादिः च

गद्यात्मिकेयम्। अस्याम् अष्टौ अध्यायाः सन्ति। अध्यायाश्च खण्डैः विभक्ताः।

### ५.१२.३) विषयः

अस्यां सामवेदगतमहावाक्यं सम्प्रदायस्वीकृतं **तत्त्वमसि** इति वर्तते। अस्य तत्त्वमसीति महावाक्यस्य वेदान्ते अस्ति महान् विचारः। प्रायः सर्वस्मिन्नेव वेदान्तविषयकग्रन्थे अस्ति अस्य विषयत्वेन ग्रहणम्। पञ्चदश्यां यद्यपि महावाक्यविषयकाध्यायः पृथग् अस्ति, तथापि तत्त्वमसि महावाक्यस्य विचारः प्रथमाध्यायेऽपि उपन्यस्तः। वेदान्तसारग्रन्थेऽपि अस्य प्रवर्तनं दृश्यते।

तत्र तावत् अस्यां षष्ठे अध्याये प्रपाठके वा उद्दालकः आरुणिरिति अपरनामधेयः स्वपुत्रं श्वेतकेतुं तस्यात्मज्ञानोन्मेषाय वदति **ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो** इति। अस्य वाक्यस्य लक्षणादिविचारपूर्वकं वेदान्ते तत्र तत्र ग्रन्थेषु सन्ति प्रकरणानि।

छान्दोग्यस्य अपरः बहुचर्चितविषयः उपासना इति। **उपासनानि सगुणब्रह्मविषयकमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि** इति वेदान्तसारे सदानन्दयोगीन्द्रेण उपासना लक्षिता। तानि च शाण्डिल्यविद्यादीनि छान्दोग्ये प्राप्यन्ते कानिचित्। अस्य तृतीयाध्यायस्य चतुर्दशखण्डमेव **सर्वं खल्विदं ब्रह्म** इत्यादिरूपेण शाण्डिल्यविद्या इत्युच्यते। अस्या उपनिषदः प्रारम्भः एव ओङ्कारोपाना इत्यनेन भवति। एवं तत्र बहूनि उपासनप्रकरणानि सन्ति। तत्र कानिचन उद्गीथोपासना, अक्षिपुरुषोपासना, सूर्योपासना, द्वारपालोपासना, प्राणोपाना इत्यादीनि।



अपि च अस्यामुपनिषदि बह्व्यः आख्यायिकाः प्राप्यन्ते। तासु जाबालसत्यकामस्य आख्यायिका समधिकप्रसिद्धा। तां विहाय प्रवाहणजैवल्याख्यायिका, जानश्रुतिरैक्क्वाख्यायिका वर्तते। संवादपुरःसरः अपि ब्रह्मविद्या अत्र प्रकाशिता। तत्र नारदसनत्कुमारसंवादादिकं प्रसिद्धम्।

## ५.१३) बृहदारण्यकोपनिषत्

शुक्लयजुर्वेदस्य काण्वशाखीये तथा माध्यन्दिनशाखीये शतपथब्राह्मणान्तिमस्य आरण्यकस्य अन्तिमभागे वर्तते उपनिषदियम्। शाखाभेदेन क्वचित् पाठभेदः वर्तते।

### ५.१३.१) नामकरणम्

बृहदित्येव अस्या नाम्नि सार्थक्यं भजते। अनेन अस्या उपनिषत्सु बृहत्त्वं ज्ञायते। उपनिषत्सु बृहत्त्वात् आरण्यकांशत्वाद् अस्या बृहदारण्यकेति नाम।

### ५.१३.२) रीतिः अध्यायादिः च

इयं प्रायः गद्यात्मिका, मध्ये क्वचित् पद्यात्मकाः श्लोका भवन्ति। अस्याः काण्डत्रयम्। तथाहि मधुकाण्डं, याज्ञवल्क्यकाण्डं तथा खिलकाण्डम्। प्रतिकाण्डम् अध्यायद्वयम्। तेन षडध्यायीयम् उपनिषत्। अध्यायाश्च ब्राह्मणैः विभक्ताः।

### ५.१३.३) विषयः

उपनिषद्यस्यां प्रथमाध्यायस्य चतुर्थे ब्राह्मणे यजुर्वेदीयमहावाक्यं **अहं ब्रह्मास्मि** इत्युपलभ्यते।

कर्मानुष्ठानकारी पुरुषः न सहसा भवति शक्तः निर्गुणविषयकज्ञानलाभं गन्तुम्। तस्मात् आदौ अत्र सगुणविषयकोपासनानि विहितानि। अत्राशयो यत् उपासनया अध्यारोपबलेन तत्त्वावगमः। अध्यारोपः नाम वस्तुनि अवस्तुनः आरोपः। अपवादः नाम आरोपितस्य निराकरणम्। यथा प्रसिद्धोदाहरणम् – अन्धकारादिकारणात् रज्जौ सर्पम् आरोपयति पुरुषः। किन्तु सम्यक्प्रकाशादिना भ्रमनिरसने सति सर्पत्वारोपस्य अपवादपूर्वकं स जानाति यत् इयं रज्जुरिति। तथैव ब्रह्मणि जगत् इदम् अध्यस्तम्। अज्ञाननिरसनेन जगतः बाधे सति ब्रह्मोपलब्धिः भवति। तमेव अध्यारोपमवलम्ब्य प्रपञ्चस्य उत्पत्तिः, विस्तारः, उत्कर्षरूपः हिरण्यगर्भः प्रदर्शितः। एते सर्वे अनित्याः। **नेति नेति** (बृहत्. २। ३। ६) इति विचारेण असंसारिणः असङ्गस्य आत्मनः तेभ्यः पृथक्करणं निदर्शितम्।

प्रथमाध्याये पञ्चमब्राह्मणे सप्तान्नप्रकरणे जगतः सापेक्षत्वं, सातिशयत्वं निदर्शितम्। तत् तु आत्मनः निरतिशयत्वादिरूपस्य बोधनायैव आम्नातम्। अत्रैव षष्ठे ब्राह्मणे प्रपञ्चस्य नामरूपात्मकस्य अनात्मत्वमाम्नातम्। एवमुच्यते –

**अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।**
**आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥ इति।**

तेन सत्ता प्रकाशकत्वमानन्दात्मकं च ब्रह्मरूपम्। तस्मात् सच्चिदानन्दमिति। नामरूपात्मकस्य कस्यचिद् अपि न नित्यता लोके। एवंकारेण अध्यारोपापवादाभ्याम् अनित्येषु वैराग्यं विधाय मुमुक्षुः **आत्मेत्येवोपासीत्** (बृहत्. १। ४। ७) इति।

अत्रैव बहुप्रसिद्धः जनकयाज्ञवल्क्यसंवादः याज्ञवल्क्यमैत्रेयीसंवादः च वर्तते। याज्ञवल्क्यमैत्रेयीसंवादश्च विख्यातः। मैत्रेयीं प्रति तत्पतेः याज्ञवल्क्यस्य उपदेशः चरमतत्त्वं व्यनक्ति। न खलु जगति प्रियं किञ्चद् वर्तते। आत्मा एव एकः प्रियः। आत्मैव सर्वत्र अनुस्यूतः। तस्यैव प्रियत्वात् सर्वं प्रियं भवति। तथाहि –

**न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति। इति।**
(बृहत्. २। ४। ५)

**पूर्णमदः पूर्णमिदम्** (बृहत्. ५। १। १) इति बहुश्रुतः शान्ति मन्त्रः अस्यामेव उपनिषदि प्राप्यते।

## श्वेताश्वेतरोपनिषत्
## कौषीतक्युपनिषच्च

उपनिषद्द्वयमिदं दशभिन्नाष्टोत्तरशतसंख्यकेभ्यः मुख्यम्। तत्र श्वेताश्वतरस्य भाष्यमशाङ्करमिति सम्प्रदाये। केचन तु शाङ्करमिति।

## ५.१४) श्वेताश्वेतरोपनिषत्

श्वेताश्वेतरः कृष्णयजुर्वेदीयः। अस्मिन् षड् अध्यायाः सन्ति। अत्रत्यानां मन्त्राणां प्रसिद्धाः मन्त्राः –

**सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥**
**त्वं स्त्री त्वं पुमानसि**
**त्वं कुमार उत वा कुमारी।**
**त्वं जीर्णो दण्डेन वञ्चसि**
**त्वं जातो भवसि विश्वतोमुखः॥**
**अजामेकां लोहितकृष्णशुक्लां**
**बह्वीः प्रजाः सृजमानां सरूपाः।**
**अजो ह्येको जुषमाणोऽनुशेते**
**जहात्येनां भुक्तभोगामजोऽन्यः॥**



श्वेताश्वेतरे बहवः मन्त्राः उपनिषदन्तरात् संहिताभागात् वा स्वीकृता वर्तन्ते।

## ५.१५) कौषीतक्युपनिषत्

इयमुपनिषत् ऋग्वेदस्य कौषीतकिब्राह्मणांशत्वेन लभ्यते। अत्र चत्वारः अध्यायाः सन्ति।

अत्र गर्गप्रपौत्रेण चित्रेण गौतमस्य उद्दालकस्य संवादः वर्तते। उपासनानुष्ठानपुरःसरं निर्गुणावाप्तिरत्रापि विहिता। अपि च चित्रेण तत्रैवमुक्तं यत् केनचित् साधकेन समं विचित्रपर्यङ्कोपविष्टस्य प्रजापतेः ब्रह्मणः संवादो जातः इत्यस्मात् या विद्या तदा ब्रह्मणा दत्ता सा पर्यङ्कविद्या इति ख्याता।

अपि च अस्यां गार्ग्यऋषिणा सह काशीश्वरस्य अजातशत्रोः संवादः प्राप्यते।



## पाठान्तप्रश्नाः

१. सामवेदीये कस्मिन् ब्राह्मणे छान्दोग्योपनिषत् प्राप्यते।

२. बृहदारण्यकस्य नाम्नि सार्थक्यं किम्।

३. याज्ञवल्क्यमैत्रेयीसंवादः कुत्र वर्तते।

४. का नाम उपासना।

५. किं नाम महावाक्यम्।

६. सामवेदस्य महावाक्यं किम्।

७. अयं कौषीतक्युनिषदि अस्ति –

(क) याज्ञवल्क्यः (ख) चित्रः (ग) नारदः

८. बृहदारण्यकस्य काण्डसंख्या कति। नामानि च वदत।

९. विद्यारण्यमुनिविरचित ग्रन्थः कः।

१०. पूर्णमदः पूर्णमिदमिति शान्तिमन्त्रः कस्यामुपनिषदि लभ्यते।

११. वेदान्तस्य कः विषयः।

१२. कस्तावत् तैजसः।

१३. कौषीतक्युपनिषदः भाष्यं शङ्कराचार्येण कृतमुत न।

१४. इयं न मुख्या उपनिषत् –

(क) कैबल्योपनिषत् (ख) तैत्तिरीयोपनिषत् (ग) ईशावास्योपनिषत्

१५. बृहदारण्यकस्य विषयसंक्षेपः कार्यः।

॥ इति पञ्चमः पाठः ॥

६

# प्रस्थानत्रये स्मृतिन्यायप्रस्थाने

## प्रस्तावना

प्रतिष्ठन्ते वेदान्ताः येषु इति वा, यैः इति वा श्रुतिस्मृतिन्यायरूपाणि शास्त्राणि वेदान्तसम्प्रदाये प्रस्थानान्युच्यन्ते। एवञ्च ब्रह्मबोधकानां शब्दप्रमाणानां वेदान्तानां प्रतिष्ठा यत्र भवति, येन च भवति तदेव प्रस्थानम्। ध्वन्यालोकग्रन्थे लोचनकारेण अभिनवगुप्तपादेन प्रस्थानशब्दस्य निर्वचनं प्रदर्शितं यथा "प्रतिष्ठन्ते परम्परया व्यवहरन्ति येन मार्गेण तत्प्रस्थानम्। "

ननु वेदान्ताः इति उपनिषच्छ्रुतय एवोच्यन्ते , तत्कथं वेदान्तानां श्रुतिप्रतिष्ठा स्यात्, स्वस्य स्वस्मिन् प्रतिष्ठाभावात् इति चेदुच्यते- आत्मस्वरूपस्य ब्रह्मणो बोधकानि शब्दप्रमाणानि तत्त्वमसीत्यादीनि वाक्यानि वेदान्तशब्दवाच्यानि भवन्ति। तानि हि स्वयं परमप्रमाणभूतान्यपि न खलु मन्दमतीनां दृष्टौ प्रतिष्ठावन्ति सन्ति। उपनिषच्छ्रुतिषु ब्रह्मबोधकानि वाक्यानि आख्यायिकायुक्तिदृष्टान्तार्थवादिभिः भिन्नभिन्नप्रबोधनप्रक्रियाभिश्च लब्धप्रतिष्ठानि। तस्मात् वेदान्ताः उपनिषत्सु प्रतिष्ठां लभन्ते इत्येतद्युज्यते।

उपनिषत्सारसङ्ग्ररूपासु गीतासु, उपनिषद्वाक्यानामेव युक्तियुक्तं विचाराय विरचितेषु ब्रह्मसूत्रेषु च वेदान्तानां प्रतिष्ठा सुविदितैव।

अथवा भाष्यतद्व्याख्यानवादग्रन्थप्रकरणग्रन्थादिरूपस्य वेदान्तशास्त्रस्य प्रतिष्ठा यत्र तत्प्रस्थानम्। श्रुतिस्मृतिन्यायेषु हि भाष्यादिवेदान्तशास्त्रं प्रतिष्ठितम्।

उपनिषद्गीताब्रह्मसूत्ररूपप्रस्थानत्रयस्य समुपबृंहणरूपं हि अद्वैतवेदान्तशास्त्रम्। प्रस्थानत्रयं हि आत्मस्वरूपनिर्धारणे परमप्रमाणतां भजते। तदत्र न्यायप्रस्थानं स्मृतिप्रस्थानं च ग्रन्थशरीरविवेचनादिपुरस्सरं विचार्यते।



## उद्देश्यानि

इमं पाठं पठित्वा

- न्यायप्रस्थानं किमिति विषये ज्ञानं भवति।
- न्यायप्रस्थाने कस्य ग्रहणं कर्तव्यम् इति बोधो भविष्यति।
- ब्रह्मसूत्रे ब्रह्म किम् इति ज्ञानं भवति।



- आत्मस्वरूपनिर्धारणं कथं करणीयम् इति बोधो भविष्यति।
- इतरदर्शनखण्डनपुरःसरम् अद्वैतवेदान्तशास्त्रस्य प्रतिष्ठा भवति इति ज्ञास्यति।
- जगतः उत्पत्तिः लयश्च कस्मात् भवति इति ज्ञानं भवेत्।
- ब्रह्मैव सत्यं वस्तु इति श्रुतिभिः प्रतिपाद्यते तद् अवगमिष्यति।
- स्मृतिप्रस्थानस्य परिचयं लभेत।
- गीतानुसारेण कीदृशं कर्म कर्तव्यम् इति विवेकः स्यात्।
- गीतानुसारेण श्रद्धाभेदान् ज्ञास्यति।
- त्रयाणाम् अपि गुणानां कार्यम् अवगच्छेत्।
- आत्मतत्त्वं ज्ञास्यति।
- धर्माधर्मविषययोः ज्ञानम् लभेत।
- सन्न्यासस्य स्वरूपं ज्ञास्यति।
- गीतायाः सारः ज्ञास्यति।
- मोक्षप्राप्तये उपायान् जानीयात्।
- ब्रह्मणः स्वरूपनिर्णयं कर्तुं प्रभवेत्।

## ६.१) न्यायप्रस्थानम्

श्रीबादरायणव्यासकृतं ब्रह्मसूत्रमेव न्यायप्रस्थानं वेदान्तशास्त्रस्य। शारीरकस्य जीवात्मनः यत् स्वरूपम् उपनिषत्सु श्रुतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्म तदत्र प्रस्थाने उपनिषद्वाक्यानि एव विषयीकृत्य विचार्यते। तथा चोक्तं भगवत्पूज्यपादैः भाष्यकारैः सूत्रभाष्ये "वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्। वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते"। (जन्माद्यधिकरणभाष्ये) ब्रह्मसूत्रस्य चत्वारः अध्यायाः सन्ति। ते च अध्यायाः भवन्ति-

१. समन्वयाध्यायः
२. अविरोधाध्यायः
३. साधनाध्यायः
४. फलाध्यायः

प्रति अध्यायं चत्वारः पादाः सन्ति। एवञ्च सम्पूर्णग्रन्थस्य षोडशपादाः सन्ति। प्रतिपादं विषयभेदेन अधिकरणानि भवन्ति। अधिकरणस्य लक्षणं भवति-

"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।

सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्। " इति

सर्वाणि आहत्य पञ्चनवत्यधिकशतम् (१९५) अधिकरणानि विद्यन्ते। समग्रग्रन्थे सूत्राणि च पञ्चपञ्चाशदधिकपञ्चशतं (५५५) सन्ति।



## ६.१.१) अध्यायानां परिचयः

ब्रह्मसूत्रे प्रथमाध्याये प्रथमपादे प्रसिद्धो विषयो भवति चतुःसूत्री। तत्र चतुर्णां सूत्राणां चर्चा कृता अस्ति। सूत्रस्य लक्षणम्

"अल्पाक्षरमसंदिग्धं सारद्विश्वतोमुखम्।

अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥"

तानि च चत्वारि सूत्राणि भवन्ति-

- अथातो ब्रह्मजिज्ञासा।
- जन्माद्यस्य यतः।
- शास्त्रयोनित्वात्।
- तत्तु समन्वयात्।

सूत्रे अस्मिन् ब्रह्म जिज्ञास्यम् इति अर्थः प्रतिपादितः। अथ-शब्दस्तु आनन्तयार्थः इत्यस्मिन् अर्थे गृहीतः। अत-शब्दस्तु हेत्वर्थे गृहीतः। ब्रह्मजिज्ञासा इत्यत्र ब्रह्मणः जिज्ञासा। ब्रह्मणः इति कर्मणि षष्ठी, न तु शेषे षष्ठी।

**जन्माद्यस्य यतः** इत्यस्मिन सूत्रे ब्रह्मणः लक्षणं प्रतिपादितम् अस्ति। लक्षणं तु असाधारणधर्मवचनम् इति। ब्रह्मणः द्विविधं लक्षणम् उक्तम् अस्ति।

- **स्वरूपलक्षणम्-** स्वरूपं सत् व्यावर्तकम् इति स्वरूपलक्षणम्। यथा "सत्यं ज्ञानमनन्तं ब्रह्म", "विज्ञानमानन्दं ब्रह्म", "सच्चिदानन्दं ब्रह्म" इति
- **तटस्थलक्षणम्-** यावल्लक्ष्यकालमनवस्थितत्वे सति यत् व्यावर्तकं तदेव तटस्थलक्षणम्। ब्रह्मणः तटस्थलक्षणम् अस्ति जगज्जन्मस्थितिलयकारणत्वम् इति। तथा हि श्रुतिप्रमाणम् अस्ति "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यं प्रयन्त्यभिसंविशन्ति" (तैत्तिरीयोपनिषद् ३. १. १)

  यतः इति पदेन कारणनिर्देशः कृतो भवति। यतः ब्रह्मणः जगतः उत्पत्तिः दर्शिता अस्ति। जगत् तु नामरूपाभ्यां व्याकृतम् अस्ति।

**"शास्त्रयोनित्वात्"** इत्यादिना सूत्रेण ब्रह्मणः शास्त्रप्रमाणकत्वं ज्ञायते। अत्र योनि-शब्दस्य भगवता भाष्यकारेण द्विविधा व्याख्या प्रदर्शिता अस्ति। तद्यथा-

- शास्त्रं योनि प्रमाणं यस्मिन् तस्य भावः शास्त्रयोनित्वम् इति, तस्माद् शास्त्रयोनित्वात्। यथोक्तं "**यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यं प्रयन्त्यभिसंविशन्ति**" इति। तस्मात् सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम्।
- शास्त्रस्य योनिः कारणं शास्त्रयोनिः तस्य भावः शास्त्रयोनित्वम्, तस्मात् शास्त्रयोनित्वात्। यथा भगवती श्रुतिरपि आह "**अस्य महतो भूतस्य निःश्वासितमेतद् यदृग्वेदः**" (बृहद् ४-५-११) इत्यादिश्रुतेः। तस्य महतो भूतस्य निरतिशयं, सर्वज्ञत्वं, सर्वशक्तिमत्त्वं चेति।



**"तत्तु समन्वयात्"** इत्यादिना सूत्रेण मोक्षस्वरूपं प्रतिपाद्यते। तत्तु समन्वयात् इति अस्य सूत्रस्य व्याख्यां कुर्वन् भाष्यकारः शङ्कराचार्यः लिखति- "ब्रह्मभावश्च" मोक्षः। अथवा नित्यशुद्धबुद्धब्रह्मस्वरूपवान् मोक्षः। तद् ब्रह्म सर्वज्ञं सर्वशक्तिमद्। "ब्रह्मविद् ब्रह्मैव भवति" इत्यादिविधानेषु सत्सु कोऽसौ आत्मा। को मोक्षः। किं ब्रह्म। इत्याकांक्षायां सर्वे वेदान्ताः उपयुक्ताः। नित्यः सर्वज्ञः सर्वगतो नित्यतृप्तो नित्य-शुद्ध-बुद्ध-मुक्त-स्वभावो विज्ञानमानन्दं ब्रह्म। इदं ब्रह्म तु पारमार्थिकं, कूटस्थनित्यं, निरवयम्, स्वयंज्योतिः स्वभावम्। तदेतत् अशरीरत्वं मोक्षाख्याम्।

यथोक्तम्-

"अशरीरं शरीरेष्वनवस्थेष्वस्थितम्।

महान्तं विभुमात्मानं मत्वा धीरो न शोचति। " (कठ १। २। २२) इति

अपि च

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे। " (मुण्डक. २। २। ८) इति

अन्यच्च

"तत्र को मोहः कः शोकः एकत्वमनुपश्यतः। " (ईश. ७) इति

अधुना सर्वेषां पादानां साररूपार्थः आलोच्यते क्रमेण-

अत्र आदौ पादानां नामानि-

| **समन्वयाध्यायः** | |
|---|---|
| प्रथमः पादः | स्पष्टब्रह्मलिङ्गश्रुतिसमन्वयाख्यः |
| द्वितीयः पादः | अस्पष्टब्रह्मलिङ्गश्रुतिसमन्वयाख्यः |
| तृतीयः पादः | ज्ञेयब्रह्मप्रतिपादक-अस्पष्टश्रुतिसमन्वयः |
| चतुर्थः पादः | अव्यक्तादिसन्दिग्धपदमात्रसमन्वयः |
| **अविरोधाध्यायः** | |
| प्रथमः पादः | वेदान्तसमन्वयविरोधपरिहाराख्यः |
| द्वितीयः पादः | तर्कपादः |
| तृतीयः पादः | वियत्पादः |
| चतुर्थः पादः | प्राणपादः |
| **साधनाध्यायः** | |
| प्रथमः पादः | वैराग्यनिरूपणाख्यः |



| | |
|---|---|
| द्वितीयः पादः | तत्त्वम्पदार्थपरिशोधनाख्यः |
| तृतीयः पादः | परापरब्रह्मविद्यागुणोपसंहाराख्यः |
| चतुर्थः पादः | निर्गुणविद्यायाः अन्तरङ्गसाधनविचाराख्यः |
| **फलाध्यायः** | |
| प्रथमः पादः | आवृत्तिपादः |
| द्वितीयः पादः | उत्क्रान्तिपादः |
| तृतीयः पादः | मार्गपादः |
| चतुर्थः पादः | ब्रह्मपादः |

## ६.१.२) समन्वयाध्यायः

१. समन्वयाध्यायस्य प्रथमपादे आदिमसूत्रचतुष्टयेन शास्त्रार्थस्य सङ्ग्रहं कृत्वा आचार्येण स्पष्टब्रह्मलिङ्गश्रुतीनां समन्वयः दर्शितः।

२. द्वितीयपादे तु उपास्यवाचकास्पष्टश्रुतिसमन्वयः दर्शितः भवति।

३. तृतीये पादे तु ज्ञेयब्रह्मणः प्रतिपादकास्पष्टश्रुतिसमन्वयो दर्शितो भवति।

४. चतुर्थे पादे तु अव्यक्तादिसन्दिग्धपदमात्रस्य समन्वयो दर्शितः अस्ति।

## ६.१.३) अविरोधाध्यायः

१. अविरोधाध्ययस्य प्रथमपादे साङ्ख्यादि स्मृतियुक्तिभिः वेदान्तस्य समन्वयविरोधः य उद्भाव्यते तस्य परिहारः कृतः अस्ति।

२. द्वितीये पादे तर्कपादाख्ये वेदान्तसमन्वयाविरोधाय साङ्ख्यादिमतानां दुष्टत्वं च दर्शितम् अस्ति।

३. तृतीये पादे तु पञ्चमहाभूतजीवात्मश्रुतीनां विरोधः परिहृतः भवति।

४. चतुर्थे पादे च लिङ्गशरीरश्रुतीनां विरोधपरिहारः कृतः।

## ६.१.४) साधनाध्यायः

१. साधनाध्यायस्य प्रथमे पादे जीवस्य गत्यागतिः प्रदर्शिता भवति वैराग्यहेतोः।

२. द्वितीये पादे तस्यैव अवस्थाभेदं प्रपञ्च्य तत्त्वम्पदार्थपरिशोधनं कृतम् अस्ति।

३. तृतीये पादे तु ब्रह्मविद्यासु गुणोपसंहारस्य प्रकारः दर्शितो भवति।

४. चतुर्थे पादे परब्रह्मविद्यायाः अन्तरङ्गबहिरङ्गानि साधनानि विचारितानि भवन्ति।

## ६.१.५) फलाध्यायः

१. फलाध्यायस्य प्रथमे पादे साधनाश्रितम् एव किञ्चिद् अवशिष्टम् उपन्यस्य जीवन्मुक्तिविचारः



कृतो वर्तते।

२. द्वितीये पादे तु उत्क्रान्तिगतिः निरूपिता।

३. तृतीये पादे सगुणविद्यावतः मृतस्य उत्तरमार्गः व्याख्यातः।

४. चतुर्थे तु पादे ब्रह्मप्राप्तिः ब्रह्मलोकस्थितिश्च निरूपिता अस्ति।

**ब्रह्मसूत्रे बादरायणाचार्यैः निर्दिष्टाः आचार्याः-**

| आचार्याणां नामानि | सूत्रम् |
|---|---|
| कार्ष्णाजिनिः | चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः (ब्र.सू. ३। १) |
| काशकृत्स्नाचार्यः | अवस्थितेरिति काशकृत्स्नः (ब्र.सू. १। ४) |
| औडुलोमिः | चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः (ब्र.सू. ४। ४) |
| बादरिः | सुकृतदुष्कृते एवेति बादरिः (ब्र.सू. ३। १) |
| बादरायणः | एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः (ब्र.सू. ४। ४) |
| जैमिनिः | ब्राह्मेण जैमिनिरुपन्यासादिभ्यः (ब्र.सू. ४। ४) |
| आश्मरथ्यः | प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः (ब्र.सू. १। ४) |



## पाठगतप्रश्नाः-१

१. न्यायप्रस्थानेन कस्य ग्रहणं भवति।

२. ब्रह्मसूत्रं कः रचयामास।

३. ब्रह्मसूत्रे कति अध्यायाः सन्ति।

४. ब्रह्मसूत्रे कति अधिकरणानि सन्ति।

५. ब्रह्मसूत्रस्य द्वितीयाध्यायस्य नाम किम्।

६. ब्रह्मणः लक्षणं कस्मिन् सूत्रे प्रतिपादितम्।

७. ब्रह्मभावो मोक्षः उत ब्रह्माभवो मोक्षः।

८. साधनाध्याये प्रथमे पादे किं प्रतिपादितम् अस्ति।

९. अशरीराख्यः मोक्षः तत्र श्रुतिप्रमाणं किम्।

१०. जन्माद्यस्य यतः इत्यत्र यतः इति पदस्य अर्थः कः।



११. शास्त्रयोनित्वात् इत्यस्मिन् सूत्रे द्विविधो विग्रहः कः।

१२. ब्रह्मजिज्ञासा इत्यत्र विग्रहः कः।

१३. सूत्रस्य लक्षणं किम्।

१४. अधिकरणस्य लक्षणं किम्।

१५. बादरायणाचार्यैः ब्रह्मसूत्रे निर्दिष्टेषु आचार्येषु चतुर्णाम् आचार्याणां नामानि लिखत।

१६. उत्क्रान्तिगतिः कुत्र वर्णिता अस्ति।

१७. सांख्यादिनां दुष्टत्वं कस्मिन् पादे निराकृतम् अस्ति।

१८. "अस्य महतो भूतस्य निःश्वासितमेतद् यदृग्वे**दः**" कुत्रास्ति।

१९. "प्रतिष्ठन्ते परम्परया व्यवहरन्ति येन मार्गेण तत्प्रस्थानम्" इयम् उक्तिः कस्य भवति।

२०. तटस्थलक्षणस्य लक्षणं किम्।

२१. तत्तु समन्वयात् इत्यस्मिन् सूत्रे तत् इति पदेन कस्य ग्रहणं भवति।

२२. "वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्। वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते" कुत्रास्ति।

२३. ब्रह्मसूत्रस्य द्वितीयाध्यायस्य तृतीयपादस्य नाम किम्।

२४. अथातो ब्रह्मजिज्ञासा इति सूत्रस्य अर्थः कः।

## ६.२) स्मृतिप्रस्थानम्

स्मृतिप्रस्थानं गीताप्रस्थानम् इति कथ्यते। महाभारतस्य शान्तिपर्वणि अन्तर्भूता श्रीमद्भगवद्गीता परमपुरुषेण वासुदेवेन द्वापरे कुरुक्षेत्रे अर्जुनाय समुपदिष्टा कृष्णद्वैपायनव्यासेन सप्तशतश्लोकैः उपनिबद्धा। श्रुतौ प्रतिपादितः अर्थः एव स्मृतिप्रस्थाने आलोच्यते।

आध्यात्मिकभावनाप्रधाना गीता अद्वैतवेदान्तसाहित्यस्य द्वितीयं प्रस्थानम्। भगवता व्यासेन रचिता इयं श्रीमद्भगवद्गीता। अस्यां सप्तशतं (७००) श्लोकाः सन्ति। भगवता श्रीकृष्णेन ५३७ श्लोकाः निगदिताः, अर्जुनेन १२२ श्लोकाः, सञ्जयेन ४० श्लोकाः, धृतराष्ट्रेण च १ श्लोकः कथितः। गीताशास्त्रे वक्ता भगवान् श्रीकृष्णः स्वयमेव, श्रोता तु अर्जुनः।

निःश्रेयसाख्यपरमपुरुषार्थमुद्दिश्य गीताशास्त्रं धर्मद्वयमुपदिशति- साक्षादुपायभूतं निवृत्तिलक्षणधर्मं, परम्परोपायभूतं बुद्धियोगेन युक्तं प्रवृत्तिलक्षणञ्च धर्मम्। अभ्युदयर्थोऽप्रवृत्तिधर्मः कर्तृत्वबुद्धिफलाभिसन्धिवर्जनरूपयोगकौशलेनानुष्ठीयमानः सत्त्वशुद्धिसम्पादनद्वारा आत्मानात्मविवेकज्ञाने समाधौ पर्यवस्यति। एवं कर्मनिष्ठया ज्ञानं ज्ञाननिष्ठायोग्यताञ्च प्राप्तं कर्मसंन्यासपूर्वकं ज्ञाननिष्ठासम्पादनरूपेण निवृत्तिलक्षणधर्मेण निःश्रेयसमवाप्नोति।



अत्रैव कृत्स्नवेदान्तसारः निगदितः। शङ्कराचार्यैः उक्तम्- "तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थम्"। निःश्रेयसमेव अत्र मुख्यं प्रयोजनम्। उक्तं च शङ्कराचार्यैः "गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्य अत्यन्तोपरमलक्षणम्"

## ६.२.१) गीतायाः माहात्म्यम्

"गीताशास्त्रमिदं पुण्यं यः पठेत् प्रयतः पुमान्।

विष्णोः पदमवाप्नोति भयशोकादिवर्जितः॥" इति

यः पवित्रम् इदं गीताशास्त्रं पठति, तस्य भयशोकादयः गच्छन्ति। एवञ्च विष्णुधामपदं सः प्राप्नोति।

"गीताध्ययनशीलस्य प्राणायामपरस्य च।

नैव सन्ति हि पापानि पूर्वजन्मकृतानि च।। " इति

यः सर्वदा गीतायाः अध्ययनं प्राणायामञ्च करोति तस्य अस्मिन् जन्मनि कृतं पापकर्म अपि च पूर्वस्मिन् जन्मनि कृतं पापकर्म नष्टं भवति।

श्रीमद्भगवद्गीतायाम् अष्टादशाध्यायाः सन्ति। ते च अध्यायाः भवन्ति-

| अध्यायः | अध्यायनाम |
|---|---|
| प्रथमः | अर्जुनविषादयोगः |
| द्वितीयः | साङ्ख्ययोगः |
| तृतीयः | कर्मयोगः |
| चतुर्थः | ज्ञानकर्मसन्न्यासयोगः |
| पञ्चमः | कर्मसन्न्यासयोगः |
| षष्ठः | आत्मसंयमयोगः |
| सप्तमः | ज्ञानविज्ञानयोगः |
| अष्टमः | अक्षरब्रह्मयोगः |
| नवमः | राजविद्याराजगुह्ययोगः |
| दशमः | विभूतियोगः |
| एकादशः | विश्वरूपदर्शनयोगः |
| द्वादशः | भक्तियोगः |
| त्रयोदशः | क्षेत्रक्षेत्रज्ञयोगः |



| | |
|---|---|
| चतुर्दशः | गुणत्रयविभागयोगः |
| पञ्चदशः | पुरुषोत्तमयोगः |
| षोडशः | दैवासुरसम्पद्विभागयोगः |
| सप्तदशः | श्रद्धात्रयविभागयोगः |
| अष्टादशः | मोक्षसन्न्यासयोगः |

## ६.२.२) गीतायां प्रसिद्धानि भगवतः वचनानि

"नासतो विद्यते भावो नाभावो विद्यते सतः।

उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः।" (श्रीमद्-भगवद्-गीता. २। १६) इति

असत्पदार्थः कदापि न भवति, यथा- शशशृङ्गादिः। सत्पदार्थः सर्वदा भवति, यथा आत्मा। अनयोः उभयोः अपि सदसत्पदार्थयोः स्वरूपनिर्णयः केवलं तत्त्वज्ञानिनाम् एव भवति, न अन्येषाम्।

**आत्मनः स्वरूपम्**

"न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।

अजो नित्यः शाश्वतोऽ यं पुराणो न हन्यते हन्यमाने वा शरीरे। (गीता २। २०) इति

अयम् आत्मा कदापि न जायते न म्रियते वा, उत्पद्य पुनरपि उत्पस्यते इत्यपि वक्तुं न शक्यते, यतः अयम् आत्मा जन्मरहितः, सनातनः, पुरातनश्च। शरीरे नष्टेऽपि सः न पश्यति।

"वेदाविनाशिनं नित्यं य एनमजमव्ययम्।

कथं स पुरुषः पार्थ कं घातयति हन्ति कम्।। (गीता २। २१) इति

अयम् आत्मा विनाशरहितः, नित्यः, जन्मरहितः, अपक्षयरहितश्च इति यः जानाति सः ज्ञानी एव। तादृशज्ञानवान् पुरुषः अन्यं कथं वा हन्ति। कथं वा हनने अन्यं प्रेरयति।

"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।

तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही।" (गीता २। २२)इति

मनुष्यः वस्त्राणि धरति। परन्तु सः सर्वदा समानमेव वस्त्रं न धरति। धृतानि वस्त्राणि यदा जीर्णानि भवन्ति तदा तानि विहाय नूतनानि अन्यानि वस्त्राणि धरति। एवम् आत्मा अपि जीर्णानि शरीराणि परित्यज्य अभिनवानि अन्यानि शरीराणि आश्रयते।

"नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।

न चैनं क्लेदयन्त्यापो न शोषयति मारुतः।" (गीता २। २३)इति

एनम् आत्मानं छेत्तुं न प्रभवन्ति। अग्निः एनं दग्धुं न प्रभवति। जलम् एनं नैव आर्द्रीकर्तुं शक्नोति। वायुः अपि एनं शोषयितुं न प्रभवति।



"अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।

नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः। " (गीता २। २४)इति

अयम् आत्मा शस्त्रेण केनापि छेत्तुम् अशक्यः। अग्निना भस्मीकर्तुम् अपि न शक्यः। अस्य जलादिना क्लेदनम् आतपादिना शोषणं वा न शक्यम्। अयं सर्वदा भवति। सर्वत्रापि भवति। अयं निश्चलः स्थिरः सनातनश्च वर्तते।

### योगस्य लक्षणम्-

"योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।

सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते। " (गीता २। ४८) इति

हे अर्जुन अत्यासक्तिं परित्यज्य लाभालाभयोः विषये समभावनया चिन्तयन् एकाग्रमनस्कः भूत्वा कर्माणि आचर। लाभालाभयोः विषये समानतया व्यवहारः योगः इति उच्यते।

"बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।

तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्। " (गीता २। ५०)इति

हे पार्थ ज्ञानमार्गं समाश्रितः जनः सुकृतं दुष्कृतं चेति द्वयमपि परित्यजति। त्वमपि तद् परित्यज। फलम् अनपेक्षमाणः कर्मसु सज्जो भव। कर्मसु कौशलमेव योगः इति उच्यते।

### स्थितप्रज्ञस्य लक्षणम्-

"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।

वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते। " (गीता २। ५६) इति

स्थितप्रज्ञस्य मनः दुःखेषु अनुद्विग्नं भवति। सः सुखेषु स्पृहवान् न भवति। रागात् भयात् क्रोधात् च सः अतीतः भवति।

"यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।

इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता। " (गीता २। ५८)इति

इन्द्रियाणि सर्वदापि शब्दादिषु विषयेषु प्रवृत्तानि भवन्ति। कूर्मः यथा भयात् स्वानि अङ्गानि संकोचयति तथा यदा अयं ज्ञाननिष्ठायां प्रवृत्तः जनः सर्वाणि इन्द्रियाणि शब्दादिभ्यः संकोचयति तदा तस्य प्रज्ञा प्रतिष्ठिता भवति। स च स्थितप्रज्ञो भवति।

"एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।

स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति। " (गीता २। ७२)इति

हे पार्थ इयं ब्राह्मी स्थितिः इति उच्यते। एनां स्थितिं यः प्राप्नोति सः कदापि मोहवशः न भवति। अन्तकाले अपि अस्यां स्थितौ स्थित्वा सः ब्रह्मानन्दं प्राप्नोति।

"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।



ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्॥" (गीता ३। ३) इति

हे अर्जुन साङ्ख्यानां कृते ज्ञानमार्गः योगिनां कृते कर्ममार्गश्च इति द्विविधो मार्गः मया प्रागेव प्रोक्तः।

"न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।

न च संन्यसनादेव सिद्धिं समधिगच्छति॥" (गीता ३। ४)इति

"न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत।

कार्यते ह्यवशः कर्म सर्व प्रकृतिजैर्गुणैः॥" (गीता ३। ५) इति

यः कोऽपि कदापि क्षणकालमपि कर्मरहितः सन् न भवति यतः सर्वेऽपि प्रकृतिसम्भूतैः विकारैः विवशाः सन्तः कर्मप्रकरणे प्रवर्तन्ते।

**सृष्टिक्रमः**

"अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।

यज्ञाद्भवति पर्जन्यः यज्ञः कर्मसमुद्भवः॥" (गीता ३। १४) इति

प्राणिनः आहारात् उत्पद्यन्ते। आहारः वृष्टेः भवति। वृष्टिश्च यज्ञात् भवति। यज्ञस्तु कर्मणः समुद्भवति।

"कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।

तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥" (गीता ३। १५) इति

कर्म वेदात् उत्पन्नम्। वेदश्च परमात्मनः उत्पन्नोऽस्ति। अतः सर्वव्यापी भगवान् यज्ञे सदा तिष्ठति।

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।

अहङ्कारविमूढात्मा कर्ताहमिति मन्यते॥" (गीता ३। २७) इति

देहेन्द्रियादयः सर्वेऽपि प्रकृतेः विकारभूताः। ते एव कर्माणि कुर्वन्ति न तु आत्मा। अयं पुनः आत्मा यदा प्रकृतिजन्येन अहङ्कारेण युक्तः भवति तदा अहमेव सर्वेषां कर्मणां कर्ता इति जानाति।

**अवतारक्रमः**

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।

अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥" (गीता ४। ७) इति

हे अर्जुन यदा यदा हि धर्मस्य हानिः अर्धमस्य आधिक्यं च सम्भवति तदा अहम् आत्मानं लोकाय प्रकाशयामि। निराकारोऽपि साकारः भविष्यति।

"परित्राणाय साधूनां विनाशाय च दुष्कृताम्।

धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥" (गीता ४। ८) इति



सत्पुरुषाणां संरक्षणाय, दुर्जनानां विनाशाय, धर्मस्य च संस्थापनाय प्रत्येकं युगे अवतरामि।

### मोक्षप्राप्तिः

"जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।

त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥" (गीता ४। ९)

हे अर्जुन मम एतत् जन्म कर्म च अलौकिकमिति यः पुरुषः यथार्थं जानाति सः शरीरत्यागे सति पुनर्जन्म नाप्नोति प्रत्युत मामेव प्राप्नोति।

### चातुर्वर्ण्यम्

"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।

तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्॥" (गीता ४। १३) इति

गुणानां कर्माणां च विभेदानुसारेण ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः इति चत्वारः वर्णाः मया कृताः। तस्य चातुर्वर्ण्यविभागस्य यद्यपि अहं कर्ता तथापि अहम् अकर्ता अनश्वरः च अस्मि, तदेतत् जानीहि।

### मुक्तिः

"ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।

लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥" (गीता ५। १०) इति

यः पुरुषः सर्वाणि अपि कर्माणि ब्रह्मणे अर्पयित्वा सङ्गं त्यक्त्वा स्वाम्यर्थं भृत्यः इव कर्माणि आचरति सः पद्मपत्रं सरोवरे वर्तमानमपि जलेन यथा न लिप्यते तथा पापेन न लिप्यते।

### योगिनां कर्म

"कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।

योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये॥" (गीता ५। ११) इति

योगिनः शरीरेण मनसा बुद्ध्या ईश्वराय एव कर्म करोमि न मम फलाय इति ममतां विना इन्द्रियैश्च कर्म आचरन्ति तेन तेषां चित्तं शुद्धं भवति।

### ज्ञानेन मोक्षः

"ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।

तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्॥" (गीता ५। १६)

येषाम् अज्ञानम् आत्मनः ज्ञानेन नाशितं भवति तेषां तत् ज्ञानं सूर्यः यथा समस्तं रूपजातं प्रकाशयति तथा परमात्मार्थतत्त्वं प्रकाशयति।

"तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः।

गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः॥" (गीता ५। १७)



येषां बुद्धिः परमात्मनि रमते, चित्तं तत्रैव विहरति, स्थितिः सर्वदा तत्रैव सम्भवति, प्राप्यं च तत्त्वं स एव भवति तादृशाः ज्ञानेन कल्मषं नाशयन्तः पुरुषाः यतः पुनरागमनं न भवति तादृशं मोक्षं प्राप्नुवन्ति। यथा श्रुतिप्रमाणम् अपि अस्ति "न स पुनरावर्तते"। (छां.उ.) इति

### सन्न्यासिस्वरूपम्

"अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।

स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः॥" ( (गीता ६। १) इति

यः कर्मफलम् अनपेक्षमाणः कर्म करोति सः सन्न्यासी इति उच्यते। सः एव योगी अपि। अग्नित्यागमात्रेण कोऽपि जनः सन्न्यासी न भवति। कर्मफलत्यागमात्रेण कोऽपि जनः योगी अपि न भवति। (अग्निरक्षणं गृहस्थस्य धर्मः। सन्न्यासाश्रमस्वीकारावसरे अग्नित्यागः क्रियते। )

"यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।

न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन॥" (गीता ६। २)

श्रुतिस्मृतिविदः यं सन्न्यास इति वदन्ति तमेव कर्मयोगं मन्यस्व। कुतः। यस्मिन् कर्मसन्न्यासो वर्तते तस्मिन् कर्मफलविषयकः अभिलाषो न भवति, तथा यस्मिन् कर्मयोगो वर्तते तस्मिन्नपि स कर्मफलविषयकः अभिलोषो न भवति। एवं कर्मफलविषयकाभिलाषत्यागस्य उभयत्र सद्भावात् तयोः सादृश्यमिति तौ उभौ एक एव न अनेकः।

### योगिनः स्वरूपम्

"ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।

युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः॥" (गीता ६। ८) इति

गुरुणा उपदिष्टस्य ज्ञानेन प्रत्यक्षानुभवेन च यस्य चित्तं प्रसन्नं वर्तते यश्च निर्विकारः यश्च इन्द्रियाणां वशीकर्ता वर्तते, यस्य च मृत्पिण्डे पाषाणे सुवर्णे च समानताबुद्धिः सञ्जाता, तादृशः समाधौ मग्नः योगी इति कथ्यते। (ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानम्। विज्ञानं शास्त्रतो ज्ञातानां तथा एव स्वानुभवविषयीकरणम्। )

"प्रयत्नाद्यतमानस्तु योगी संशुद्धिकिल्बिषः।

अनेकजन्मसंसिद्धस्ततो याति परां गतिम्॥" (गीता ८। ४५) इति

पूर्वोक्तप्रकारेण यत्नेन योगे पुनः पुनः प्रवर्तमानस्य योगिनः सर्वाणि अपि पापानि विनश्यन्ति। विनष्टपापः सः बहुषु जन्मसु शुद्धो भूत्वा मुक्तिरूपां परमां गतिं प्राप्नोति।

"तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।

कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन॥" (गीता ८। ४६) इति

कृच्छ्रचान्द्रायणादिरूपं तपः आचरद्भ्यः अपि योगी अधिकः। शास्त्रे पण्डितेभ्यः अपि योगी अधिकः। अग्निहोत्रादिकर्म आचरद्भ्यः अपि योगी अधिकः। अतः हे अर्जुन त्वं योगी भव।



**भगवतः श्रीकृष्णस्य स्वरूपनिर्णयः**

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।

अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥" (गीता ७। ४) इति

पृथिवी जलम् अनलः वायुः खं (आकाशं) मनः बुद्धिः अहङ्कारः च एव इति इयं मम प्रकृतिः अष्टभिः प्रकारैः भिन्ना भवति।

"अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।

जीवभूतां महाबाहो ययेदं धार्यते जगत्॥" (गीता ७। ५)इति

महाबाहो अष्टधा विभक्ता इयं मम प्रकृतिः संसारबन्धनात्मिका अस्ति। अस्याः अन्या अपि मम प्रकृतिः अस्ति। प्रकृष्टा सा एव सर्वेषां प्राणधारिणी अस्ति। तया एव एतद् जगत् धार्यते।

"एतद्योनीनि भूतानि सर्वाणीत्युपधारय।

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥" (गीता ७। ६) इति

सर्वाणि भूतानि प्रकृतिसम्भवानि इति जानीहि। इदं समग्रं जगत् मत्त एव निर्गच्छति, मय्येव च लीनं भवति।

**ब्रह्मणः स्वरूपनिर्णयः**

"अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते।

भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः॥" (गीता ८। ३) इति

अत्युत्तमं विनाशरहितं सर्वव्यापकं च ब्रह्म इत्युच्यते। तादृशस्य ब्रह्मणः जीवरूपेण शरीरे अवस्थानम् अध्यात्ममिति उच्यते। सर्वेषां भूतानाम् उत्पत्तौ वृद्धौ च कारणीभूतः यज्ञः (देवतोद्देशेन चरुपुरोडाशादेः द्रवस्य विसर्जनम्) कर्म इति उच्यते।

"ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।

यः प्रयाति त्यजन्देहं स याति परमां गतिम्॥" (गीता ८। १३) इति

सकलप्रवेशद्वाराणि (नवद्वाराणि) निगृह्य चित्तं हृदये संस्थाप्य च स्वस्य प्राणं शिरसि स्थापयित्वा समाधिं प्राप्तः एकाक्षरं ब्रह्मवाचकत्वात् साक्षात् ब्रह्मस्वरूपम् ओङ्कारम् उच्चारयन् मां ध्यायन् यः मानवः शरीरं मुञ्चति स उत्कृष्टां गतिं लभते।

**गुणत्रयम्**

"तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्।

सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ॥" (गीता १४। ६) इति

हे पापरहित अर्जुन तेषु त्रिषु गुणेषु स्वच्छत्वात् भासकं निरुपद्रवं सत्त्वं सुखं जनयति ज्ञानं च।

"रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्।



तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम्॥" (गीता १४। ७) इति

अर्जुन अप्राप्ते वस्तुनि अभिलाषः तृष्णा, प्राप्ते वस्तुनि अभिलाषः सङ्गः। आभ्यां यो रागः सम्भवति तदात्मकः अयं रजोगुणः। अयं च आत्मानं कर्मसु प्रवर्तयति। प्रवृत्तश्च सः तत्र बद्धो भवति।

"तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।

प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत॥" (गीता १४। ८) इति

अर्जुन यत् तृतीयं तमः तत् अज्ञानात् सम्भवति। इदं च तमः सर्वेषां प्राणिनां भ्रान्तिं जनयति। अनेन गुणेन सर्वेषाम् अनवधानं जाड्यं निद्रा च सम्भवति। एवमिदं तमः पुरुषं संसारे बध्नाति।

### द्विविधौ लोकौ

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥" (गीता १५। १६) इति

अत्र लोके क्षरः अक्षरः चेति द्वौ पुरुषौ स्तः। तत्र क्षरः पुरुषो नाम महदादिः भूतान्तः सर्वोऽपि कार्यरूपः राशिः। स च विनाशी। अक्षरः मायाशब्देन या व्यवह्रियते सा प्रकृतिः। अयं निर्विकारत्वेन स्थितः कारणभागः।

### असुरस्वभावः

"प्रवृतिं च निवृतिं च जना न विदुरासुराः।

न शौचं नापि चाचारो न सत्यं तेषु विद्यते॥" (गीता १६। ७) इति

असुरगुणसम्पन्नाः जनाः धर्मे प्रवृतिं न जानन्ति, अर्धमात् च निवृत्तिम्। कायिकं वाचिकं मानसिकं चेति यत् त्रिविधं शौचं तत् तेषु न सम्भवति। नापि यथार्थवादित्वम्।

### त्रिविधा श्रद्धा

"सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत।

श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः॥" (गीता १७। ३)इति

सात्त्विकी राजसी तामसी चेति त्रिविधा श्रद्धा भवति। अधुना तेषां स्वरूपम् उच्यते

"यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः।

प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः॥" (गीता १७। ४)इति

तत्र येषु सत्त्वं वर्तते ते देवान् पूजयन्ति। येषु च रजः ते यक्षान् राक्षसान् च पूजयन्ति। येषु पुनः तमः ते प्रेतान् भूतान् च पूजयन्ति।





## पाठगतप्रश्नाः-२

२५. गीतायां कति अध्यायाः सन्ति।
२६. श्रीमद्भगवद्गीतायां कः कस्मै उपदेशं दत्तवान्।
२७. श्रीमद्भगवद्गीतां कः रचयामास।
२८. श्रीमद्भगवद्गीतायां कति श्लोकाः सन्ति।
२९. श्रीमद्भगवद्गीतायाः अष्टादशाध्यायस्य नाम किम्।
३०. आत्मा नित्यो वा अनित्यो वा।
३१. योगस्य लक्षणम् एकं लिखत।
३२. स्थितप्रज्ञस्य लक्षणम् एकं लिखत।
३३. चातुर्वर्ण्यं कस्मात् सृष्टम्।
३४. प्रकृतिः कतिविधा भवति। के च ते।
३५. विश्वरूपदर्शनं गीतायां कस्मिन् अध्याये अस्ति।
३६. अक्षरमिति पदेन ब्रह्म उच्यते उत जीवः।
३७. त्रयो गुणाः के।
३८. अग्निः कं दग्धुं न प्रभवति।
३९. सन्न्यासिस्वरूपं किम्।
४०. "न स पुनरावर्तते" कुत्रास्ति।
४१. प्राणिनः कस्मात् उत्पद्यन्ते।
४२. चत्वारो वर्णाः के।
४३. महाभारतस्य कस्मिन् पर्वणि श्रीमद्भगवद्गीता अन्तर्भूता।
४४. द्विविधौ धर्मलक्षणौ कौ तौ।
४५. ज्ञानेन मोक्षः कथं भवति।



## पाठसारः

महर्षिः बादरायणः ब्रह्मसूत्रं रचयामास। शारीरकस्य जीवात्मनः यत् स्वरूपम् उपनिषत्सु श्रुतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्म तदत्र प्रस्थाने उपनिषद्वाक्यानि एव विषयीकृत्य विचारितवान्।

तत्र चत्वारः अध्यायाः सन्ति। प्रत्येकम् अध्यायेषु चत्वारः पादाः सन्ति। ततः परम् अधिकरणस्य लक्षणम् उक्त्वा सूत्रस्य अपि लक्षणम् उक्तम् अस्ति।



ब्रह्मसूत्रे प्रथमाध्याये प्रथमपादे प्रसिद्धो विषयो भवति चतुःसूत्री। तत्र चतुर्णां सूत्राणां चर्चा कृता अस्ति। जन्माद्यधिकरणभाष्ये ब्रह्मणः लक्षणद्वयम् अपि व्याख्यातम्। शास्त्रयोनित्वात् इत्यादिना सूत्रेण ब्रह्मणः शास्त्रप्रमाणकत्वम् अपि स्थापितम्।

ततः परं पादानां सारः व्याख्यातः। ब्रह्मसूत्रे निर्दिष्टाः आचार्याः सूत्रप्रमाणेन सह लिखिताः सन्ति।

स्मृतिप्रस्थानं गीताप्रस्थानम् इति कथ्यते। महाभारतस्य शान्तिपर्वणि अन्तर्भूता श्रीमद्भगवद्गीता परमपुरुषेण वासुदेवेन द्वापरे कुरुक्षेत्रे अर्जुनाय समुपदिष्टा कृष्णद्वैपायनव्यासेन सप्तशतश्लोकैः उपनिबद्धा। श्रुतौ प्रतिपादितः अर्थः एव स्मृतिप्रस्थाने आलोच्यते।

गीतायां प्रवृत्तिलक्षणं निवृत्तिलक्षणधर्मं च व्याख्यातम्। आत्मनः स्वरूपनिर्णयः कृतः अस्ति। ततः परं स्थिप्रज्ञस्य लक्षणमपि कृतम् अस्ति। सृष्टिक्रमः अपि व्याख्यातः।

भगवतः अवतारः कदा भवति तदपि आलोचितम् अस्ति "यदा यदा हि धर्मस्य" इत्यादिना श्लोकेन। चतुर्णां वर्णानामपि स्वरूपनिर्णयः कृतः अस्ति। योगिनाम् अपि कर्म उक्त्वा तेषां स्वरूपनिर्णयः कृतः अस्ति।

सन्न्यासिनां स्वरूपम् उक्त्वा ब्रह्मणः अपि स्वरूपं विचारितम् अस्ति। ततः परं गुणत्रयं व्यख्यातम्। अपि च द्विविधौ लोकौ व्याख्याय त्रिविधा श्रद्धा अपि व्याख्याता।

न्यायप्रस्थानस्मृतिप्रस्थानाभ्यां ब्रह्मस्वरूपम् एव ज्ञायते। ब्रह्मणः प्राप्तिः भवति अर्थात् मोक्षः भवति। तदा अस्मिन् मायामोहविशिष्टे संसारे पुनः आगमनं न भवति इति। तदा सः जीवन्मुक्तः भवति।

ब्रह्ममीमांसा हि वेदान्तशास्त्रम्। ब्रह्म चोपनिषत्प्रसिद्धम्। तत् स्वरूपविचाररूपं वेदान्तशास्त्रम् एवं हि उपनिषद्गीताब्रह्मसूत्ररूपप्रस्थानत्रयम् अधितिष्ठति इति। ब्रह्म जिज्ञासूनां प्रस्थानत्रयम् एव विशेषतः अध्येयं विचार्यञ्च इति शिवम्॥

##  पाठान्तप्रश्नाः

१. न्यायप्रस्थानविषये प्रबन्धं लिखत।
२. गीताप्रस्थानविषये प्रबन्धं लिखत।
३. ब्रह्मसूत्रस्य चतुर्णाम् अध्यायानां परिचयं ददत।
४. ब्रह्मणः द्विविधं लक्षणं लिखत।
५. गीतायां योगस्वरूपं वर्णयत।
६. गीतायाम् आत्मनः स्वरूपं विचारयत।
७. ब्रह्मसूत्रे निर्दिष्टानाम् आचार्याणां नामानि सूत्रप्रमाणेन सह लिखत।
८. स्थितप्रज्ञस्य लक्षणं विस्तरेण विचारयत।
९. ब्रह्मणः स्वरूपं न्यायस्मृतिप्रस्थानाभ्यां विचारयत।



१०. गुणत्रयं विचार्य्य असुराणां स्वभावं च विचारयत।

११. भगवतः श्रीकृष्णस्य स्वरूपनिर्णयं कुरुत।

१२. गीतायाः अध्यायाणां नामानि लिखित्वा **"तत्तु समन्वयात्"** इति सूत्रं व्याख्यात।



## पाठगतप्रश्नानामुत्तराणि-

**उत्तराणि-१**

१. न्यायप्रस्थानेन ब्रह्मसूत्रस्य ग्रहणं भवति।

२. ब्रह्मसूत्रं महर्षिः बादरायणः रचयामास।

३. ब्रह्मसूत्रे चत्वारः अध्यायाः सन्ति।

४. ब्रह्मसूत्रे पञ्चनवत्यधिकशतम् (१९५)अधिकरणानि सन्ति।

५. ब्रह्मसूत्रस्य द्वितीयाध्यायस्य नाम भवति अविरोधाध्यायः।

६. ब्रह्मणः लक्षणं जन्माद्यस्य यतः इत्यस्मिन् सूत्रे प्रतिपादितम्।

७. ब्रह्मभावो मोक्षः।

८. साधनाध्याये प्रथमे पादे जीवस्य गत्यागतिः प्रदर्शिता भवति वैराग्यहेतोः।

९. अशरीराख्यः मोक्षः तत्र श्रुतिप्रमाणं भवति "अशरीरं शरीरेष्वनवस्थेष्वस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति"॥ इति

१०. जन्माद्यस्य यतः इत्यत्र यतः इति पदस्य अर्थो कारणत्वमिति।

११. शास्त्रयोनित्वात् इत्यस्मिन् सूत्रे द्विविधो विग्रहो भवति-शास्त्रं योनि प्रमाणं यस्मिन् तस्य भावः शास्त्रयोनित्वम् इति, तस्माद् शास्त्रयोनित्वात्। अपरो विग्रहो भवति शास्त्रस्य योनिः कारणं शास्त्रयोनिः तस्य भावः शास्त्रयोनित्वम्, तस्मात् शास्त्रयोनित्वात्।

१२. ब्रह्मजिज्ञासा इत्यत्र विग्रहो भवति ब्रह्मणः जिज्ञासा इति। ब्रह्मणः इति कर्मणि षष्ठी, न तु शेषे षष्ठी।

१३. सूत्रस्य लक्षणं "अल्पाक्षरमसंदिग्धं सारद्विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥"

१४. अधिकरणस्य लक्षणं भवति "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्॥" इति

१५. बादरायणाचार्यैः ब्रह्मसूत्रे निर्दिष्टेषु आचार्येषु चतुर्णाम् आचार्याणां नामानि भवन्ति कार्ष्णाजिनिः काशकृत्स्नाचार्यः औडुलोमिः आत्रेयः इति।

१६. उत्क्रान्तिगतिः फलाध्यायस्य द्वितीये पादे वर्णिता अस्ति।

१७. सांख्यादिनां दुष्टत्वं अविरोधाध्ययस्य प्रथमपादे पादे निराकृतम् अस्ति।



१८. "अस्य महतो भूतस्य निःश्वासितमेतद् यदृग्वेदः" इति बृहदारण्यकोपनिषदि अस्ति।

१९. "प्रतिष्ठन्ते परम्परया व्यवहरन्ति येन मार्गेण तत्प्रस्थानम्" इयम् उक्तिः भवति लोचनकारस्य अभिनवगुप्तपादस्य।

२०. तटस्थलक्षणस्य लक्षणं यावल्लक्ष्यकालमनवस्थितत्वे सति यत् व्यावर्तकं तदेव तटस्थलक्षणम्।

२१. तत्तु समन्वयात् इत्यस्मिन् सूत्रे तत् इति पदेन ब्रह्मणः ग्रहणं भवति।

२२. "वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्। वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते" इति जन्माद्यधिकरणभाष्ये अस्ति।

२३. अविरोधाध्याये तृतीयः पादः भवति वियत्पादः।

२४. सूत्रे अस्मिन् ब्रह्म जिज्ञास्यम् इति अर्थः प्रतिपादितः। अथ-शब्दस्तु आनन्तयार्थः इत्यस्मिन् अर्थे गृहीतः। अत-शब्दस्तु हेत्वर्थे गृहीतः। ब्रह्मजिज्ञासा इत्यत्र ब्रह्मणः जिज्ञासा। ब्रह्मणः इति कर्मणि षष्ठी, न तु शेषे षष्ठी।

**पाठगतप्रश्नाः-२**

२५. गीतायां अष्टादशाध्यायाः सन्ति।

२६. श्रीमद्भगवद्गीतायां भगवान् श्रीकृष्णः अर्जुनाय उपदेशं दत्तवान्।

२७. श्रीमद्भगवद्गीतां महर्षिः व्यासदेवः रचयामास।

२८. श्रीमद्भगवद्गीतायां सप्तशतश्लोकाः सन्ति।

२९. श्रीमद्भगवद्गीतायाः अष्टादशाध्यायस्य नाम भवति मोक्षसन्न्यासयोगः।

३०. आत्मा नित्यो भवति।

३१. योगस्य लक्षणम् एकं भवति "योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय। सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते। " इति

३२. स्थितप्रज्ञस्य लक्षणम् एकं भवति "यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता। " इति

३३. गुणकर्मविभागशः चातुर्वर्ण्यं सृष्टम्।

३४. प्रकृतिः अष्टविधा भवति। ते च भवन्ति पृथिवी जलम् अनलः वायुः खं (आकाशं) मनः बुद्धिः अहङ्कारः।

३५. विश्वरूपदर्शनं गीतायां एकादशाध्याये अस्ति।

३६. अक्षरमिति पदेन ब्रह्म उच्यते न तु जीवः।

३७. त्रयो गुणाः सन्ति सत्त्वरजोतमांसि।

३८. अग्निः आत्मानं दग्धुं न प्रभवति।

३९. सन्न्यासिस्वरूपं भवति "अनाश्रितः कर्मफलं कार्यं कर्म करोति यः। स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः॥" इति

४०. "न स पुनरावर्तते" छान्दग्योपनिषदि वर्तते अयं मन्त्रः।



४१. प्राणिनः आहारात् उत्पद्यन्ते।

४२. चत्वारो वर्णाः भवन्ति ब्राह्मणक्षत्रियवैश्यशूद्राः।

४३. महाभारतस्य शान्तिपर्वणि श्रीमद्भगवद्गीता अन्तर्भूता।

४४. द्विविधौ धर्मलक्षणौ तौ द्वौ च प्रवृत्तिलक्षणधर्मः निवृत्तिलक्षणधर्मः च।

४५. ज्ञानेन मोक्षो भवति तत्र प्रमाणं भवति भगवतः वचनम् इदम् "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः। तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्॥" इति

॥ इति षष्ठः पाठः ॥

७

# चार्वाकदर्शनम्

## प्रस्तावना

पाठे अस्मिन् दर्शनस्य सामान्यज्ञानात् अनन्तरं परम्पराभेदपुरस्सरं किञ्चित् विशेषज्ञानम् आलोच्यते। आदौ सर्वप्रसिद्धचार्वाकदर्शनम् आलोच्यते। चार्वाकाणाम् उद्भवः कथं जातः एतस्मिन् विषये वयं जानीमः। दशमकक्षायाः कृते अयं पाठः विरचितः। सरलेन विषयः उपस्थाप्यते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- चार्वाकदर्शनस्य उद्भवं ज्ञास्यति।
- चार्वाकमते प्रमाप्रमेयप्रमाणानि ज्ञास्यति।
- सम्प्रदायस्य आचार्याणां परिचयं ज्ञास्यति।
- चार्वाकदर्शनस्य ग्रन्थानां परिचयं जानीयात्।
- चार्वाकदर्शनस्य प्रसिद्धान् श्लोकान् ज्ञास्यति।
- चार्वाकाणां गुरुत्वं बुध्यात्।

## ७.१) भूमिका

चार्वाकदर्शनं किञ्चन भिन्नं दर्शनम् अस्ति। देवगुरुः बृहस्पतिः एव जनान् मोहयितुं प्रियकरैः वचनैः चार्वाकमतम् उपदिष्टवान् इति श्रूयते। चार्वाकदर्शनस्य मूलग्रन्थः इदानीं न उपलभ्यते। चार्वाकदर्शनं धर्माधर्मादीनां, पापपुण्यादीनाम् आत्मादीनां वा अस्तित्वं न अङ्गीकरोति। चार्वाकाः भोगवादं विशेषतः स्वीकुर्वन्ति। किन्तु अनेन ते भोगैकतत्पराः दुराचाराश्च आसन्निति न निर्णेतव्यम्। अहिंसा, शान्तिप्रियता, युद्धनिषेधः इत्यादयः बहवः अंशाः तैः अपि प्रतिपादिताः। अस्य दर्शनस्य सूत्रकारः बृहस्पतिः नाम आचार्यः भवति। दर्शनस्यास्य प्रचारकः चार्वाको नाम दैत्यः आसीत् इत्यतः अस्य दर्शनस्य चार्वाकदर्शनमिति ख्यातिः। चार्वाकदर्शनानुसारं मरणमेव मोक्षः। मरणात् परं किमपि नास्ति इति ते वदन्ति। परलोकं पुनर्जन्म च न अङ्गीकुर्वन्ति ते। 'भस्मीभूतस्य देहस्य पुनरागमनं कुतःइति ते पृच्छन्ति च। तेषां तु शरीरमेव आत्मा शरीरभिन्नः कश्चिद् आत्मा नास्ति। एतत् चार्वाकदर्शनं लोके बाहुल्येन प्रचलितत्वात् लोकायतदर्शनम् इत्यपि नाम प्राप्तम्। प्रत्यक्षं तेषाम् एकमात्रं प्रमाणम्।

**यावज्जीवेत् सुखं जीवेत् नास्ति मृत्योरगोचरः।**



**भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥ इति**

लोकगाथाम् अनुसृत्य चार्वाकाः कार्यं कुर्वन्ति स्म। नीतिकामशास्त्रानुसारेण अर्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकमर्थम् अपह्नुवानाः चार्वाकमतम् अनुवर्तमानाः एवानुभूयन्ते। (स.द. संग्रहः)।

पृथिवी-अप्- तेजो-वायु -रूपात्मकं शरीरमेव आत्मा, न तु शरीरातिरिक्तः आत्मा वर्तते। प्रत्यक्षमेव प्रमाणम्। शरीरिणः कृते अपेक्षितौ अर्थ-कामौ पुरुषार्थौ स्तः। वेदः कल्पितः, अतः प्रमाणं भवितुं नार्हति इति मन्यन्ते चार्वाकाः।

क) पृथिव्यप्तेजोवायवः तत्त्वानि।

ख) तेभ्यः चैतन्यम्।

ग) चैतन्यविशिष्टः कायः पुरुषः।

घ) कामार्थौ पुरुषार्थौ।

ङ) मरणं मोक्षः इति संग्रहः।

तथाहि-

**"देहस्य नाशो मुक्तिस्तु न ज्ञानात् मुक्तिरिष्यते ॥**
**अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः।**
**चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते" ॥इति। (सं.द.सं)।**

तत्त्वज्ञानिनां कृते सृष्टेः रहस्यं अनुसन्धानस्य विषयः भवति। सर्वासु दार्शनिकविचारधारासु विषयस्यास्य विश्लेषणं कृतम्। यथा सर्वेषु मानवशरीरेषु जातिगतसाम्ये विद्यमानेऽपि आकृतिगतभेदो भवति तथैव बुद्धिवैषम्यात् सृष्टितत्त्वम् एकं सदपि पृथक्बुद्धिविषयत्वात् विविधरूपेषु ज्ञातुं शक्यते। अतः चार्वाकमतम् असम्यग् इति वक्तुं न शक्यते।

दर्शनशास्त्रे प्रमेयतत्त्वानां सम्बन्धे इदमेव तथ्यं घटते। सृष्टि-स्रष्टृ-प्रभृतीनि तत्त्वानि विविधदर्शनेषु विविधदृष्ट्या मीमांसितानि। तत्त्वसाक्षात्कारस्य प्रक्रियायां चिन्तकः चिन्तनं कृत्वा उपलब्धं निष्कर्षं प्रस्तौति। एवञ्चेत् विविधानां चिन्तकानां निष्कर्षेषु पार्थक्यं दृश्यते। अतः दार्शनिकानाम् एकस्मिन् एव विषये मतान्तराणि स्वाभाविकानि वर्तन्ते। भारतीयदर्शने एकः सम्प्रदायविशेषः उपर्युक्तमतेन सहमतो नास्ति। चार्वाकस्य विचारः विद्यते यत् सृष्टेर्यत् स्थूलं रूपं दृश्यते तदेव सत्यमस्ति। दृश्यमानस्वरूपापेक्षया किमपि अन्यत् तत्त्वं सूक्ष्मरूपेण सृष्टिमूले वर्तते इति एतत् विश्वासयोग्यं न भवति। यतो हि अदृष्टस्य सूक्ष्मतत्त्वस्य सत्तायामपि किं प्रमाणमस्ति इति नैव वक्तुं शक्यते। एवञ्चेत् बुद्धिभेदात् एते स्थूलबुद्धयो दार्शनिकाः स्वकीयया स्थूलबुद्ध्या यदेव अवगन्तुं क्षमन्ते, तदेव मूलतत्त्वं स्वीकुर्वन्ति। अयं संशयः सन्देहवादो वा यद्यपि महाभारतकालात्पूर्वमपि विद्यमानः आसीत् तथापि वर्तमाने काले अपि भ्रमं जनयति। वैदिकदर्शनानि एतेन क्षतिग्रस्तानि अभवन्। यद्यपि महाभारतकाले भगवद्गीताया माध्यमेन वैदिकदर्शनस्य पुनः प्रतिष्ठापना विहिता, तथापि वेदविरोधिविचाराणां मूलोच्छेदनं नैव जातम्। वैदिकदर्शनस्योपरि तेषां वेदविरोधिनाम् आचार्याणां प्रहारोऽपि सततं समजायत। अनुमानापेक्षया शब्दप्रमाणेनैव सृष्टितत्त्वानां प्रामाण्यं गृह्यते। सृष्टितत्त्वानां प्रामाण्यम् अनुमानापेक्षया शब्दप्रमाणेन सुतरां



गृह्यते। वेदाः शब्दप्रमाणरूपाः वर्तन्ते। वैदिकवाक्यैरेव दर्शनोक्तानां जीव-जगत्-ईश्वर-ब्रह्मादितत्त्वानां प्रामाणिकता सिद्ध्यति। पुनरपि अवैदिकदर्शनेषु वेदानां प्रामाण्यं स्वीकृतं नास्ति। अवैदिकदर्शनेषु चार्वाक-जैन-बौद्धाः प्रमुखाः सन्ति। एष्वपि जैन-बौद्धयोः तत्त्वचिन्तने सूक्ष्मा दृष्टिरस्ति। चार्वाकास्तु पूर्णतया स्थूलदृष्टयः भवन्ति। दर्शनशास्त्रस्येतिहासे नास्तिकदर्शनेषु चार्वाकदर्शनस्य आद्यं स्थानमस्ति। अनेन चार्वाकदर्शनस्य प्राचीनताऽपि सिद्ध्यति। अस्य प्राचीनतया इदमपि स्पष्टीभवति यत् यथा यथा मानवसभ्यतायाः विकासो जातः तथा तथा तस्याः संस्कृतौ आचारविचारयोश्च परिष्कारः अभवत्। सभ्यतायाः विकासेन सह सृष्टिविज्ञानादयो दार्शनिकसिद्धान्ताः अपि सूक्ष्मतत्त्वानुसन्धाने प्रवृत्ताः आसन्, किन्तु सभ्यतायाः प्रारम्भे दर्शनशास्त्रस्य स्थूलतत्त्वानि प्रचलितानि स्युरित्यपि मन्तुं शक्यते। यदि चार्वाकाः स्थूलविचारपर्यन्तमेव आत्मनः चिन्तनस्य श्रेयस्करत्वं मन्यन्ते तर्हि को दोषः। वस्तुतः चार्वाकाणां एषा हठधर्मिता तु तन्मतस्य पुरातनम् अस्तित्वं द्योतयति। चार्वाकाणां स्थूलदृष्टेर्मान्यतायाः आधारः को भवितुं शक्नोति। दर्शनस्य तात्त्विकविश्लेषणेन तन्निर्धारणं स्यात्। प्रारम्भे इदं दर्शनं लोकायतनाम्ना प्रसिद्धमासीत्। लोकायतानां परपक्षखण्डनमतिरिच्य नान्यः कश्चन सिद्धान्तः आसीत्। ते लोकायतिकाः वेदनिन्दकाः च आसन्। अन्येऽपि तत्कालिकाः विचारका एभ्यः खिन्ना आसन्। जैनबौद्धाभ्याम् अपि एतेषां निन्दा विहिता। चार्वाकदर्शनमिति नामकरणे किमपि सुदृढं प्रमाणं नास्ति। आचार्यबृहस्पतेः शिष्याश्चार्वाका आसन्, अतः एतेऽपि चार्वाका इत्युच्यन्ते। परलोक-पाप-पुण्यादीनां चर्वणादपि इमे चार्वाकाः स्युः। एतेषां वाक् चारु अस्तीत्येव एते चार्वाका इति कथ्यन्ते। देवगुरुः बृहस्पतिरेव अस्य मतस्य प्रवर्तनं कृतवान्। बृहस्पतिप्रवर्तितेऽस्मिन् दर्शने स्वभाववाद- यदृच्छावाद-नियतिवाद-कालवाद-भौतिकवादाश्च अवधारणारूपेण विकसिताः सन्ति। एष्वपि स्वभाववादः चार्वाकानाम् अतीव सन्निकटम् अस्ति। यतो हि स्वभाववादे कारणकार्यभावस्य आवश्यकतैव नास्ति। कालवादे भाग्यस्य महत्त्वं स्वीकृतमस्ति। नियतिवादे आकस्मिकतायाः ग्रहणं विधीयते। आकस्मिकघटनाभिः सह ऐक्यं यदृच्छावादः अधीयते चार्वाकैः। चार्वाकसिद्धान्तस्य उल्लेखो रामायणमहाभारतयोरपि उपलभ्यते। बाल्मीकीयरामायणे लोकायतिकानां प्रसङ्गोऽस्ति। लोकायतिकाः मिथ्यावादिनः आसन् इत्यपि ज्ञायन्ते। महाभारते देह एव आत्मा इति सिद्धान्तवादिनां लोकायतिकानां सिद्धान्तानां प्रतिपादनप्रसङ्गे चतुर्भ्यो भूतेभ्योः चैतन्यस्य उत्पत्तिः, प्रत्यक्षमात्रस्य प्रामाण्यञ्च प्रतिपादिते। चार्वाकदर्शनस्य मूलग्रन्थः सूत्रशैल्याम् उपनिबद्ध आसीत्। अस्य रचना आचार्येण बृहस्पतिना विहिता। अस्य तथ्यस्योल्लेखः प्राप्यते, किन्तु सः सूत्रग्रन्थः अनुपलब्धः अस्ति। डॉ. उमेशमिश्रेण चार्वाकदर्शनस्य पञ्चदशसूत्राणि विविधभाष्यग्रन्थेभ्यः टीकाग्रन्थेभ्यः च उद्धृतानि। एतदतिरिच्य 'भागुरि' कृतस्य टीकाग्रन्थस्यापि उल्लेखं इतिहासकाराः कुर्वन्ति। भट्टजयराशिकृतस्य तत्त्वोपल्पवसिन्धुनामकस्य अन्यग्रन्थस्य विषयेऽपि विज्ञायते। अस्मिन् ग्रन्थे चार्वाकसिद्धान्तानां विस्तरेण विश्लेषणं कृतमस्ति। भारतीयदर्शनपरम्परायां षट्सु नास्तिकदर्शनेषु चार्वाकदर्शनम् अन्यतमं तत्तु दृश्यते एव। अस्य दर्शनस्य महती प्रसिद्धिः आसीत्। तत्तु प्रायः सर्वशास्त्रेषु पूर्वपक्षत्वेन अग्रगण्यत्वात् ज्ञायते एव। वैदिकयुगे भारते प्रियवाक्यस्य कथनाय निर्देशः आसीत्। यद्यपि भारतवर्षे मूलतः अध्यात्मवादस्य कृते प्रसिद्धः तथापि जडवादिनः चार्वाकाः मनोहरैः प्रियवाक्यैः तर्कसभायां बहुकरताडनं प्राप्तवन्तः।



## ७.२) सम्प्रदायः

विभिन्नदर्शनस्य कश्चन प्रवर्तको वर्तते। परन्तु चार्वाकादर्शनस्य कः प्रवर्तकः इति विषये महान् विवादः वर्तते। तथापि कैश्चित् उच्यते देवगुरुः बृहस्पतिः एव अस्य दर्शनस्य प्रचारकः। सर्वदर्शनसंग्रहे माधवाचार्यैः उक्तं यत् वृहस्पतिमतानुसारिणा नास्तिकशिरोमणिना चार्वाकेण इति। एषः वृहस्पतिः कः तद्विषये स्पष्टं प्रमाणं न प्राप्यते। कैश्चित् उच्यते यत् चारु वाक् इत्यस्य अर्थः मधुरवचनमिति। अतः ये मधुरवचनैः सर्वेषां मनः हरन्ति ते चार्वाकाः इति। चर्वधातोः अर्थः चर्वणमिति स्वीकृत्य केचित् वदन्ति भोजनस्य तत्त्वं ये प्रचारयन्ति ते चार्वाकाः इति।

## ७.३) चार्वाकस्य विविधविशेषणानि

चार्वाकाः वैतण्डिकाः इति अभिधीयते। चार्वाकाः वितण्डनिपुणाः। वैतण्डिकस्य लक्ष्यं केवलं परमतखण्डनम्। वितण्ड्यते व्याहन्यते परपक्षोऽनया इति व्युत्पत्त्या वितण्डाशब्दः निष्पन्नः। अतः ये केवलं परपक्षखण्डनपराः भवन्ति ते वैतण्डिकाः चार्वाकाः।

चार्वाकाः लोकायतिकाः इति अपरनामधेयम्। लोके आयतं विस्तृतं यत् तत् लोकायतम्। लोकायतं ये स्वीकुर्वन्ति ते लोकायतिकाः इति। इन्द्रियसुखमेव परुषार्थः इति तेषां वाणी जगति सर्वान् जनान् आकर्षति। बहूनां जनानां चित्तम् आकर्षन्तीति कारणात् चार्वाकाः लोकायतिकाः इति। माधवाचार्यः चार्वाकमतम् लोकायतमतमिति उक्तवान्। तद्यथा तस्य चार्वाकमतस्य लोकायतमित्यन्वर्थमपरं नामधेयमिति। चार्वाकाः नास्तिकाः। ये वेदस्य प्रामाण्यं स्वीकुर्वन्ति ते आस्तिकाः। ये तावत् वेदस्य प्रामाण्यं न स्वीकुर्वन्ति ते नास्तिकाः इति। चार्वाकाः वेदं निन्दन्ति अतः ते नास्तिकाः इति प्रसिद्धम्।



## पाठगतप्रश्नाः-१

१. चार्वाकाणाम् अपरनामधेयं किम् अस्ति।
२. चार्वाकाणाम् वेदस्य प्रामाण्यम् अङ्गीकुर्वन्ति वा।
३. चार्वाकाः पुरुषार्थौ कौ भवतः।
४. चार्वाकाणाम् गुरुः कः।
५. चार्वाकदर्शने पुरुषः कः।
६. चार्वाकाणां मते सुखस्य स्वरूपं किम्।
७. चार्वाकदर्शने कति तत्त्वानि सन्ति।
८. चार्वाकमते आत्मनः स्वरूपं किम्।
९. वैतण्डिकाः के सन्ति।



१०. सर्वदर्शनग्रन्थस्य लेखकः कः।

## ७.४) चार्वाकमते प्रमा प्रमाणानि च

चार्वाकदर्शने प्रमेयतत्त्वानां स्थूलं स्वरूपमेव वास्तविकं स्वीकृतम्। अतः स्थूलपदार्थानां ज्ञानाय तत्र प्रत्यक्षमेवोपयुक्तम् अमन्यत। ये इन्द्रियप्रत्यक्षस्य विषयाः न सन्ति, ते काल्पनिका एव भवन्तीति न्यायेन प्रत्यक्षस्यैव प्रामाण्यं चार्वाकमतेऽभिमतम्। पञ्चज्ञानेन्द्रियैः शब्द-स्पर्श-रूप-रस-गन्धानां पञ्चानामेव विषयाणां ज्ञानं भवति, अतः पञ्चैव सत्तात्मकपदार्थाः सन्ति। एभ्योऽतिरिक्तः कः अपि विषयः कल्पनामात्रः प्रतीयते। तस्य च प्रामाणिकता नास्ति। सर्वेषु भारतीयदर्शनेषु इन्द्रियातीतानां परोक्षणाञ्च पदार्थानां ज्ञानाय अनुमानस्य प्रामाण्यं स्वीकृतं, किन्तु चार्वाकमतेऽनुमानस्य प्रामाण्यं नास्ति। यतो हि अनुमानजन्यं ज्ञानं केवलं सम्भावनात्मकमेव भवति न तु निश्चयात्मकम्। सम्भावना सर्वदा सत्यमेव स्यादिति नास्ति नियमः। चार्वाकैः कार्यकारणभावोऽपि नैव स्वीकृतः। यतः प्रत्यक्षयोः सुख-दुःखयोः कारणम् अप्रत्यक्षरूपेण कल्पितं पापपुण्यादिकं नास्ति। इदमावश्यकं नास्ति यत् कश्चित् बुद्धिजीवी परिश्रमी च मनुष्यः केवलं पूर्वकृतपुण्यबलेनैव सुखी वर्तते। अथवा कश्चित् बुद्धिहीनोऽलसश्च पूर्वकृतपुण्याभावे अथवा पूर्वकृतपापैरेव दुःखी वर्तते इति वक्तुं न शक्यते। मानवः बुद्धेः न्यूनाधिक्यकारणात् कार्यप्रवृत्तौ स्वभावतः कदाचित् सुखी कदाचिच्च दुःखी भवतीति चार्वाकाः कथयन्ति।

पापपुण्ययोः कृते सदसत्कर्मणां व्याप्तिं नैयायिका अपि स्वीकुर्वन्ति, किन्तु तेषाम् एषा व्याप्तिः सिद्धा नास्ति। यतो हि कस्यापि कार्यस्य उत्पत्तौ किमपि कारणं नैव भवति। स्वभावेनैव कार्यस्य निष्पत्तिर्भवति। अन्यथा कण्टकेषु दृश्यमानायाः तीक्ष्णतायाः को हेतुरिति तत्त्वान्वेषणे कश्चिद् हेतुः अवश्यम् उपलभ्येत। स च हेतुर्लभते एव न, अतः कार्यकारणभावस्य सिद्धौ अपि हेत्वभावो दृश्यते। सृष्टिप्रलययोरपि कार्यकारणभावो नास्ति। चतुर्णां भूतानाम् आनुपातिकसम्मिश्रणादेव जगत् स्वयमेवास्तित्वम् आप्नोति। तस्य चानुपातिकस्थितेर्विलयात् प्रलयो भवति। किन्तु जगतः आविर्भावतिरोभावौ प्राणिपदार्थानां संयोगवियोगौ च स्वाभाविकावेव स्तः। कार्यकारणयोः साहचर्यस्य सिद्धेरभावात् अनुमानानां प्रमाणं नास्ति, कार्यकारणभावः अपि असिद्धः अस्ति। चार्वाकदर्शने शब्दोऽपि प्रमाणत्वेन न स्वीकृतः। कश्चित् जनः सर्वथा सत्यमेव वदतीति तस्य सत्यनिष्ठायां निर्भरयोग्यता नास्ति। शब्दोऽपि पुनः अनुमानतुल्यः। वेदानामपि प्रामाण्यं नास्ति, यतो हि वेदेष्वपि बहूनि विरोधीनि वचनानि प्राप्यन्ते। अनेके निरर्थकाः शब्दाः अपि वेदेषु प्रयुक्ताः सन्ति। एतदतिरिक्तं वेदेषु एतादृशानाम् पदार्थानां वर्णनमपि प्राप्यते, येषां प्रत्यक्षं सम्भवं नास्ति। एवञ्चेत् परस्परविरोधिनां निरर्थकानां काल्पनिकानां च विषयाणां निरूपणम् येषु विहितं तेषां वेदे कथं प्रामाण्यं स्यात्। वैदिककर्मकाण्डैस्तु इदमेव प्रतीयते यत् कैश्चित् धूर्तैरेव लोकप्रवञ्चनार्थं स्वार्थसाधनाय वा वेदानां रचना विहिता। तथाहि शास्त्रम्-

**त्रयो वेदस्य कर्त्तारो भण्ड-धूर्त्त-निशाचराः।**
**जर्फरी-तुर्फरीत्यादि पण्डितानां वचः स्मृतम्॥ इति।**



## ७.५) प्रत्यक्षैकप्रमाणवादः

प्रमीयते अनेन इति प्रमाणम्। प्रमाणं प्रमाज्ञानस्य करणमिति। प्रमा नाम यथार्थज्ञानमिति। चार्वाकमते संशयविपर्ययशून्यं ज्ञानमेव प्रमा इति। चार्वाकमते प्रमायाः करणं प्रत्यक्षमेव न अन्यत्। चार्वाकमते एकमेव प्रमाणं प्रत्यक्षमेव प्रमाणमिति। माधवाचार्यः उक्तवान् यत् -प्रत्यक्षैकप्रमाणवादितया अनुमानादेरनङ्गीकारेण प्रामाण्याभावात्। किञ्च प्रत्यक्षस्य सर्वप्रमाणेषु ज्येष्ठत्वात् प्रत्यक्षमेव प्रमाणम्। अनुमानादीनां प्रत्यक्षे एव अन्तर्भावः प्रत्यक्षाधीनत्वात्।

चार्वाकदर्शने प्रत्यक्षं विहाय अनुमानादीनां प्रमाणानां ग्रहणं नास्ति। माधवाचार्यः सर्वदर्शनग्रन्थे प्रोक्तवान् यत् प्रत्यक्षैकप्रमाणवादितया अनुमानादेः अनङ्गीकारेण प्रामाण्याभावात् इति। यस्य उपलब्धिः न भवति तत् नास्ति। विपरीतेन यस्य उपलब्धिः भवति तदस्ति। इन्द्रियेण प्रत्यक्षलब्धवस्तुनः एव अस्तित्वं वर्तते। इन्द्रियेण उत्पन्नः सम्यग् अपरोक्षानुभवः एव प्रत्यक्षम् इति। प्रत्यक्षम् अपरस्य अपेक्षां न करोति अतः अपरोक्षम् इति। अतः संशयशून्यं विपर्ययशून्यं प्रत्यक्षमेव प्रमा। अस्य च प्रमायाः करणमेव प्रमाणमिति।

चार्वाकाः वदन्ति यत् प्रत्यक्षस्य श्रेष्ठत्वविषये न कोपि वितर्कः अस्ति। एतत् तु सत्यमेव यत् सर्वे भारतीयदार्शनिकाः प्रत्यक्षप्रमाणस्य श्रेष्ठत्वम् अङ्गीकृतवन्तः। अवितर्कितसर्वजनमान्यं प्रत्यक्षमेव प्रमाणम्। कथं दृश्यमानवस्तुविषये प्रश्नः वा शंका स्यात्।

ये अनुमानम् उपमानं शाब्दं च प्रमाणत्वेन अङ्गीकुर्वन्ति ते अपि प्रत्यक्षस्य एव जयगानं कुर्वन्ति। यतो हि प्रत्यक्षमेव अनुमानादीनां उपजीव्यम् इति। अनुमानोपमानशब्दः प्रत्यक्षधीनः। यतो हि बह्निधूमयोः साहचर्यप्रत्यक्षेन एव वर्तमानं धूमं दृष्ट्वा बह्ने अनुमानं क्रियते। अतः अनुमानं अपि प्रत्यक्षाधीनम्। यतो साहचर्यप्रत्यक्षम् यदि न स्यात् तर्हि अनुमानम् असम्भवं स्यात्। तथैव गवयत्वविशिष्टपशौ गोसादृश्यं दृष्ट्वा गवयशब्दस्य वाच्यत्वनिर्णयः एव उपमिति। उपमितौ अज्ञातपदार्थे ज्ञातपदार्थस्य सादृश्यप्रत्यक्षम् आवश्यकम्। तत्सादृश्यप्रत्यक्षवशात् एव अज्ञातपदार्थेन सह ज्ञातपदार्थस्य निश्चयात्मकः अनुभवो जायते। अतः प्रत्यक्षस्य आवश्यकता वर्तते। अपि च शब्दप्रमाणम् अपि प्रत्यक्षस्य अधीनम्। आप्तव्यक्तेः वाक्यम् एव शब्दप्रमाणमिति। यः यथार्थवक्ता स एव आप्तः इति। अतः चार्वाकाणां मतम् सत्यम्।

## ७.६) चार्वाकदर्शनस्य तत्त्वमीमांसा

चार्वाकदर्शनानुसारं तत्त्वानां स्थूलं दृष्टिभूतं स्वरूपमेव यथार्थम् अस्ति। तेषां स्थूलतत्त्वानां स्वरूप-लक्षण-प्रयोजनादि विचाराः चार्वाकदर्शने वैशद्येन विहिताः सन्ति। चार्वाकदर्शनानुसारं पृथ्वी-जलं-वायुः-तेजश्चेति चत्वार एव प्रमेयपदार्थाः भवन्ति। एभ्य एव चतुर्भ्यः स्थूलस्य ब्रह्माण्डस्य रचना विहिता। परवर्तिभिश्चावर्किः आकाशमनप्राणादीनामपि प्रमेयपदार्थेषु एव परिगणनं कृतम्। अनेन अनुमीयते यत् अतिस्थूलवादिनः चार्वाका अतिप्राकृता आसन्। एभ्य एव मूलतत्त्वेभ्यः अस्य दृश्यमाणस्य जगतः शरीरस्य ज्ञानेन्द्रियाणां कर्मेन्द्रियाणाञ्चोत्पत्तिः भवति। उत्पत्तेः क्रमसन्दर्भे चार्वाकाः मौनम् सन्ति। सृष्टौ कस्यापि अदृष्टस्य कुत्रापि कारणता नास्ति। अतएव इदं जगत् चतुर्ण्णां भूतानाम् आनुपातिक-



समन्वयस्य आकस्मिकः परिणामः अस्ति। जीवनस्य सम्बन्धेऽपि चार्वकाणाम् अयमेव सिद्धान्तोऽस्ति यत् शरीरस्य अभावे चैतन्यं नैव तिष्ठति। शरीरस्य सत्तायामेव चैतन्यस्य सत्ता सिद्ध्यति। अनेन शरीरमेव चैतन्यरूपं आत्माऽस्तीति स्पष्टं भवति। यथा पदार्थानाम् उचितसम्मिश्रणस्य परिणामस्वरूपं किण्वादिद्रव्येभ्यो मदशक्तिराविर्भवति तथैव पृथिव्यादि भूतचतुष्टयस्य संयोगात् चैतन्यं स्वत एवोत्पद्यते।

चार्वाकदर्शनस्य विकासक्रमे स्थूलात् सूक्ष्मं प्रति तत्त्वचिन्तनस्य प्रवृत्तिः जाता। अतः परवर्तिभिः कैश्चित् चावकैः इन्द्रियाणि एव आत्मा इति सिद्धान्तम् उपस्थाप्य देहात्मवादस्य खण्डनं कृतम्। कैश्चिदाचार्यैः प्रामाण्यवादस्यापि स्थापना कृता। केचन चार्वाकाः मनः एव आत्मेति स्वीकुर्वन्ति। तथापि चार्वाकमतानुयायिनां स्थूला दृष्टिः अन्तर्मुखी न सञ्जाता।

## ७.७) सृष्टिप्रक्रिया

चार्वाकाः जडपदार्थस्य सत्यतां स्वीकुर्वन्ति। एतेषां मते इन्द्रियप्रत्यक्षेण केवलं पृथिवी आपः तेजः वायुः इति चतुर्णाम् एव उपलब्धिः भवति। अखिलस्य जगतः चतुर्णां मिश्रणेन सृष्टिः भवति। आकाशस्य अनुमानगम्यत्वात् न स्वीकारः। जीवः एतेषां भूतानां संमिश्रणे सृष्टः। चार्वाकाः परमाणुम् न स्वीकुर्वन्ति। परमाणोः प्रत्यक्षेण अदृश्यत्वात्। स्थूलसावयवपरमाणुतः सृष्टिः भवति। अकस्मात् एव भवति न किञ्चिदपेक्षं कार्यं जीवः। चतुर्णां भूतानां समन्वयेन चैतन्यम् उत्पद्यते। चैतन्यम् आगुन्तकधर्मः जडदेहस्य आर्विभावकाले आगच्छति विनाशकाले गच्छति। जगतः कारणरूपेण ईश्वरस्य अङ्गीकारस्य आवश्यता नास्ति। यथा किण्वादिभ्यः मदशक्तिवत् चैतन्यम् उपजायते। शरीरस्य नाशे विनाशो भवति चैतन्यस्य।

## ७.८) देहात्मवादः

चार्वाकमते देहः एव आत्मा। प्रत्यक्षवेद्यत्वात् देहम् अतिरिच्य आत्मा कोपि नास्ति। चैतन्यविशिष्टदेहः आत्मा। अतः देहस्य विनाशे आत्मनः विनाशो भवति। यत्र चैत्यन्यस्य प्रत्यक्षं तत्रैव स्थूलदेहः दृश्यते। स्थूलोहं,मम शरीरमित्यादि व्यवहारस्तु राहोः शिरः इत्यादिवत् औपचारिकः।

## ७.९) मोक्षस्वरूपम् मोक्षसाधनञ्च

दर्शनशास्त्रस्य मोक्षरूपफले एव तात्पर्यम्। चार्वाकदर्शने अपि मोक्षस्य स्वरूपम् प्रोक्तम्। कण्टकादिजन्यं दुःखमेव नरकः। लोकसिद्धो राजा परमेश्वरः। देहस्य उच्छेदः मोक्षः। अङ्गनाद्यालिङ्गनादिजन्यं सुखमेव पुरुषार्थः। आत्मा नास्ति। परलोकः नास्ति। अपवर्गः नास्ति। अग्निहोत्रादियज्ञस्य फलं नास्ति। किञ्च धर्मार्थकाममोक्षेषु चतुर्षु अर्थकामौ पुरुषार्थौ इति। देहस्य उच्छेदपर्यन्तं तस्य रक्षणं एव मोक्षसाधनम्।

## ७.१०) चार्वाकसम्प्रदाये प्रसिद्धाः श्लोकाः

**यावज्जीवेत् सुखं जावेन्नास्ति मृत्योरगोचरः।**



**भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥**

**अन्वयः-**

यावत् जीवं सुखं जीवेत्। मृत्योः अगोचरः नास्ति (किमपि)। भस्मीभूतस्य देहस्य पुनः कुतः आगमनम्।

**साधारणार्थः-**

चार्वाकदर्शने प्रसिद्धः अयं श्लोकः। यावत् कालपर्यन्तं जीवस्य आयुः तावत् कालपर्यन्तं सुखेन जीवनं यापयन्तु। यतो हि देहस्य विनाशो एव मोक्षः। ततः मृत्योः परं किमपि नास्ति प्रत्यक्षीगोचरः। मृत्युः एव जीवस्य अन्तिमसीमा। अतः चिन्ता न कर्तव्या। भस्मीभूतस्य शरीरस्य पुनः जन्म न भवति। अतः देहस्य सुखाय ऋणं कृत्वा घृतस्य पानं कुर्वन्तु। परलोकः किमपि नास्ति। देहस्य नाशे एव सर्वं समाप्तम् भवति।

**सन्धिविच्छेदः-**

मृत्योरगोचरः- मृत्योः-अगोचरः

पुनररागमनम्- पुनः- आगमनम्

जीवेन्नास्ति- जीवेत्-नास्ति

यावज्जीवं-यावत्-जीवम्

**अङ्गनालिङ्गनाज्जन्यसुखमेव पुमर्थता।**
**कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते।**

**अन्वयः-**

अङ्गनालिङ्गनात् जन्यसुखम् एव पुमर्थता भवति। कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते।

**साधारणार्थः-**

चार्वाकमते पुरुषार्थः भवति स्त्र्यादिस्पपर्शजन्यं सुखम्। तन्नाम शरीरभोगः एव सुखम्। पुरुषैः जगति तदेव प्राथ्यर्ते। सर्वेषां सुखवासना वर्तते। कण्टकादिव्यथाजन्यं दुःखं नरकमिति। आदिपदेन जराव्याधिनां ग्रहणम्। इहलोकं विहाय अन्यत्र सुखम् नास्ति। अत एव यावत् जीवेत् सुखं जीवेत्। ऋणं कृत्वा घृतं पिबेत् इति प्रवादः अपि चार्वाकसम्प्रदाये सुप्रसिद्धः। किञ्च शीररस्य क्लेशं एव कष्टम्। अतः सर्वे प्राणिनः शरीरक्लेशनाशाय तत् तत् वस्तूनि स्वीकुर्वन्ति।

**लोकसिद्धो भवेद्राजा परेशो नापरः स्मृतः।**
**देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते।**

**अन्वयः-**

लोकसिद्धो  राजा (एव) परेशो भवेत्। न अपरः परेशः स्मृतः। देहस्य नाशो मुक्तिः। न तु ज्ञानात् मुक्तिः इष्यते।



**साधारणार्थः-**

चार्वाकाः ईश्वरं न स्वीकुर्वन्ति। तेषां मते प्रत्यक्षसिद्धो राजा एव ईश्वरः। यतो हि ते परलोकं न अङ्गीकुर्वन्ति। किञ्च ईश्वरः प्रत्यक्षसिद्धो न भवति। अपि च राजा एव जगति सर्वाः प्रजाः पालयति रक्षति च। अत एव राजा एव इहजगतः कर्ता न तु अलौकिकः ईश्वरः। किञ्च देहस्य विनाशः एव मुक्तिः। जीवस्य अन्तिमा गतिः। ततः न अन्यत् किमपि प्राप्तव्यं वर्तते जीवस्य। अपि च वेदान्तिसांख्यादिभिः यथा ज्ञानात् मोक्षः स्वीक्रियते। तथा चार्वाकाः न अङ्गीकुर्वन्ति। तेषां ज्ञानात् मुक्तिः नास्ति।

**अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः।**
**चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते।**

**अन्वयः-**

अत्र चत्वारि भूतानि भवन्ति भूमिवार्यनलानिलाः च। चतुर्भ्यः खलु भूतेभ्यः चैतन्यम् उपजायते।

**साधारणार्थः-**

चार्वाकाः चत्वारि भूतानि स्वीकुर्वन्ति। एतेषां भूतानां संमिश्रणे एव सृष्टिप्रक्रिया भवति। आकाशस्य अदृश्यत्वात् न अङ्गीकारः। अपि च यथा किण्वादिभ्यः मदशक्तिवत् अत्रापि सृष्टिप्रक्रियायां जडेभ्यः भूतेभ्यः चैतन्यम् उपजायते। जीवस्य सृष्टिः एवंप्रकारेण भवति। न ईश्वरः अत्र कारणम्। जडेभ्यः एव जीवस्य सृष्टिः।

**न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।**
**नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः।**

**अन्वयः-**

न स्वर्गः अस्ति। न अपवर्गः अस्ति। न वा आत्मा पारलौकिकः अस्ति। वर्णाश्रमादीनां क्रिया नैव फलदायिका अस्ति।

**साधारणार्थः-**

स्वर्गनामकं स्थानं किमपि नास्ति। नापि अपवर्गरूपफलम् अस्ति। आत्मा देहरूपः, न पारलौकिकः। न च देहात् भिन्नः कोपि आत्मा वर्तते। अपि च वेदविहितकर्मकरणात् यत् स्वर्गादिरूपफलं लभ्यते तदपि मिथ्या। लोकायतिकाः वेदस्य मिथ्यात्वं स्वीकुर्वन्ति। अत वेदविहितकर्म अपि मिथ्या। अतः मिथ्यारूपकर्मणा किं फलं न प्राप्यते। देहभोगादिरूपसुखफलम् एव अन्तिमफलत्वेन कल्प्यते।

## ७.११) चार्वाकग्रन्थसमूहानां परिचयः

चार्वाकदर्शनं यद्यपि जगति बहु प्रसिद्धं तथापि तेषां प्रमाणभूतग्रन्थरूपेण तथा किमपि न प्राप्यते। मध्वाचार्यस्य सर्वदर्शनसंग्रहे तेषां दर्शनस्य काचित् रूपरेखा वर्तते। परन्तु विभिन्नदर्शनग्रन्थेषु पूर्वपक्षरूपेण चार्वाकानाम् वचांषि प्राप्यन्ते। तद्यथा न्यायकुसुमाञ्जलिग्रन्थे, न्यायमञ्जुरीग्रन्थे, ब्रह्मसिद्धिग्रन्थे. षड्दर्शनसमुच्चयग्रन्थे, पूर्वपक्षत्वेन उल्लेखः प्राप्यते। एतेभ्यः ग्रन्थेभ्यः एव चार्वाकदर्शनस्य मतं स्पष्टं ज्ञायते।





## पाठगतप्रश्नाः-२

११. चार्वाकनये कति प्रमाणानि सन्ति।

१२. चार्वाकाणां मते प्रमा का।

१३. चार्वाकमते अपवर्गः अस्ति वा।

१४. चार्वाकमते परलोकः अस्ति वा।

१५. चार्वाकमते दुःखस्य स्वरूपं किम्।

१६. देहात्मवादः कः।



## पाठसारः-

चार्वाकाः नास्तिकाः भवन्ति। वेदस्य प्रामाण्यं न अङ्गीकुर्वन्ति। तेषां मतं स्तूलपदार्थाः एव जगति वर्तन्ते। चार्वाकाणाम् एकमेव प्रमाणं प्रत्यक्षमिति। अनुमानादीनां तु प्रत्यक्षे एव अन्तर्भावः वर्तते। चार्वाकाः वदन्ति देहः एव मोक्षः। देहोच्छेदः मोक्षः। शरीरातिरिक्तः आत्मा नास्ति। चार्वाकाः लोकायतिकाः इति अभिधानं चार्वाकाणां वर्तते। चार्वाकाः देहात्मवादं स्वीकुर्वन्ति। तेषां मते चत्वारि एव भूतानि वर्तन्ते। एतेषाम् एव भूतानां संमिश्रणे सृष्टिक्रिया भवति। तेषां मते प्रत्यक्षसिद्धो राजा एव ईश्वरः। नृपं विहाय पृथक् ईश्वरः नास्ति। यदि स्यात् तर्हि दृश्येत। परन्तु नैव ईश्वरः केनापि प्रत्यक्षीक्रियते। अतः राजा एव ईश्वरः। चार्वाकाः पुनर्जन्मवादं नैव अङ्गीकुर्वन्ति। यतो हि तेषां मते मृत्योः परं किमपि नास्ति। भस्मीभूतस्य देहस्य पुनः आगमनं भवति। अपि च अङ्गनादिजन्यं सुखम् एव परमसुखम्। अतः यावत् जीवेत् सुखं जीवेत् इति तेषां निर्णयः। चार्वाकाः भोगवादं स्वीकुर्वन्ति।



## पाठान्तप्रश्नाः-

१. चार्वाकाणां देहात्मवादं विशदीक्रियताम्।

२. चार्वाकाणां सम्प्रदायविषये प्रबन्धं लिखत।

३. चार्वाकाणां मोक्षस्य व्याख्यानं कुरुत।

४. सृष्टिप्रक्रियां लिखत चार्वाकनये।

५. चार्वाकाः कति प्रमाणानि अङ्गीकुर्वन्ति तत् विलिख्य प्रत्यक्षवादं लिखत।

६. चार्वाकाणां नास्तिकत्वं आलोचय।

७. चार्वाकाणां तत्त्वमीमांसां लिखतु।



८. यावज्जीवेत् सुखं जीवेत् इत्यस्य श्लोकस्य तात्पर्येण व्याख्यानं कुरुत।



## पाठगतप्रश्नानाम् उत्तराणि-

**उत्तराणि १**

१. चार्वाकाणाम् अपरनामधेयम् लोकायतिकाः इति।

२. न, चार्वाकाः वेदस्य प्रामाण्यं न अङ्गीकुर्वन्ति।

३. कामार्थौ एव चार्वाकाणां पुरुषार्थौ भवतः।

४. चार्वाकाणां गुरुः आचार्यः वृहस्पतिः।

५. चैतन्यविशिष्टः कायः पुरुषः।

६. अङ्गनादिजन्यं सुखमेव परमसुखमिति चार्वाकमतम्।

७. चार्वाकदर्शने पृथिव्यप्तेजोवायवः इति चत्वारि तत्त्वानि सन्ति।

८. चार्वाकमते चैतन्यविशिष्टदेहः एव आत्मा भवति।

९. चार्वाकाणाम् एव अपरनामधेयं भवति वैतण्डिकाः इति।

१०. सर्वदर्शनग्रन्थस्य लेखकः भवति माधवाचार्यः।

**उत्तराणि २**

११. चार्वाकमते प्रत्यक्षम् एकमेव प्रमाणम् इति।

१२. प्रत्यक्षजन्यज्ञानम् एव प्रमा। अन्यत् ज्ञानं तु अप्रमा इति।

१३. न, चार्वाकमते अपवर्गः नास्ति।

१४. न, चार्वाकमते परलोकः नास्ति।

१५. कण्टकादिजन्यं कष्टमेव परमदुःखम् इति।

१६. चार्वाकाः चैतन्यविशिष्टदेहमेव आत्मत्वेन स्वीक्रियते। शरीरं विहाय आत्मा कोऽपि नास्ति। अयमेव वादः देहात्मवादः इति।

॥ इति सप्तमः पाठः ॥



८

# बौद्धदर्शनम्

## प्रस्तावना

षट्सु नास्तिकदर्शनेषु बौद्धदर्शनम् अन्यतमम् अस्ति। बौद्धदर्शनस्य भारतीयदर्शनजगति अतीवं माहात्म्यं वर्तते। आधुनिके कालेऽपि बौद्धदर्शनस्य प्रभावः सर्वत्र दृश्यते। यद्यपि नास्तिकाः भवन्ति तथापि सनातनधर्मस्य प्रचारः कृतः भगवता बुद्धेन। बौद्धधर्मस्य आरम्भः कथं जातः तदत्र ज्ञायते। अपि च अत्र बौद्धधर्मस्य प्रमा-प्रमाणानि च अत्र आलोच्यन्ते। विषयः सरलया भाषया आलोच्यते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्

- बौद्धदर्शनस्य उद्भवं ज्ञास्यति।
- त्रिपिटकं ज्ञास्यति।
- भगवतः बुद्धस्य जीवनं ज्ञास्यति।
- बौद्धधर्मस्य प्रमाणानि ज्ञास्यति।
- बौद्धधर्मस्य प्रमेयं ज्ञास्यति।
- बौद्धदर्शनस्य मोक्षं मोक्षसाधनं च ज्ञास्यति।
- बौद्धदर्शनस्य पदार्थान् ज्ञास्यति।

## ८.१) भूमिका

निखिलेऽपि भूमण्डले प्रसिद्धस्य महात्मनो बुद्धस्य महत्त्वम् अतिप्रसिद्धम्। अयं महामानवः महापुरुषः अहिंसाम् उपदिदेश। अयमेव महापुरुषः जनानां दुःखनिवारणाय स्वकीयं राज्यं त्यक्तवान्।

अयं महापुरुषः शाक्यवंशीयस्य कपिलावस्तुनरेशस्य शुद्धोदनस्य सुपुत्रः आसीत्। अस्य प्रथमं नाम सिद्धार्थ इति आसीत्। बाल्यादेव सिद्धार्थस्य चित्तं विषयेषु नारमत। पुत्रस्य एतादृशीं विरक्तिं विलोक्य पिता तस्य कृते सकलानि सुखसाधनानि समायोजयत्। परं सिद्धार्थस्य चित्तं तेषु मनाग् अपि आसक्तं नाभवत्। अथ कदाचित् आतुरं, कदाचित् वृद्धम्, अनन्तरं मूकं ततः सन्न्यासिनं च विलोक्य तस्य हृदये महद् वैराग्यम् अजायत। अतः मानवानां दुःखनिवृत्तये राजकुमारः सिद्धार्थः रात्रौ प्रियां पत्नीं नवजातं पुत्रं च विहाय गृहात् प्राव्रजत्।



ततः स प्रथमं पञ्चभिः ब्राह्मणैः सह तपः आचरत्, किन्तु तेन तस्य मनः पूर्णसन्तोषं नाभजत। अनन्तरं सः महता श्रमेण सतताभ्यासेन तपस्यया च एकस्मिन् दिने बोधम् अलभत। ततः प्रभृतिः स बुद्ध इति प्रसिद्धोऽभवत्। ततः स जनेभ्यः उपादिशत् "जगदिदं दुःखमयम्, दुःखस्य मूलं कामना, कामनायाः उन्मूलनम् साध्यम्, एवं दुःखनिवृत्तिः सम्भाव्या" इति। महात्मा बुद्धः एतेषां चतुर्णाम् आर्यसत्यानां प्रचारम् अकरोत्। सः जनानां दुःखनिवारणाय तेषां कल्याणाय च उपादिशत्। इमे तस्य प्रमुखाः उपदेशाः, मनसा वाचा कर्मणा अहिंसायाः पालनं कुर्यात्, सदा सत्यं वदेत्, कस्यापि किमपि वस्तु कदापि न चोरयेत्, सर्वान् समदृष्ट्या पश्येत्, सत्कर्म कुर्यात्। सर्वेषु दयामाचरेत्, शरणागतान् रक्षेत्, अधिकं संग्रहं न कुर्यात्, ब्रह्मचर्यं पालयेत् इति च।

एतेषां पालनेनैव सुखं शान्तिश्च भवितुम् अर्हति। महात्मनो बुद्धस्य विचाराणाम् उपदेशानां च प्रचारः न केवलं भारते, अपि तु चीनजापानलङ्कादिषु देशेषु लोकप्रियताम् अलभत।

अस्य दर्शनस्य आद्यप्रवर्तकः श्रीगौतमबुद्धः अस्ति। शुद्धोदनस्य मायादेव्याः च सुतः गौतमगोत्रजः क्षत्रियः सिद्धार्थः एव पश्चात् बोधोदयात् बुद्धः इति प्रथितः अभवत्। बौद्धदर्शनस्य परमसिद्धान्तः 'दु:खस्य मूलम् आशा' इत्यस्ति। बौद्धानां सम्प्रदायः माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिकभेदात् चतुर्धा विभज्यते। प्रपञ्चम् अधिकृत्य तेषां दृष्टिः एवं श्रूयते-

मुख्यो माध्यमिको विवर्तमखिलं शुन्यस्य मेने जगत्
योगाचारमते तु सन्ति मतयस्तासां विवर्तोऽखिलः।
अर्थोऽस्ति क्षणिकस्त्वसावनुमितो बुद्धेति सौत्रान्तिकः
प्रत्यक्षं क्षणभङ्गुरं च सकलं वैभाषिको भाषते। इति॥

बौद्धदर्शनस्य प्रचारः प्रसारश्च पालिभाषायाम् आसीत्। संस्कृतौ अवगणना एव बुद्धमतनाशकारणेषु अन्यतमा इति विवेकानन्दादयः कथितवन्तः इति अत्र स्मर्तव्यम्। प्रत्यक्षम् अनुमानम् इति द्वे प्रमाणे बौद्धाः अङ्गीकुर्वन्ति। बौद्धदर्शनम् ऐतिहासिककालक्रमेण जैनदर्शनस्य परवर्त्ती अस्ति। अस्येदं कारणं वक्तुं शक्यते, यत् महावीरपर्यन्तं जैनतीर्थङ्कराणाम् अन्येषां दार्शनिकानां च साहित्ये कुत्रापि बौद्धदर्शनस्य उल्लेखो नास्ति, किन्तु महावीरस्य सिद्धान्ताः बौद्धनिकायेषु उपलभ्यन्ते। अनेन सिद्ध्यति यत् बौद्धधर्मो जैनधर्मापेक्षया परवर्त्ती अस्ति। इदम् ऐतिहासिकं सत्यम् अस्ति। बौद्धदर्शनस्य प्रवर्तको भगवान् बुद्ध आसीत्। इयमपि ऐतिहासिकी घटनाऽस्ति। बुद्धस्य पूर्वनाम् सिद्धार्थ इत्यासीत्। अस्य जन्म ई.पू.२२६ इत्यवर्तत। अस्य पिता शक्यवंशीयो नृपः शुद्धोदनः आसीत्। अस्य माता मायादेवी अस्य जन्मनः एकसप्ताहानन्तरमेव दिवङ्गताऽभवत्। अस्य जन्मसमये कपिलवस्तुनो राजज्योतिर्विद्भिः भविष्यवाणी कृता, यदमुष्य महाभिनिष्क्रमणं भविता, धर्मप्रवर्तकश्चायं भवेत् इति। तदनुसारमेव सिद्धार्थः एकोनविंशतिवयसि स्वपत्नीपुत्रौ परित्यज्य सांसारिकदुःखानाम् आत्यन्तिकविनाशाय उपायान्वेषणप्रयोजनात् राजभवनमपि त्यक्तवान्। सः चिरशान्तिलाभाय ज्ञानार्जनाय च गहनं वनं प्रविष्टवान्। ज्ञानान्वेषणप्रयत्ने सर्वप्रथमं सः सांख्यतत्त्वविदः अराडकलामस्य शिष्यत्वे सत्यानुसन्धानं कृतवान्। किन्तु असन्तुष्टे सति विविधस्थानेषु ज्ञानोपदेशानां श्रवणानन्तरम् उरुवेलायां कठोरं तपः कृत्वा आर्यसत्य-चतुष्टयं विज्ञातवान्। तस्मात्तस्य निखिलं कल्मषं विनष्टं बुद्धत्वञ्च सम्प्राप्तम्। तदनन्तरं



सर्वप्रथमं सः सारनाथे कौण्डिन्यादीन् पञ्च शिष्यान् उपदिश्य धर्मचक्रं प्रवर्तितवान्। जनकल्याणाय तस्योपदेशानां भाषा मागधी आसीत्। धर्मोपदेशं कुर्वाणस्य तस्य अशीतिवर्षीयं दीर्घजीवनं वैशाखमासस्य पूर्णिमायाः पर्याप्तं महत्वं स्वीक्रियते। यतो हि एषा तिथिः बुद्धस्य जन्मनिर्वाणयोः तिथिरस्ति।

भारतीयो धर्मगुरुः भगवान् बुद्धः ज्ञानिषु श्रेष्ठः इति विख्यातम्। गौतम्या पोषितः इति सः गौतमबुद्धः। कोशलगणराज्यस्य राज्ञः शाक्यवंशीयस्य शुद्धशीलस्य शुद्धोदनस्य तथा तत्पत्न्याः पतिव्रतायाः मायादेव्याश्च पुत्रः सिद्धार्थः। असौ वैराग्यम् अवलम्ब्य गौतमबुद्धः अभवत्।

सिद्धार्थः महान् सम्राट् वा परिव्राट् वा भविष्यतीति दैववाणी आसीत्। पितुः अतिप्रयत्नम् अपि अतिक्रम्य दैवप्रचोदितः सिद्धार्थः रोगिणम्, अकिञ्चनं वृद्धं, मृतं नरं तथा स्थितप्रज्ञं मुनिं दृष्ट्वा वैराग्येण वनं गतः। तत्र बोधिवृक्षस्य छायायां तपस्तप्त्वा गौतमबुद्धो बभूव। तस्माच्च सः नश्वरं तत्कालीनमात्रं साम्राज्यं त्यक्त्वा आर्तजनानां हृदयसिंहासने शाश्वतं स्थानं प्राप्य अधुनापि तत्र विराजते।

देशेऽस्मिन् गौतमबुद्धस्य काले धर्मस्य स्थाने सर्वत्र अधर्मस्यैव प्रचारः विजृम्भमाणः आसीत्। यज्ञयागादिषु पशुबलिः नरबलिः इत्यादयः हिंसाक्रमाः प्रचलिताः अवर्तन्त। गौतमबुद्धस्तु 'अहिंसा परमो धर्मः' इति सनातनं तत्त्वं पुनः संस्थापितवान्।

गौतमबुद्धस्य मार्गः बौद्धधर्मः इति क्रमेण ख्यातः। सम्राजः अशोकादारभ्य अगणिताः चक्रवर्तिनः बौद्धधर्मस्य अनुयायिनो भूत्वा विदेशेष्वपि अस्य प्रचारमकुर्वन्। चीन-जपानादिदेशेषु अद्यापि बौद्धधर्मीयाः बहवः सन्ति।

## ८.२) सम्प्रदायपरिचयः

भगवता बुद्धेन बौद्धदर्शनं प्रवर्तितम्। भारतीयशास्त्राधारेषु बौद्धदर्शनस्य प्रभावः विशेषरूपेण दृश्यते। बौद्धमूलग्रन्थाः भारते लुप्तप्रायाः सन्ति। विदेशीयपण्डितानां संशोधनस्य फलतः इदानीं केचन् ग्रन्थाः दृश्यन्ते। भगवतः बुद्धस्य अनन्तरं बौद्धेषु बह्व्यः शाखाः उत्पन्नाः। ताश्च चतस्रः प्राधान्येन- वैभाषिकाः, सौत्रान्तिकाः, योगाचाराः, माध्यमिकाः चेति। वैभाषिकाणां हीनयानसम्प्रदायः। अन्येषां त्रयाणां महायानसम्प्रदायः। बौद्धानां 'शून्यवादः' प्रसिद्धः। 'यत्र किमपि नास्ति तत्' इति अत्र शून्यपदस्य अर्थः न। बौद्धदर्शने शून्यपदस्य दार्शनिकः महान् अर्थः अस्ति। बौद्धमतस्य धार्मिकाः बहवः अंशाः त्रिपिटके निरूपिताः सन्ति।

### ८.२.१) योगाचारमतम्

योगाचारस्य सिद्धान्तः विज्ञानवादोऽस्ति। विज्ञानवादस्य विचारधारानुसारेण बाह्यसत्तायाः अस्तित्वं स्वीकर्तुं नैव शक्यते, यतो हि बाह्यजगतः प्रयोजनकाले मनसि निपतितस्य प्रतिबिम्बस्य आधारेणैव तद् विज्ञायते। अत्र प्रतीतेराधारः ज्ञानमस्ति, अत एव ज्ञानम् अथवा विज्ञानमेव सत्यतत्त्वमस्ति। चित्तं, मनः इत्याद्याः विज्ञानस्यैव संज्ञाः सन्ति। विज्ञानमेव चेतनक्रियासम्बन्धवशात् चित्तम् इत्युच्यते, मनः क्रियासम्बन्धवशादेव मनः इति कथ्यते। विषयग्रहणस्य साधनतया एव विज्ञानं सिद्ध्यति।



## ८.२.२) माध्यमिकमतम्

माध्यमिकानां सिद्धान्तः शून्यवादोऽस्ति। शून्यवादमतानुसारेण बाह्यपदार्थोऽपि सत्यं नास्ति, आन्तरपदार्थोऽपि सत्यं नास्ति, विज्ञानमपि सत्यं नास्ति। शून्यमेव सत्यं वर्तते। अथ शून्यम् किमस्तीति विचार्यते। शून्यं किमभावोऽस्ति। अत्र माध्यमिकानां मतं वर्तते यत् शून्यं न तु भावरूपमस्ति, न चाभावरूपम्। इदन्तु अनिर्वचनीयं विद्यते। सर्वेभ्यो भिन्नतया एवास्य शून्यसंज्ञाऽस्ति। अत्र वेदान्तिभिः ब्रह्मणः स्वरूपम् अनिर्वचनीयं स्वीक्रियते।

इदमेव बौद्धदर्शनस्यान्तिमं सत्यमस्ति। तथाहि सर्वप्रथमं वैभाषिकसम्प्रदायेन बाह्यार्थस्य प्रत्यक्षसत्ता स्वीकृता। तत्पश्चात् सौत्रान्तिकेन बाह्यार्थानुमेयवादस्य सिद्धान्तः प्रतिपादितः। तदनन्तरं योगाचारेण विज्ञानमात्रस्य सत्ता अङ्गीकृता। अन्ते च माध्यमिकेन शून्यमेव परमतत्त्वमिति संसाधितम्। एषु सम्प्रदायेषु वैभाषिकः हीनयानं स्वीकरोति, अवशिष्टाश्च त्रयः सम्प्रदायाः महायानं स्वीकुर्वन्ति।

## ८.२.३) वैभाषिकमतम्

वैभाषिकमतानुसारेण इन्द्रियजन्यज्ञानम् अस्य बाह्यजगतो मिथ्यात्वं नैव भवितुं शक्नोति। आन्तरतत्त्वस्य मनसोऽपि स्वतन्त्रा सत्ताऽस्ति। बाह्यपदार्थानां ज्ञानाय इन्द्रियाणाम् आन्तरतत्त्वेन सहयोगस्य आवश्यकता नास्ति। आन्तरतत्त्वान्यपि बाह्यपदार्थनिरपेक्षं ज्ञानं प्रति कारणभूतानि वर्तन्ते। एवमुभयोः पदार्थयोः स्वतन्त्रसत्ता सिद्ध्यति।

## ८.२.४) सौत्रान्तिकमतम्

सौत्रान्तिकमते बाह्यार्थानुमेयवादः स्वीक्रियते। एतदनुसारेण बाह्यपदार्था इन्द्रिय-ज्ञानगम्या न सन्ति। यतो हि पदार्थाः क्षणिकाः सन्ति, परिणामस्वरूपं इन्द्रियार्थसन्निकर्षकाले ज्ञानानुभवकाले च पदार्थाः परिवर्तिताः एव जायन्ते। अत एव तस्मिन् क्षणे पदार्थान्तरमेव अभिमुखं भवति। एवं बाह्यपदार्थानां सत्ता प्रत्यक्षगम्या नास्ति, अनुमानेनैव तद् विज्ञायते। अयं सिद्धान्त एव बाह्यार्थानुमेयवादो भवति।



### पाठगतप्रश्नाः-१

१. बौद्धधर्मस्य प्रतिष्ठाता कः।

२. बौद्धदर्शनं नास्तिकम् उत आस्तिकम्।

३. गौतमबुद्धस्य पितरौ कौ आस्ताम्।

४. गौतमबुद्धस्य जन्मस्थानं कुत्र आसीत्।

५. बौद्धदर्शने कति सम्प्रदायाः सन्ति।

६. शुन्यवादिनां मते शुन्यस्य स्वरूमं किम्।



७. केषां मते बाह्यं पदार्थं सत्।

८. केषां मते बाह्यं पदार्थं असत्।

९. केषां मते बाह्यपदार्थम् अनुमेयम्।

१०. बुद्धस्य जन्म कदा अभवत्।

## ८.३) अष्टाङ्गिकमार्गः

बुद्धप्रतिपादितस्य अस्य मध्यममार्गस्य अष्टौ अङ्गानि एवं प्रकारेण सन्ति। -सम्यक् व्यायामः, सम्यक् स्मृतिः, सम्यक् समाधिश्चेति। अस्य अष्टाङ्गिकमार्गस्य सम्यक् पालनेन निर्वाणः प्राप्यते, एतादृशी बौद्धानां मान्यताऽस्ति। एवं प्रकारेण भगवान् बुद्धः अविद्यायाः मूलकारणं मत्वा ज्ञानेन तत्परिमार्जनस्य महत्वं प्रतिपादितवान्। शुद्धं ज्ञानं शुद्धां मनोवृत्तिं विना नैव प्राप्यते। शरीरशुद्धये भगवता बुद्धेन शीलसमाधिप्रज्ञादीनां महत्त्वं प्रतिपादितम्। शीलस्य अन्तर्गतं अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-अपरिग्रहाणां समावेशो भवति। अत्र नैतिकसुखसाधनानां परित्यागोऽपि गृहीतः। समाधिः द्वितीयं साधनमस्ति। समाधेः पूर्व जन्म-स्मृति-उत्पत्ति-विनाशादीनां ज्ञानं बाधकनियमानां बोधश्चापेक्षते। प्रज्ञा तृतीयं साधनमुच्यते। प्रज्ञाऽपि त्रिधा प्रतिपादिता-श्रुतमयी प्रज्ञा, चिन्तामयी प्रज्ञा, भावनामयी प्रज्ञा चेति।

## ८.४) बौद्धदर्शनमते मोक्षस्य स्वरूपम्

मोक्षशब्दः 'मोक्ष्' मोचने इत्यस्मात् धातोः व्युत्पन्नः। यथा स्वर्गः नाम 'दिव्यसुखोपभोगसाधनैः' युक्तं स्थानं यत्र पुण्यवन्तः जनाः मरणानन्तरं गच्छन्ति इति भवति सर्वेषां विश्वासः। तथा मोक्षः नाम न कश्चित् स्थानविशेषः। तत्रोक्तम् –

**मोक्षस्य न हि वासोऽस्ति न ग्रामान्तरमेव वा।**
**अज्ञानतिमिरग्रन्थिनाशो मोक्ष इति स्मृतः ॥**

वस्तुतः जीवः परमात्मनः एव अंशः। परन्तु अज्ञानवशात् स तत् तथ्यं न जानाति। यदा अज्ञानं विनश्यति तदा साक्षात्कारेणा स परमात्मना सह तादात्म्यम् अनुभवति। एवं अज्ञानात् मुक्तिः एव मोक्षः।

मरणानन्तरं स्वकर्मानुसारं पुनः नूतनं जन्म गृह्णाति। एवं भ्राम्यमाणस्य तस्य यदा वासनाक्षयः भवति तदा अस्मात् जन्ममरणचक्रात् स मुक्तिं प्राप्नोति। स एव मोक्षः। अन्ये पुनः षडरिपूणां प्रभावात् मुक्तिः नाम मोक्षः इति मन्यन्ते। मनुष्यमात्रं सुखसंपादनार्थं दुःखनिवारणार्थं च प्रयतते। तत्र किं कर्तव्यम्, किम् अकर्तव्यम् इत्यस्मिन् विषये धर्मेण कृतं मार्गदर्शनं स सम्यक्तया जानाति। दुर्योधनस्य 'जानामि धर्मं न च मे प्रवृत्तिः जानाम्यधर्मं न च मे निवृत्तिः' इति उक्तिः प्रसिद्धा एव तदनुसारं विकारैः अभिभूतः मानवः धर्माचरणे स्वभावतः एव न प्रवृत्तो भवति। यथा अधोगमनं स्वभावः जलप्रवाहस्य तथा प्रवाहपतित इव अधोगतिः स्वभावः मनुष्यस्य इति प्रतीयते। धर्माचरणं नाम प्रवाहस्य विरुद्धं संतरणम्। अधोगमनं विनासाय सम्पद्यते। किन्तु प्रवाहस्य प्रतीपं संतरणाय शरीरसामर्थ्यं मनोनिग्रहः आत्मविश्वासः



इत्यादयः गुणाः आवश्यकाः भवन्ति। अतः यदि स्वकल्याणं साधयितुं धर्माचरणं काम्यते तर्हि विकाराणाम् उपरि विजयसम्पादनम् आवश्यकम्। अस्माकम् ऋषिमुनिभिः सूक्ष्मेक्षिकया मानवप्रवृत्तीः अभ्यस्य प्रामुख्येन षड्विकाराः निर्धारिताः। तेभ्यश्च रिपुः इति संज्ञा प्रदत्ता। काम-क्रोध-लोभ-मोह-मद-मत्सराः इति षड् रिपवः विश्रुताः एव। प्रत्येकस्य अन्तःकरणे एते विकाराः निभृतरुपेण निवसन्ति एव। मनसः दुर्बलायाम् अवस्थायां ते उपरि आगच्छन्ति। तपः पूताः योगिनः अपि अस्मिन् विषये न अपवादाः। विश्वामित्रमेनकयोः आख्यानम् तु सर्वेषां सुपरिचितमेव। 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति वचनानुसारेणा मनः एव सर्वासाम् आपत्तीनां मूले तिष्ठति। अतः एव मनोनिग्रहः इन्द्रियजयः वा वारं वारं उपदिश्यते शास्त्रकारैः। शीतोष्ण-सुख-दुःख–जय-पराजय-मान-अपमानादि-द्वन्द्वातीतत्वमेव इन्द्रिय- जयस्य निदर्शनम्।

एवम् इन्द्रियाणां निग्रहेण, संयमेन, विकाराणां षडरिपूणाम् उपरि विजयः तेषां च प्रभावात् मुक्तिः एव मोक्षः। यदि विकाराणां प्रभावः न स्यात् तर्हि तस्य प्रज्ञा स्थिरा भवति। एतादृशः विकाररहितः मनुष्यः अनुपमं सुखम् अद्वितीयं च आनन्दम् अनुभवति। स आत्मस्वरूपं साक्षात्करोति। परमात्मनः अंशत्वं प्रत्यक्षीकरोति। स एव जीवन्मुक्तः। इयमेव कृतार्थता मनुजन्मनः इति।

## ८.५) बौद्धधर्मस्य आचारमीमांसा

सांसारिकदुःखेभ्यो मुक्तये भगवता बुद्धेन जटिलदार्शनिकताम् अनपेक्ष्य सरलतया आचारपद्धतिः प्रतिपादिता। बुद्धो गहनायाः आध्यात्मिकतायाः प्रश्रयं न प्रददाति स्म। अतः श्रावस्तीविहारस्य अवसरे मालुंम्यपुत्तेन अध्यात्मविषये बुद्धः पृष्टः। तदा बुद्ध आचारमार्गमेव उपदिदेश। बुद्धमतेन आर्यसत्यचतुष्टयं एवं प्रकारेण निर्दिष्टम्- ( दुःखं ( दुःखसमुदयः ( दुःखनिरोधः ( दुःखनिरोधगामिनी प्रतिपत्तिश्च। अर्थात् संसारः दुःखमयोऽस्ति, दुःखानां निदानमपि विद्यते, दुःखभ्यो मुक्तिरपि लब्धुं शक्यते, मुक्तिमार्गोऽपि निर्धारितोऽस्ति। केवलम् आर्यजना एव एतान् प्राप्तुं शक्नुवन्ति, अनार्यास्तु यावज्जीवनं दुःखेष्वेव जीवन्ति। बुद्धमतानुसरेण आर्यसत्यमार्गस्य द्वादशकारणानि सन्ति – ( जरामरणम्, ( जातिः, ( भवः, ( उपादानम्, ( तृष्णा, ( वेदना ( स्पर्शः, ( षडायतनम् ( नामरूपम् (१ विनयम् (१ संस्कारः (१ अविद्या च। एषु प्रत्येकं पूर्वं प्रति परं कारणमविद्यत। उदाहरणार्थं जरामरणयोः कारणं जातिरस्ति, जातेः कारणं भवो, भवस्य कारणम् उपादानं भवति। एतानि द्वादशकारणानि आश्रित्य कार्यकारणभावस्य यः सिद्धान्तः प्रतिपादितोऽस्ति, सः बौद्धमते प्रतीत्यसमुत्पाद इत्युच्यते। प्रतीत्यसमुत्पादस्य तात्पर्यार्थो वर्तते। कस्यचिद् वस्तुनः प्राप्तौ अन्यस्य वस्तुनः उत्पत्तिरिति। एवञ्चेत् अयं वस्तुतः सापेक्षः कारणतावाद इत्यपि वक्तुं शक्यते। प्रतीत्यसमुत्पाद एव बौद्धप्रतिपादितः कारणवादोऽस्ति। अयमेव मानवोत्पत्तिसन्दर्भे श्रृंखलाबद्धतां निर्दिशति। मानवोत्पत्तेः श्रृंखलायां द्वादश अङ्गानि त्रयः काण्डाश्चासन्। प्रथमकाण्डे अतीतेन जन्मना सम्बद्धं निदानं विद्यते, फलतः अविद्याजन्यसंस्कारा जायन्ते। द्वितीयकाण्डे वर्तमानजीवनेन सम्बन्धं निदानमस्ति यस्यान्तर्गतं विज्ञानतो भवपर्यन्तम् अष्टौ कारणानि जायन्ते। तृतीयकाण्डे भविष्यता सम्बद्धं निदानं भवति। तत्र जातिः जरामरणञ्चेति कारणद्वयं गृहीतमस्ति। तृतीयम् आर्यसत्यम् दुःखनिरोधात्मकमस्ति। तस्य तात्पर्यमस्ति



यत् कार्यं कारणम् आश्रित्य तिष्ठति चेत् कारणध्वंसः स्यात् तदा कार्यमपि स्वतो ध्वस्तं भवेत्। एवं चेत् मूलकारणरूपाम् अविद्यां विद्यया उन्मूलितां कुर्यात् तदा तज्जन्यं किमपि कार्यं न भवितुं शक्नोति। चतुर्थम् आर्यसत्यं निर्वाण इत्यस्ति। अस्य प्राप्त्यै बुद्धेन मध्यममार्गस्य उपदेशः प्रदत्तः। अर्थात् निर्वाणप्राप्तये कठोरव्रतोपवासादीनाम् आवश्यकता नापेक्षते, न च सर्वथा श्रमरहितम् आचरणं वा प्रशस्यते। उभयोर्मध्ये किमपेक्षणीयमिति विचार्य भगवता बुद्धेन यः मार्गः प्रतिष्ठापितः स एव मध्यममार्गोऽस्ति। अस्य मध्यममार्गस्य अष्टौ अङ्गनि सन्ति, अतएवायं अष्टाङ्गिको मार्ग इत्यपि कथ्यते।

## ८.६) बौद्धचिन्तनस्य दार्शनिक आधारः

बौद्धदर्शनस्य यच्चिन्तनसर्वस्वं वर्तते तस्य आधारः अध्यात्मवादो नास्ति। बौद्धचिन्तनं तु संघातवाद-सत्तावादयोरेव विस्तारोऽस्ति। आत्मचिन्तनं दुःखनिवृत्तेर्मुख्यं साधनमस्ति, तथापि बुद्धेन आत्मनोऽस्तित्वमेव निराकृतम्। तन्मतानुसारेण आत्मा केवलं मनोवृत्तीनां पुञ्जमात्रमस्ति। यतोहि मानसप्रवृत्तिभ्यः अतिरिक्तं तस्य आत्मतत्वस्य किमपि अस्तित्वं नास्ति। तत् आत्मतत्त्वन्तु रूप-वेदना-संज्ञा-संस्कार-विज्ञानादीनां पञ्चस्कन्धानां समुच्चयोऽस्ति। रूपं भौतिकः पदार्थोऽस्ति। कस्यापि वस्तुनः साक्षात्कारः संज्ञा भवति। तया संज्ञया उत्पन्नयोः सुखदुःखयोरथवा औदासीन्यस्य भावो वेदना कथ्यते। भूतकालिकेन अनुभवेन उत्पद्यमानः, स्मृतिकारणभूतानां मानसिकप्रवृत्तीनां स्वभावः संस्कारोऽस्ति। अयमेव चैतन्यविज्ञानमिति नाम्ना ज्ञायते। आत्मनः स्वरूपं स्पष्टीकर्तुं नृपो नागसेनो मिलिन्दे रथस्य प्रत्येकम् अवयवस्य सम्बन्धे प्रश्नं करोति। मिलिन्दश्च प्रत्येकस्य प्रश्नस्य नकारात्मकम् उत्तरं प्रददाति। वस्तुतः स्वतन्त्ररूपेण अश्वाः रथाः न सन्ति, न च वल्गा एव रथाः सन्ति, काष्ठमयं शकटमपि रथो नास्ति। एतादृश्यां स्थितौ रथस्य प्रत्येकम् अवयवाः रथाः सन्तीति स्वीक्रियते। तथैव स्वतन्त्ररूपेण कश्चिदपि आत्मा नास्ति। अपि तु व्यवहारे दृश्यमाणानां भौतिकाना मानसिकानाञ्च व्यापाराणां समूह एव आत्मा उच्यते।

### ८.६.१) सन्तानवादः

बौद्धदर्शनानुसारं जीवो जगच्चेत्युभयमेव अनित्यमस्ति। इदं स्कन्धपञ्चकं स्थिरं नास्ति। क्षणे क्षणे चैतत् परिवर्तितं भवति। यथा दीपस्य ज्वाला सततमेकैव दृश्यते, किन्तु सा प्रतिक्षणं परिवर्तते। तदानीम् इदमनुभवोऽपि नैव जायते यत् तैलवर्तिकयोः संयोगाद् दृश्यमाणा दीपशिखा प्रतिक्षणं नूतनं तैलं वर्तिकांशञ्च ज्वालयितुं तस्मिन् एव प्रविष्टा भवति। एवं प्रकाशशिखारूपेण पूर्वतो विद्यमाना ज्वाला विनश्यत्येव। बौद्धदर्शने मुख्यतः परिणामस्य सिद्धान्तोऽभिमतोऽस्ति। अतो जगतःसत्यत्व-मेकशोऽस्वीकृतम् अकुर्वाणैः तस्य परिणामात्मकता स्वीकृता। परिणाम एव सत्यमस्ति किन्तु अस्य परिणामस्य मूले किमप्यन्यत् सत्यतत्वं नास्ति। बुद्धस्य वैचारिक-सूक्ष्मताया एषाऽद्वितीया कल्पना वर्तते।

## ८.७) बौद्धदर्शनस्य धार्मिको विकासः

बौद्धधर्मे महायानसम्प्रदायः थेरावादं स्वीकृतवान्, अतएव तस्य अपरा हीनयानसंज्ञाऽपि सञ्जाता। बौद्धधर्मस्य विविधेषु यानेषु बोधविषये अर्थात् जीवनमुक्तिनिरूपणविषये एकरूपता नास्ति। एषां त्रयाणां यानानां तिस्रो जीवनमुक्तयः सन्ति-श्रावकबोधिः, प्रत्येकबुद्धबोधिः, सम्यक् सम्बोधिश्चेति। एषां सर्वेषां साधनापद्धतिः भिन्नाऽस्ति। बौद्धदर्शनस्य विकासो बौद्धधर्मेण सह नैव जातः। यदा बौद्धधर्मस्य प्रचण्डः प्रचार आसीत् तदा बौद्धदर्शनस्य सिद्धान्ताः अस्तंप्राया आसन्। किन्तु यदैव बौद्धविदुषां बुद्धोपदेशानां गाम्भीर्ये प्रवेशो जातः, तदारभ्य एव बौद्धधर्मः स्वत एव शिथिलो जातः।

### ८.७.१) शून्यवादे सत्यस्य समीक्षा

शून्यवादिनां बौद्धानां मतानुसारेण सत्यं द्विविधमस्ति - व्यवहारिकं पारमार्थिकं च। लोकव्यवहारे प्रचलितं सत्यं व्यावहारिकं स्वीक्रियते। अस्य अपरं नाम सांवृतिकम् इत्यपि वर्तते। पारमार्थिकं सत्यं तु अनुपपन्नम् अनिरुद्धम् अनुच्छेद्यम्, अशाश्वतं चास्ति। पारमार्थिकं सत्यं बुद्धिगम्यं नास्ति। संवृत्तिर्नाम आच्छादनक्रियाया अस्ति। एवं सांवृत्तिकं तद्भवति यद् हि आच्छादकं भवति। आच्छादकं तत्त्वन्तु अविद्या वर्तते। तयैव अविद्यया यदा अन्यत् तत्त्वम् आच्छाद्यते, तदा व्यावहारिकस्य सत्यस्य उदयो भवति। बौद्धैरपि अविद्यास्वरूपिण्या मायायाः कार्यद्वयं स्वीकृतम्- ( स्वभावदर्शनस्य आवरणं ( तत्र चासत्पदार्थस्वरूपस्य आरोपणम्। शून्यवादिभिः संवृत्तिरपि द्विधा विभक्ता- ( तथ्यसंवृत्तिः ( मिथ्यासंवृत्तिश्चेति। पदार्थस्य यथार्थं परिज्ञाने तथ्यसंवृत्तिर्भवति किन्तु अयथार्थज्ञाने मिथ्यासंवृत्तिरस्ति। उभयोः संवृत्योर्माध्यमेन गृहीतं ज्ञानं सांवृत्तिकं भवति। तदेव व्यावहारिकं सत्यमपि उच्यते। सांवृत्तिकं सत्यमेव पारमार्थिकसत्यस्य साधनमप्यस्ति। व्यावहारिकेण सत्येनेव पारमार्थिकस्य सत्यस्य बोधो जायते। जन्मतः कश्चिदपि पारमार्थिकसत्यस्य दर्शनं न करोति। अत्र पारमार्थिकं सत्यं निर्वाणरूपं भवति। निर्वाणस्तु अज्ञातमेव तत्त्वं वर्तते। यस्य प्राप्तिरपि नूतना न भवति। यस्य विनाशोऽपि नैव जायते, यो हि न तु विराध्यति न चोत्पद्यते। अतएवासौ अनिर्वचनीयः कथ्यते। अस्यानिर्वचनीयतत्त्वस्य ज्ञातैव बौद्धमते तथागत इति नाम्ना विज्ञायते। बौद्धधर्मे व्यावहारिकपारमार्थिकसत्ययोराधारेणैव व्यावहारिक आदेशो दीयते। यदा साधकः पारमार्थिकसत्यस्यानुसन्धानेन एव तथागतस्य स्वरूपं शून्यतां च प्राप्नोति तदा स्वयं वर्णनातीतो भवति, यतो हि सः तदा अविद्या अस्पष्टे सति सर्वेभ्यो मतेभ्यो रहितोऽपि जायते। सः सर्वविधक्लेशेभ्यो ज्ञेयावरणेभ्यश्च मुक्तो भवति। किन्तु इदं सर्वं निर्वाणरूपं सम्यक् सम्बोधिं विना असम्भवमेवास्ति। सम्यक् सम्बोधिस्तु षट्पारमितानामुपलब्धेरनन्तरं प्राप्यते। षट्पारमिताः एवं प्रकारेण प्रतिपादिताः- ज्ञानं शीलः क्षान्तिः वीर्यम् समाधिः प्रजा च। आसु षट्सु पारमितासु ज्ञान-शील-क्षान्तीनां सततम् अभ्यासेन पुण्यसंभारस्य प्राप्तिर्भवति। वीर्यसमाध्योरभ्यासेन ज्ञानसम्भारस्य प्राप्तिर्भवति। उभयविधसम्भारेण प्रज्ञाया उदयोभवति। प्रज्ञापि उभयविधाऽस्ति-साधकरूपा फलरूपा च। यदा साधकः साधनभूतां प्रजां प्राप्य अभिमुक्तचरित संज्ञको भवति तदा उक्तज्ञानस्य आविर्भावे सति फलरूपा प्रज्ञा उत्पद्यते। प्रज्ञायाश्चरमोत्कर्षः एव बुद्धत्वप्राप्तिरस्ति। अस्यामेव अवस्थायां सर्वशून्यताया दर्शनं जायते। दुःखानाम्



आत्यन्तिकी निवृत्तिरप्यत्रैव सम्भवति। शून्यतायाः प्रतीतौ सर्वविधधर्माणां स्वभावहीनता दृश्यते। माध्यमिककारिकायां गति-इन्द्रिय-स्कन्ध-धातु-दुःख-संसर्ग-कर्म-बन्ध-मोक्ष-काल-आत्मादीनां तत्त्वानां व्यावहारिकस्थितेः विश्लेषणं कृतमस्ति। तत्र शून्यवादिनाम् आचार्याणां तर्कपद्धतेः सूक्ष्मता स्पष्टरूपेण परि-लक्षिता भवति। इदम् अखिलं व्याख्यानं निषेधात्मकमेवास्ति। अनया पद्धत्या जगतः सर्वा अवधारणाः निःस्वभावाः सन्ति। अस्यैव सम्प्रदायस्य बुद्धपालितादिभिः शून्यतायाः सिद्धये तर्कस्य पूर्णतया तिरस्कारो विहितः। अतएव बौद्धदर्शनस्येतिहासे माध्यमिक इति प्रासङ्गिकनाम्ना अभिहितो वर्तते। वैदिकदर्शनानां मुक्तेरथवा मोक्षस्य स्थाने बौद्धा निर्वाणं प्रतिष्ठापितवन्तः। बौद्धदर्शनस्य विविधैः सम्प्रदायैः निर्वाणस्य निरूपणं स्व-स्व-मान्यताया आधारेण कृतवन्तः। तथापि बौद्धानां चत्वारः सम्प्रदायाः हीनयान–महायानरूपेण विभक्ताः सन्ति। यतो हि हीनयाने निर्वाणस्य यत् स्वरूपं प्रतिष्ठापितमस्ति महायाने तद्भिन्नरूपेण प्रतिपादितमस्ति। हीनयाने निर्वाणस्य स्वरूपम्- हीनयानमतानुसारेण संसारः दुःखमयोऽस्ति। दुःखस्य त्रयः प्रकाराः सन्ति-दुःखदुःखता, संस्कारदुःखता एवं विपरिणदुःखता च। शारीरिकैः मानसिकैश्च कारणैः उत्पाद्यमानं दुःखं दुःखतासंज्ञकमस्ति। उत्पत्तिशीलस्य विनाशशीलस्य च जगतः वस्तुभिः उत्पाद्यमानं दुःखं संस्कारदुःखता कथ्यते। यैः कारणैः सुखमपि दुःखरूपे परिणतं भवति तैः कारणैः उत्पद्यमानं दुःखं विपरिणदुःखता भवति। प्राणी विविध-दुःखेभ्यः कथं मुक्तो भवेत् इति विचार्य बुद्धेन चतुर्णाम् आर्यसत्यानामुपदेशः प्रदत्तः। एषामार्यसत्यानाम् आचारण-मेव सांसारिकपदार्थानां नश्वरतायाः अनात्मतायाश्च ज्ञानं दुःखनिवृत्तेः सदुपायो वर्तते। एवम् अष्टाङ्गिकमार्गस्य अनुसरणं प्रथम उपायोऽस्ति, सांसारिकपदार्थान् प्रति हेयभावो द्वितीय उपायोऽस्ति, आत्मनोऽस्तित्वस्य अस्वीकृतिः तृतीय उपायोऽस्ति। एषाम् त्रयाणाम् उपायानाम् अनुपालनेन त्रिविधदुःखनाम् उन्मूलनं भवति। एतादृश्याम् अवस्थायां पुष्टजीवस्य पुनः बन्धरूपता न जायते। इयमेव अवस्था निर्वाणस्यास्ति। महायाने निर्वाणस्य स्वरूपम् किम्। महायानमतानुसारेण निर्वाणस्य कृते उभयविधानाम् आवरणानां क्षयः आवश्यको भवति। क्लेशावरण-ज्ञेयावरणयोः क्षतिः क्रार्मकाऽस्ति। पूर्वं क्लेशावरणं नश्यति, तदनन्तरं ज्ञेयाव-रणस्य विनाशो भवति। हीनयाने स्वीकृतं निर्वाणस्य स्वरूपं महायानस्य दृष्टिकोणेन अपूर्णमस्ति,यतो हि क्लेशावरणस्य विनाशानन्तरमपि ज्ञेयावरणम् अवशिष्टं भवति। यद्यपि हीनयानमतेन क्लेशावरणविनाशेन आत्मनो निषेधो विहितः। यतो हि आत्मनः सुखादीनां कृते एव मानवस्य प्रवृत्तिर्जायते। अतएव दुःखादयो भवन्ति। आत्मदृष्ट्यैव इमे विषमपरिणामा भवन्ति। अतः आत्मनो निषेधे सत्येव दुःखानां स्वत एव नाशो भविष्यति। अयमेव हीनयानस्य नैरात्म्यवादो वर्तते। तस्य द्वौ भेदो कथितौ-पुद्गलनैरात्म्यवादो धर्मनैरात्म्यवादश्च। एवं पुद्गलनैरात्म्येन प्राणी स्वतः क्लेशमुक्तो भवति। एतद्विपरीतस्य जगतोऽभावात् सांसारिकपदार्थानां शून्यताया ज्ञानेन पारमार्थिक-सत्यरूपिणो ज्ञानस्योपरितः आवरणं नश्यति। साधकोऽपि सर्वज्ञतां लभते। क्लेशेन मुक्तेरावरणं भवति, ज्ञेयावरणं च ज्ञेयपदार्थम् आवृणोति। उभयोरावरणयोर्विनाशेनैव सर्वज्ञता प्राप्तुं शक्यते। महायानसम्प्रदाये ज्ञेयावरणस्य निवारणोपायरूपेण सर्वशून्यतायाः प्रतीतिरभिमताऽस्ति। एवमेव हीनयाने अर्हत्प्राप्तिः परमोद्देश्यमस्ति,किन्तु महायाने बुद्धत्वप्राप्तिर्लक्ष्यभूता भवति। उभयोः सम्प्रदाययोरयमेव निर्वाणभेदः।

### ८.७.२) महायानम्

महायानमतानुसारेण निर्वाणस्य कृते उभयविधानाम् आवरणानां क्षयः आवश्यको भवति। क्लेशावरणज्ञेयावरणयोः क्षतिः क्रार्मकाऽस्ति। पूर्वं क्लेशावरणं नश्यति, तदनन्तरं ज्ञेयावरणस्य विनाशो भवति। हीनयाने स्वीकृतं निर्वाणस्य स्वरूपं महायानस्य दृष्टिकोणेन अपूर्णमस्ति, यतो हि क्लेशावरणस्य विनाशानन्तरमपि ज्ञेयावरणम् अवशिष्टं भवति।

यद्यपि हीनयानमतेन क्लेशावरणविनाशेन आत्मनो निषेधो विहितः। यतो हि आत्मनः सुखादीनां कृते एव मानवस्य प्रवृत्तिर्जायते। अतएव दुःखादयो भवन्ति। आत्मदृष्ट्यैव इमे विषमपरिणामा भवन्ति। अतः आत्मनो निषेधे सत्येव दुःखानां स्वत एव नाशो भविष्यति। अयमेव हीनयानस्य नैरात्म्यवादो वर्तते। तस्य द्वौ भेदो कथितौ पुद्गलनैरात्म्यवादो धर्मनैरात्म्यवादश्च। एवं पुद्गलनैरात्म्येन प्राणी स्वतः क्लेशमुक्तो भवति।

एतद्विपरीतं जगतोऽभावात् सांसारिकपदार्थानां शून्यताया ज्ञानेन पारमार्थिक सत्यरूपिणो ज्ञानस्योपरितः आवरणं नश्यति। साधकोऽपि सर्वज्ञतां लभते। क्लेशेन मुक्तेरावरणं भवति, ज्ञेयावरणं च ज्ञेयपदार्थम् आवृणोति। उभयोरावरणयोर्विनाशेनैव सर्वज्ञता प्राप्तुं शक्यते। महायानसम्प्रदाये ज्ञेयावरणस्य निवारणोपायरूपेण सर्वशून्यतायाः प्रतीतिरभिमताऽस्ति। एवमेव हीनयाने अर्हत्प्राप्तिः परमोद्देश्यमस्ति, किन्तु महायाने बुद्धत्वप्राप्तिर्ल-क्ष्यभूता भवति। उभयोः सम्प्रदाययोरयमेव निर्वाणभेदः।

### ८.७.३) हीनयानम्

हीनयानमतानुसारेण संसारः दुःखमयोऽस्ति। दुःखस्य त्रयः प्रकाराः सन्ति- दुःखदुःखता, संस्कारादुःखता एवं विपरिणादुःखता च। शारिरिकैः मानसिकैश्च कारणैः उत्पाद्यमान दुःखं दुःखतासंज्ञकमस्ति। उत्पत्तिशीलस्य विनाशशीलस्य च जगतः वस्तुभिः उत्पाद्यमानं दुःखं संस्कारदुःखता कथ्यते। यैः कारणैः सुखमपि दुःखरूपे परिणतं भवति तैः कारणैः उत्पद्यमानं दुःखं विपरिणदुःखता भवति। प्राणी विविधदुःखेभ्यः कथं मुक्तो भवेत् इति विचार्य बुद्धेन चतुर्णाम् आर्यसत्यानामुपदेशः प्रदत्तः। एषामार्यसत्यानाम् आचारणमेव सांस्कारिकपदार्थानां नश्वरतायाः अनात्मतायाश्च ज्ञानं दुःखनिवृत्तेः सदुपायो वर्तते। एवम् अष्टाङ्गिकमार्गस्य अनुसरणं प्रथम उपायोऽस्ति,सांसारिकपदार्थान् प्रति हेयभावो द्वितीय उपायोऽस्ति, आत्मनोऽस्तित्वस्य अस्वीकृतिः तृतीय उपायोऽस्ति। एषाम् त्रयाणाम् उपायानाम् अनुपालनेन त्रिविधदुःखानाम् उन्मूलनं भवति। एतादृश्याम् अवस्थायां पुष्टजीवस्य पुनः बन्धरूपता न जायते। इयमेव अवस्था निर्वाणस्यास्ति।

## ८.८) बौद्धतीर्थस्थानम्

सारनाथं किञ्चन बौद्धकेन्द्रम् वाराणासीतः दशकिलोमीटर् दूरे बौद्धानां प्राचीनं केन्द्रम् अस्ति। गौतमबुद्धः स्वप्रथमोपदेशम् अत्रैव कृतवान्। बोधगयायां ज्ञानप्राप्तेरनन्तरं वाराणसीम् आगतवान्। अनन्तरम् अत्र सारानाथे स्थितवान्। क्रिस्ताब्दे ६४० समये अत्र २५०० पूजाकर्तारः, अशोकस्तम्भः, १०० मीटर् उन्नतः स्तूपः च आसन्। मोगलवंशीयानां प्रशासनकाले अनेके स्मारकाः नष्टाः अभवन्।



भारतीयसर्वेक्षनविभागे अस्य अवशेषाः सन्ति। भारतस्य राष्ट्रियलाञ्छने विद्यमानः चतुर्मुखसिंहः अस्मात् एव उद्धृतः अस्ति। अत्र अशोकनिर्मितः धमेकास्तूपः अर्धगोलाकारः ९३ पादोन्नतः च आसीत्। धर्मराणिस्तूपसमीपे अशोकः ध्यानासक्तः आसीत्। मुख्यमन्दिरस्य पूरतः स्तम्भः निर्मितः आसीत्। सारानाथस्य आर्कियालाजिकल् वस्तुसङ्ग्रहालये मौर्याणां कुशानां गुप्तानां कालस्य मूर्तयः सन्ति। गणेशसरस्वतीविष्णुः इत्यादीनां मूर्तयः अपि अत्र सन्ति। आधुनिककालेऽपि सारानाथक्षेत्रं किञ्चन दर्शनीयं क्षेत्रमस्ति।

बौद्धतीर्थस्थानम्-२

गया विहारस्य द्वितीयं महानगरम्। गयामण्डलस्य केन्द्रम् अस्ति। गया बिहारस्य राजधान्याः पाट्नायाः १०० किलोमीटर्मिते दूरे विद्यते। फल्गुनद्याः (रामायणे 'निरञ्जन' इति निर्दिष्टम्) तीरे विद्यमानम् इदं नगरं हिन्दु-बौद्ध-जैनधर्मीयानां पवित्रं स्थानम्। इदं नगरं परितः तिसृषु दिक्षु पर्वताः (मङ्गलगौरी, शृङ्गस्थानम्, राम्शिला, ब्रह्मयोनी) चतुर्थदिशि (पूर्वा) नदी प्रवहति। प्राकृतिकपरिसरेण, पुरातनभवनैः, निबिडमार्गैश्च युक्तम् अस्ति।

## ८.९) बुद्धजयन्ती

जन्मदिनाचरणं ‘जयन्ती’ शब्देन निर्दिश्यते। यथा -‘गान्धिजयन्ती’ या च अक्टोबर्मासस्य द्वितीये दिनाङ्के आचर्यते, अस्मिन च दिने गान्धीमहोदयस्य जन्म जातम्। बुद्धजयन्ती तु विशिष्टा। महात्मनः बुद्धस्य जीवनस्य तिस्त्रः प्रमुखाः घटनाः तस्मिन् एव दिने घटिताः। प्रथमा घटना तज्जन्म। क्रि.पू.६ शतके वैशाखमासस्य पूर्णिमादिने कपिलवस्तुराज्ये सिद्धार्थरुपेण सः जन्म प्राप्नोत्। स्वस्य जीवनस्य नवविंशतिवर्षपर्यन्तम् अपि सः न जानाति स्म यत् सर्वेषां जीवने अस्वास्थ्यवेदना-कष्ट-मरणादयः सम्भवन्ति एव इति। पुत्रेण एतद् दुःखादि यथा न ज्ञायेत तथा व्यवस्थां कल्पितवान् आसीत् तस्य पिता राजा शुद्धोदनः। कदाचित् रथेन नगरमार्गे गच्छन् सिद्धार्थः ऐदम्प्राथम्येन जनानां रोगमरणादिकं प्रत्यक्षम् अपश्यत्। एतत् तस्य जीवनमार्गम् एव पर्यवर्तयत्। जीवनस्य अर्थस्य अन्वेषणे तस्य मनः प्रवृत्तं जातम्। कस्याञ्चित् रात्रौ सः प्रासादं परित्यज्य निर्गतः। अष्टौ वर्षाणि सः सर्वत्र भ्रमणम् अकरोत्। अन्ते बोधिगयक्षेत्रे बोधिवृक्षस्य अधः उपविश्य ध्यानं कुर्वन् सः ज्ञानबोधं प्राप्तवान्। तच्च दिनम् आसीत् वैशाखपूर्णिमा एव। तस्मात दिनात् सः आत्मना प्राप्तस्य ज्ञानस्य प्रसाराय पुनरपि देशसञ्चारम् आरब्धवान्। अशीतितमे वयसि सः निर्वाणं प्राप्तवान्। तच्च दिनम् अपि आसीत् वैशाखपूर्णिमा एव। अतः एव वैशाखपूर्णिमा ‘बुद्धपूर्णिमा’ इत्यपि ख्याता अस्ति। बौद्धमतानुयायिनः बुद्धपूर्णिमादिने बोधिगयायां समाविष्टाः भवन्ति। प्रार्थनासभाः, धार्मिकचर्चा, बुद्धोपदेशस्य जपः बौद्धग्रन्थानां पठनम्, सामूहिकं ध्यानं, शोभायात्रा इत्यादयः अनेके कर्यक्रमाः तत्र आयोजिताः भवन्ति। यात्रिकाः तेषु दिनेषु उत्तरप्रदेशादिषु स्थितानि सारनाथादीनि पवित्रस्थानानि प्रति अपि गच्छन्ति महता प्रयासेन। एतस्मिन् वर्षे बुद्धपूर्णिमा भविष्यति मे-मासस्य द्वियीये दिनाङ्के।



## पाठगतप्रश्नाः-२

११. आर्यसत्यचतुष्टयं किम्।

१२. बौद्धदर्शने शाखाद्वयस्य नाम किम्।

१३. बौद्धदर्शनने मोक्षः कः।

१४. बौद्धधर्मे कति आर्यसत्यमार्गस्य कारणानि सन्ति कानि च तानि।

१५. अष्टाङ्गिकमार्गाः के सन्ति बौद्धदर्शने।

१६. बौद्धतीर्थस्थानद्वयं लिखत।



## पाठान्तप्रश्नाः-

१. गौतमबुद्धस्य जीवनपरिचयं लिखत।

२. अष्टाङ्गिकमार्गस्य परिचयं कारयत।

३. बौद्धदर्शनस्य मोक्षं प्रतिपादयत।

४. बौद्धदर्शनस्य दार्शनिकाधारं लिखत।

५. बौद्धदर्शनस्य प्रमां प्रमाणानि च लिखत।

६. बौद्धदर्शनस्य आचारमीमांसां लिखत।



## पाठसारः

बौद्धदर्शनस्य भारतीयदर्शनसाहित्ये किं अवदानं तत् अस्माभिः पाठे अस्मिन् दृष्टम्। भगवतः गौतमबुद्धस्य परिचयः अत्र अस्माभिः प्राप्तः। बौद्धदर्शनस्य चत्वारः सम्प्रदायाः सन्ति। सम्प्रदायसिद्धानाम् अपि ज्ञानं पाठे अस्ति। अपि च हीनयानमहायनशाखायोः ज्ञानम् जातम्। मोक्षं तत्साधनं च ज्ञातम्। बौद्धानाम् अष्टाङ्गिकमार्गस्य परिचयः जातः। बौद्धधर्मस्य उद्भवाधारौ अपि अस्माभिः ज्ञातौ। बौद्धधर्मस्य प्रमा शुद्धमेव ज्ञानम्। अपि च बौद्धाः कति प्रमाणानि स्वीकुर्वन्ति तदपि अत्र वर्णितम्। एवमेव भारतवर्षे बौद्धर्मस्य माहात्म्यं ज्ञातम्।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि १**



१. बौद्धधर्मस्य प्रतिष्ठाता भगवान् गौतमबुद्धः।

२. बौद्धदर्शनं नास्तिकदर्शनम्।

३. गौतमबुद्धस्य पिता शुद्धोदनः माता च मायादेवी।

४. कपिलावस्तुनामके नगरे जन्म अभवत्।

५. बौद्धदर्शने चत्वारः सम्प्रदायाः सन्ति।

६. चतुष्कोटिज्ञानरहितं शुद्धं ज्ञानम् इति।

७. बैभाषिकानां मते बाह्यः पदार्थः सत्।

८. सौत्रान्त्रिकानां मते बाह्यः पदार्थः असत्।

९. सोत्रान्त्रिकानां मते बाह्यपदार्थम् अनुमेयम्।

१०. ई पु २२६ बुद्धस्य जन्म अभवत्।

**उत्तराणि २**

११. बुद्धमतेन आर्यसत्यचतुष्टयं एवं प्रकारेण निर्दिष्टम्- ( दुःखं ( दुःखसमुदयः ( दुःखनिरोधः ( दुःखनिरोधगामिनी प्रतिपत्तिश्च।

१२. हीनयानं महायानं च बौद्धदर्शनस्य शाखाद्वयम्।

१३. अज्ञाननाशो एव मोक्षः जीवस्य।

१४. बोबुद्धमतानुसरेण आर्यसत्यमार्गस्य द्वादशकारणानि सन्ति – ( जरामरणम्, ( जातिः, ( भवः, ( उपादानम्, ( तृष्णा, ( वेदना ( स्पर्शः, ( षडायतनम् ( नामरूपम् (१ विनयम् (१ संस्कारः (१ अविद्या च।

१५. बौद्धदर्शने अष्टाङ्गिकमार्गाः भवति सम्यक् वाक्, सम्यक् स्मृतिः, सम्यक् दृष्टिः, सम्यक् संकल्पः, सम्यक् व्यायामः, सम्यक् समाधिः, सम्यक् आजीवः, सम्यक् कर्म।

१६. गया सारनाथम् च बौद्धतीर्थस्थानद्वयम्।

---

॥ इति अष्टमः पाठः ॥

---



९

# आर्हतदर्शनम्

## प्रस्तावना

दशमकक्षायाः कृते अयं पाठः विरच्यते। भारतीयदर्शने जैनदर्शनस्य प्रभावः तु अद्यापि दृश्यते। किञ्च भारतीयदर्शनपरिचयार्थं जैनदर्शनस्य आवश्यकता अत्यन्तं वर्तते। अपि च जैनदर्शनं भारतीयदर्शने कथं स्वस्य परिधिः स्थापिता। तस्य प्रसारः कथं जातः। तेषां आचारव्यवहारविषये अलोचना अत्र क्रियते। जैनसम्प्रदाये जीवस्य स्वरूपं किम्। आत्मनः स्वरूपविषये किं कथयति। तेषां नास्तिकत्वं कथम् आयातम्। ते वेदं नाङ्गीकुर्वन्ति। परन्तु ते किम् ईश्वरम् अङ्गीकुर्वन्ति वा, एताः विषयाः अत्र आलोच्यन्ते। अपि च दशमीकक्षायाः कृते यथा काठिन्यं न स्याद् तथा वाक्यविन्यासः अस्ति। अतः विषयस्यापि तथैव रचना क्रियते यथा छात्रानां सुखबोधो स्यात्।



## उद्देश्यानि

अमुं पाठं पठित्वा

- जैनदर्शनस्य सम्यग् धारणा भविष्यति।
- जैनधर्मगुरूणां नामानि ज्ञास्यन्ते।
- जैनदर्शनस्य प्रमाज्ञानं भविष्यति।
- जैनदर्शनस्य प्रमाणज्ञानं भविष्यति।
- जैनदर्शनस्य मोक्षविषये धारणा भविष्यति।
- जैनदर्शनस्य भारतीयदर्शने प्रभावः कियान् आसीत् तद् ज्ञातुं शक्यते।
- जैनदर्शनस्य उद्भवः कथं जातः इति ज्ञातुं शक्यते।
- जैनदर्शनरीत्या कथं मुक्तिलाभः भवति तत् ज्ञास्यति।
- जैनानां नास्तिकत्वं ज्ञास्यति।
- जैनानां वेदखण्डनप्रकारं ज्ञास्यति।

## ९.१) भूमिका

जैनदर्शनम् भारतीयदर्शनेषु अन्यतमं वर्तते। चार्वाकविचारधारायाः अनन्तरं नास्तिकदर्शनेषु जैनदर्शनस्य महत्त्वपूर्णं स्थानमस्ति। चार्वाकमतस्य स्थूलतत्त्वानां चिन्तनस्य अपेक्षया सूक्ष्मचिन्तनं प्रति



चिन्तनस्य प्रावाहिकता जैनदर्शने दृश्यते। यत्र चार्वाकाः शरीरमेवात्मानं स्वीकुर्वन्ति तत्र जैनदर्शनेन आत्मा इति शरीरातिरिक्तम् अभौतिकं तत्त्वं स्वीकृतम्। तच्च शरीरपरिमाणं मध्यमपरिमाणं वाऽभिमतम्।

वैदिकदर्शने प्रायेणेदं प्रतिपादितमस्ति यदात्मा अणुपरिमाणो महत्परिमाणो वाऽस्ति-'अणोरणीयान् महतो महीयानिति'। अणुपरिमाणस्य महत्परिमाणस्य वा नित्यताकराणात् आत्मा नित्योऽस्ति इति वैदिकैः मन्यते। तन्मतानुसारेण मध्यमपरिमाणात्मकाः पदार्था अनित्याः सन्ति। जैनदर्शने मध्यमपरिमाणः आत्मा नित्योऽस्ति। स भौतिकपदार्थवत् अनित्योऽस्ति। दार्शनिकविचारस्य क्रमेण अनयोरुभयोः दर्शनयोः पौर्वापर्यं स्पष्टरूपेण दृश्यते। ऐतिहासिकेन साक्ष्येण इदं सिद्ध्यति यत् चार्वाकस्य पश्चात् जैनदर्शनस्य विकासक्रमः समायाति। अस्यापि गणना नास्तिकदर्शनेषु विहिता, यतो हि अत्र वेदानां प्रामाण्यं स्वीकृतं नास्ति। तथापि अस्य लक्ष्यं चार्वाकवत् स्थूलपदार्थविवेचनं नास्ति। त्रिविधदुःखेभ्य आत्यन्तिकं मुक्तिरेवात्र लक्ष्यभूता वर्तते। आस्तिकदर्शनानामपि इदमेव लक्ष्यमस्ति। अतो जैनदर्शनम् आस्तिकधारायाः केषुचित् अंशेषु अनुकरणं करोति।

## १.२) आत्मा

आत्मा जैनमते परिणामी द्रव्यमस्ति, जीवः अस्थिकायस्वरूपो भवति इत्याद्यवधारणाभिः सूक्ष्मतत्त्वानामपि भौतिकता सिद्ध्यति। जैनदर्शने जीवात्मनोः पार्थक्यं न भवति। विभिन्नदर्शने आत्मपदेन यत् उच्यते अत्र जैनदर्शने तदेव जीवः इति पदेन कथ्यते। जीवात्मा एव नित्यः विभुः भवति। आत्मा स्वरूपतः निराकारो भवति चेदपि देहाकारेण प्रविश्य देहसमानपरिमाणविशिष्टः भवति। देहस्य आयतनं एव आत्मनः आयतनम्। वैदिकदर्शनेभ्यो वैपरीत्यदर्शनात् नास्तिकसंज्ञा अस्याः भवति। जीवात्मनः सम्बन्धे जैनसिद्धान्तानां चार्वाकसिद्धान्तैः सह किमपि साम्यं दृश्यते। अत एव चार्वाकोपरान्तम् अस्य विद्यमानतया अनुकरणे सन्देहो नास्ति।

## १.३) जैनदर्शनस्य उद्भवः

जैनधर्मो यद्यपि अनादिः सनातनश्च वर्तते तथापि तस्य युगप्रवर्तकः ऋषभदेवः आसीत्। ऋषभदेवः ऐतिहासिको महापुरुष आसीत्। तस्य इतिवृत्तम् उपलभ्यते। हिन्दुधर्मस्य अवतारवादिन्या अवधारणया चतुर्विंशत्यवतारेषु षष्ठोऽवतारः ऋषभदेवः आसीत्। तीर्थङ्करेषु आदिभूतात् अयमेव आदिनाथ इति अपि उच्यते। आदिनाथस्य अनन्तरं जैनदर्शनस्य तीर्थङ्करपरम्परा धर्मदर्शनयोः विकासस्य क्षेत्रे उल्लेखनीया अस्ति। तद्यथा- आदिनाथः (ऋषभदेवः), अजिनाथः, सम्भवनाथः, अभिनन्दनः, सुमतिनाथः, पद्मनाथः सुपार्श्वनाथः, चन्द्रनाथः, सुविधिनाथः, शीतलनाथः, श्रेयांसनाथः, वासुपूज्यः, विमलनाथः, अनन्तनाथः, धर्मनाथः, शान्तिनाथः, कुन्थुनाथः, अहरनाथः, मल्लिनाथः, सुव्रतनाथः, नाभिनाथः, नेमिनाथः, पार्श्वनाथः, महावीरः च।

जैनदर्शनस्य युगप्रवर्त्तका आचार्याः तीर्थङ्कराः उच्यन्ते। जैनदर्शनस्य तत्त्वसिन्धौ निमज्जनाय मार्गदर्शकाः तीर्थङ्करसंज्ञां लभन्ते। अत्र तीर्थङ्करपदस्य लाक्षणिकः प्रयोगो भवति। तीर्थङ्करेषु अन्तिमस्य वर्धमानस्य ऐतिहासिकः परिचयम् अवश्यम् उपलभ्यते। वर्धमानस्य जन्म ईस्वीपूर्व ५९९ तमे वर्षे



विहारप्रदेशे अभवत्। त्रिंशत्तमे वयसि वर्धमानेन परिव्रज्या गृहीता, कैवल्याय कठोरं तपो विहितम्। स्वलक्ष्यसिद्धिवशात् अयं सर्वज्ञ इत्यपि ज्ञायते।

जैनधर्मस्य दिगम्बरसम्प्रदाये दार्शनिकचिन्तनं पर्याप्तरूपेण जातम्। पञ्चमहाव्रतेभ्योः अतिरिक्तं शारीरिक-मानसिक-वाचिक चेष्टासु नियन्त्रणस्यापि आवश्यकता प्रतिपादिता। यतो हि अनेनैव मृत्युपर्यन्तं कष्टसहिष्णुतायाः क्षमता जायते। चतुर्दशगुणस्थानानाम् अनुभवः अपि दार्शनिकचिन्तनस्यैव विषयः भवति। एतानि गुणस्थानानि एवं प्रकारेण कथितानि -

मिथ्याव्रतम्, सासादनम्, मिश्रः, अविरत् सम्यक्त्वम्, देशविरतिः, प्रमत्तम्, अप्रमत्तम्, अपूर्वकरणम्, अनिवृत्तिकरणम्, सूक्ष्मसाम्परायः, उपशान्तमोहः क्षीणमोहः, सयोगकेवली, अयोगकेवली च।

जैनसाहित्यम् ऐतिहासिकचिन्तनेन चतुर्षु भागेषु विभक्तम् अस्ति-आगमकालः आरम्भयुगः, मध्ययुगः, अवान्तरयुगश्च। आगमकाले श्वेताम्बरजैनसम्प्रदायस्य आगमसाहित्यं सृष्टम्-(१)आचारङ्गसूत्रम् (२) सूत्रकृताङ्गम् (३) स्थानाङ्गसूत्रम् (४) समवायाङ्गसूत्रम् (५) भगवतीसूत्रम् (६) ज्ञातधर्मकथा (७) उपासकदशा (८) अन्तकृतदशा (९) अनुत्तरोपपादिकदशा (१०) प्रश्नव्याकरणानि (११) विवाङ्सूत्रम् (१२) दृष्टिवादः।

## ९.४) आरम्भकालः

जैनदर्शनस्य आरम्भो दिगम्बरसम्प्रदायाचार्यस्य उमास्वामिनो विचारधाराभिः भवति। उमास्वामिना तत्त्वार्यसूत्रस्य रचना विहिता। एषु तत्त्वार्थसूत्रेषु काले काले वृत्तिभाष्यादिभिः भूषितानि ग्रन्थान्तराणि प्राप्यन्ते। जैनदर्शनस्य इमानि सूत्राणि पाणिनि सूत्राणि इव वर्तन्ते।

उमास्वामिन अनन्तरं दिगम्बरसम्प्रदायस्यैव आचार्येण कुन्दकुन्देन नियमसार–आचारान्तिक–कामसार-समयसार-प्रवचनसार-नामकाः ग्रन्थाः विरचिताः। कुन्दकुन्दाचार्यस्य इमाः रचनाः एव जैनदर्शनस्य विश्वकोश इति मन्यते।

आचार्यसमन्तभद्रः अपि जैनदर्शनस्य क्षेत्रे अभिनवं चिन्तनं प्रस्तुतवान्। देवनन्दिना जैनेन्द्रव्याकरणे आचार्यसमन्तभद्रस्य उल्लेखो विहितः। अस्य रचनासु आप्तमीमांसा, युक्त्यनुसन्धानम्, स्वयम्भूस्तवः जिनस्तुतिशतकम्, रत्नकरण्डकश्रावकाचारः, जीवसिद्धिः, तत्त्वानुसन्धानम्, गन्धहस्तिभाष्यं चेति प्रमुखाः रचनाः सन्ति।

## ९.५) मध्यकालः

जैनदर्शनस्य विकासो मध्यकालस्य प्रारम्भे ईस्वीषष्ठशताब्द्यां भवति। नवमशताब्दीपर्यन्तकालो मध्यकाल एव निधार्यते। अयं कालो जैनसाहित्यस्य स्वर्णयुगोऽस्ति। जैनदर्शनस्य बहूनां मौलिकग्रन्थानां रचना अस्मिन् एव काले संजाता। अस्मिन् कालखण्डे आचार्यः सिद्धसेनो दिवाकरः न्यायावतार-



सन्मतितर्क-तत्त्वार्थटीका-प्रभृतीनां ग्रन्थानां रचनां कृतवान्। आसु रचनासु न्यायावतार इत्याख्यो ग्रन्थो जैनदर्शनस्य स्वरूपं प्रस्तौति।

अष्टमशताब्द्यां हरिभद्रसूरिणा अपि षड्दर्शनसमुच्चय-अनेकान्तवाद –जयपताकादयो ग्रन्था विरचिताः। भट्ट अकलङ्केन तत्त्वार्थसूत्रेषु राजवार्तिकग्रन्थस्य प्रणयनं कृतम्। न्यायविनिश्चयः प्रमाणसंग्रहश्चापि अकलङ्कस्यैव जैनन्यायशास्त्रीयं रचनाद्वयं वर्तते।

## १.६) अवान्तरकालः

दशमशताब्द्या अनन्तरम् अवान्तरकालस्य प्रारम्भः स्वीक्रियते। अस्मिन् काले देवसूरिः प्रमुखः आचार्यः अभवत्। देवसूरिणा अपि जैनन्यायक्षेत्रे प्रमाणानयनतत्त्वालोकालङ्कारः इत्याख्यस्य ग्रन्थस्य रचना कृता। अस्मिन् एव ग्रन्थे अनेनैव आचार्येण स्वयं स्याद्वादरत्नाकरनामकः टीकाग्रन्थोऽपि लिखितः। द्वादशशताब्द्यां हेमचन्द्रेण काव्यव्याकरणयोः क्षेत्रे नूतनं साहित्यं सृष्टम्। प्रमाणमीमांसा हेमचन्द्रस्य सुप्रसिद्धा रचना अस्ति। वस्तुतः एषा अद्वितीया दार्शनिकी रचना वर्तते।

त्रयोदशशताब्द्यां मल्लिषेणसूरिणः 'स्याद्वादमञ्जरी' विरचिता। जैनदर्शनक्षेत्रे एषा रचना पर्याप्तं लोकप्रियतामाप्तवती। इयं रचना हेमचन्द्रकृतस्य 'अन्ययोगव्यवच्छेद' इत्याख्यस्य द्वात्रिंशिकाग्रन्थस्य टीका विद्यते। पञ्चदशशताब्द्यां गुणरत्नेन हरिभद्ररचितं षड्दर्शनसमुच्चयं लक्षयीकृत्य टीकाग्रन्थो रचितः। सप्तदशशताब्द्यां च आचार्येण यशोविजयेन संस्कृतप्राकृत-हिन्दीभाषासु अनेकेषां खण्डनमण्डनात्मकानां ग्रन्थानां सृजनं विहितम्। जैनतर्कभाषाऽस्या प्रमुखा कृतिरस्ति। ग्रन्थानाम् उपादेयतया सह भाषागतं वैशिष्ट्यमपि तत्र स्पष्टं प्रतिभाति।

## १.७) जैनदर्शनस्य तत्त्वमीमांसा

जैनदर्शनानुसारं निखिलब्रह्माण्डस्य मूले सप्त पदार्था विद्यन्ते। दृश्यमाणं सम्पूर्णं जगत् तेषामेव परिणामः अस्ति। एते सप्त पदार्था जैनदर्शनग्रन्थेषु एवं प्रकारेण उल्लिखिताः सन्ति-जीवतत्त्वम्, अजीवतत्त्वम्, आस्रवः, बन्धः, संवरः, निर्जरा, मोक्षश्च। अथ एतेषां यथाक्रमं विवेचनं विधीयते।

### १.७.१) जीवतत्त्वम्

जीवतत्त्वम् आत्मनः सांसारिकम् अवस्थारूपम् अस्ति। तत् चेतनं वर्तते, अनन्तज्ञानदर्शनसामर्थैः युक्तं भवति। व्यवहारजगति पूर्वार्जितकर्मणां प्रभावात् जीवः अनन्तज्ञानेन अनन्तदर्शनेन अनन्तसामर्थ्येन च युक्तो न भवति। तदवस्थायां जीवः अयं औपशमिकैः, क्षायिकैः,क्षायौपशमिकैः,औदयिकैः,पारिणामिकैः,भावैः सहितो भवति। एतेषां संपर्कात् जीवः स्वशुद्धस्वरूपात् भिन्नो भाति। द्रव्यवत् परिवर्तते सति जीव एव पुद्गलरूपेण व्यक्तो भूत्वा संसारीति उच्यते। जीवः परिणामी अस्ति। तस्य सर्वाः क्रियाः पूर्वकृतकर्मणां परिणामस्वरूपं सम्भवति। यदा चेतनः अयं कस्मिन् अपि कर्मणि प्रवर्तते तदा तत्प्रवृत्तेः कारणम् अपि पूर्वोपार्जितम् एव कर्म भवति। प्राप्तदेहानुसारं स्थूलः कृशश्च भवति। कर्मफलस्य भोक्ता अपि जीव एव अस्ति। स एव उर्ध्वगः कथ्यते।

जीवे कर्मणः प्रवेशस्य कारणम् अविद्या वर्तते। यतोहि अविद्याजन्यं कर्म एव जीवात्मानं सांसारिकतया आबद्धं करोति।

बन्धमुक्तेः उपायो ज्ञानम् अस्ति। सत्कर्मणां परिणामस्वरुपं बन्धनावस्थायाम् एव ज्ञानम् उत्पद्यते। ऋते ज्ञानान्न मुक्तिरिति सिद्धान्तानुसारं ज्ञानं बद्धस्य जीवस्य कृते अत्यावश्यकं वर्तते। जीवः अयम् अवयवी इत्यपि उच्यते। अवयवसंघातरुपात् अयमस्तिकायः अपि अस्ति। चैतन्यम् अनुभूतियोगः चेति जीवस्य प्रमुखौ गुणौ स्तः। जीवस्य परिणामः पर्यायः अपि भवति। स च चतुर्धा प्रतिपादितः (१) दिव्यः (२) मानुषः (३) नारकीयः (४) तिर्थक् चेति। पर्यायस्यापि द्वैविध्यं वर्तते द्रव्यपर्यायगुणपर्यायभेदात्। भिन्नेषु अपि द्रव्येषु यत् ऐक्यं प्रतीयते तत् द्रव्यपर्याय उच्यते। परिणामवशात् द्रव्यस्य गुणेषु यत् परिवर्तनं दृश्यते तद् गुणपर्यायो भवति।

## १.७.२) अजीवतत्त्वम्

अजीवः धर्माधर्म-आकाश-पुद्गल-कालभेदात् पञ्चधा अस्ति। एषु आकाशो निरवयवः अस्ति, अतः स अनस्तिकायः अपि वर्तते। गतिमानजीवः पुद्गलसहकारिकारणं द्रव्यविशेषश्च धर्मः कथ्यते। तथा जलचरस्य कृते जलम्, एतद्विपरीतं स्थितिमान् जीवः पुद्गलस्थितिकारणं द्रव्यविशेषश्च अधर्मः कथ्यते। यथा परिश्रान्तस्य कृते आश्रयः। अस्तिकाय द्रव्याणाम् आश्रयप्रदं द्रव्यम् आकाशः अस्ति। अयं अनुमानसिद्धः पदार्थः अस्ति। यतो हि बहुदेशव्यापिजीवः पुद्गलः धर्माधर्म् विस्तार्य प्रदेशपर्यायस्य आकाशस्य सिद्धिः भवति। आकाशोऽपि द्विधा वर्तते-लोकाकाशः अलोकाकाशश्च। पुद्गलं जडद्रव्यं भवति। "पूरयन्ति गलन्ति च पुद्गलाः" इत्यनया व्युत्पत्त्या पुद्गलः परिपूर्णं द्रव्यम् अस्ति। पुद्गलाः अणुरुपाः संघातरुपाः च द्विधा भवन्ति। अनयोः अणुः निरवयवो भवति। संघातः तु रुपरसादिगुणचतुष्टयेन समूहरुपो भवति। कालस्तु प्रत्यक्षविषयो नास्ति, तथापि अनुमानेन एव कालस्य सिद्धिः अस्ति। यतो हि सर्वं जगत् परिणामशीलम् अस्ति। परिणामस्य हेतुतया कालः सिध्यति। कालं विना पदार्थानां स्थितिः असम्भवा वर्तते। प्रत्येकं परिणामः कालाश्रितः अस्ति। प्रत्येकं क्रिया च कालाश्रिता अस्ति। अतः कालः अनुमीयते। विस्ताराभावे कालः अस्तिकायः द्रव्यभिन्नः दृश्यते।



## पाठगतप्रश्नाः-१

१. प्रथमतीर्थङ्करः कः।

२. महावीरःकः।

३. कतिप्रमाणानि जैनदर्शनमते।

४. पुद्गलः कः।

५. द्रवस्य लक्षणं किम्।

६. जैनमते ज्ञानस्य कतिप्रकाराः सन्ति।

७. अनेकान्तवादः केषां मतम् अस्ति।



८. कति तीर्थङ्कराः सन्ति।

९. पञ्चमहाव्रतानि कानि।

१०. द्रवस्य कति भेदाः सन्ति।

## ९.७.३) आस्रवतत्त्वम्

योगेन कर्मपुद्गलानां जीवे प्रवेश आस्रवः अस्ति। आस्रवसम्पर्काद् एव जीवः बन्धे निपतति। जैनदर्शने मनोवाक्कर्माणि क्रियायुक्तानि स्वीक्रियन्ते। एतानि एव योगसंज्ञया उच्यन्ते। यतोहि कर्मपुद्गलाः जडाः भवन्ति, अतः स्वयं जीवः तेषु कर्मसु प्रविष्टो नैव भवितुं शक्नोति। अपितु योगेनैव कर्मपुद्गलानां जीवे स्वाभाविकरुपेण प्रवेशो भवति। आस्रव एव बन्धस्य कारणम्। स च द्विधा वर्तते, भावास्रवो द्रव्यास्रवश्च। यावत् कर्मपुद्गलानां जीवे प्रवेशो न भवति, तावत् स भावास्रवः क्थ्यते। जीवे कर्मपुद्गलानां प्रवेश एव् द्रव्यास्रव उच्यते। उदाहरणार्थं वस्त्रस्य आर्द्रीकरणानन्तरं मलिनताप्राप्तिरुपिणि कार्ये क्रियाद्वयं दृश्यते। प्रथमा क्रिया जलसिक्तिः अस्ति अपरा च धूलिकणैः संसर्गरुपा वर्तते। मलिनताया उभयमेव हेतुर्भवति तत्र जलसिक्तौ भावास्रवोऽस्ति, धूलिकणसंसर्गे च द्रव्यास्रवो वर्तते। प्रधानभूताः आस्रवाः सप्तदश सन्ति। ये मनोयोगैः, वाग्योगैः, काययोगैः सह पञ्च ज्ञानेन्द्रियाणां, चतुः कषायाणां , पञ्चमहाव्रतानां च परित्यागात् जायन्ते।

## ९.७.४) बन्धतत्त्वम्

जीवे कर्मपुद्गलानां प्रवेशाद उत्पन्नो बन्धभावो बन्ध इति उच्यते। बन्धः अपि रुपद्वये व्यवहृतो भवति। तद्यथा भावबन्धो द्रव्यबन्धः च इति। बन्धस्य कारणमास्रवो भवति यतो हि आस्रवमेव जीवस्य मूलस्वरुपं नश्यति। मिथ्यात्वम्, अविरतिः, व्रतादिनियमानाम् अनायासम् उपेक्षा चापि बन्धस्य हेतवः सन्ति।

## ९.७.५) संवरतत्त्वम्

कर्मपुद्गलानां जीवे प्रवेशस्य अवरोधः संवर इति कथ्यते। अयमवरोधो वस्तुतः आस्रवस्य आस्रवजन्यबन्धस्य च भवति। अस्य क्रियान्वयनं सर्वेभ्यः विकारेभ्यो रहिते सति एव सम्भवति। संवरस्य अपि भेदद्वयं विद्यते भावसंवरो द्रव्यसंवरश्च। जैनदर्शने कर्मपुद्गलानां जीवे प्रवेशस्य द्वाषष्टिः उपायाः कथिताः। तेषु पञ्च बाह्याः अवशिष्टा आभ्यन्तराः सन्ति।

बाह्या उपायाः समितयः इत्यपि कथ्यन्ते। तद्यथा ईर्यासमितिः, भाषासमितिः, एषणा समितिः, आसन्निक्षेपणसमितिः, प्रतिस्थापना-समितिश्चेति। ये सम्भवाः उपायाः सन्ति ते गुप्तय इति उच्यन्ते। तद्यथा मनोगुप्तिः, कायगुप्तिश्चेति। समितिषु सत्क्रिया प्रवर्तते किन्तु गुप्तिषु असत्क्रिया निरुध्यते। संवरस्य प्रक्रियायां परीषहस्य महत्त्वपूर्णं योगदानमस्ति। मुक्तिमार्गे प्रवृत्त्यर्थं कर्मक्षयाय गृह्यमाणं सहिष्णुत्वं परीषह इति कथ्यते। परीषहस्य द्वाविंशतिर्भेदाः सन्ति। कर्मक्षयाय पञ्चभिः महाव्रतैः, दशभिः धर्मैः द्वादशभिः



अनुप्रेक्षाभिः, द्वाविंशपरीषहैः, पञ्चभिः चरित्रैश्च संवरः अनुष्ठीयते। चरित्रस्य पञ्चभेदाः सन्ति। तत्र एवं प्रकारेण सम्प्रोक्ताः –सामयिकं, छेदोपस्थापनम्, परिहारविशुद्धिः सूक्ष्मसाम्परायः, यथाख्यातञ्चेति। एषां समेषामनुपालनेन जीवात्मनि कर्मपुद्गलानां प्रवेशो निरुध्यते।

## ९.७.६) निर्जरातत्त्वम्

आत्मनि कर्मपुद्गलानां नूतनप्रवेशस्य अवरोधः, पूर्वविशिष्टपुद्गलानां विनाशश्च निर्जरा इति उच्यते। निर्जराम् अवलम्ब्य एव कश्चित् साधकः आत्मदर्शनं कर्त्तुं शक्नोति। यथार्थतस्तु पूर्वोक्तानां द्वाषष्टिः उपायानां साधना कठोरश्रमसाध्या भवति। ततः अपि अधिकश्रमः आत्मस्थानां कर्मपुद्गलानां विनाशकार्ये जायते। साधकस्य एषा अवस्था निदिध्यासनस्वरुपा इति कथ्यते। अनयैव अवस्थया साधकः आत्यन्तिकीं दुःखनिवृत्तिम् अनुभवति। निर्जरा अपि जैनदर्शने द्विधा प्रतिपादिता भावनिर्जरा द्रव्यनिर्जरा चेति। आत्मस्थानां कर्मपुद्गलानां विनाशस्य भावना भावनिर्जरा भवति, तेषां कर्मपुद्गलानां विनाशस्य क्रिया च द्रव्यनिर्जरा भवति। कर्मपुद्गलानां विनाशस्य भावनादशायां कर्मणाम् उपभोगानन्तरं कर्मपुद्गलाः स्वत एव नश्यन्ति। सा दशा सविपाकभावनिर्जरा कथिता। यदि च कर्मणाम् उपभोगात् पूर्वरेव कर्मपुद्गलानां विनाशो भवति, तदा साधकस्य सा दशा अविपाकभावनिर्जरा कथ्यते। एषा अविपाकभावनिर्जरा अतीव दुर्लभा मन्यते। अस्याः कृते कठोरतपसः आवश्यकता प्रतिपादिता अस्ति।

## ९.७.७) मोक्षतत्त्वम्

कर्मपुद्ग्लेभ्यःपूर्णतया मुक्तो भूत्वा जीवात्मा सर्वज्ञः सर्वद्रष्टा च भवति। जैनदर्शने आत्मनः एषा अवस्था जीवन्मुक्तिः अथवा मोक्ष इति उच्यते। अयं मोक्षः भावमोक्ष एव भवति। पूर्णरुपेण मोक्षस्य प्राप्त्यर्थं तु ज्ञाना वरणीय-दर्शनावरणीय-मोहनीय-अन्तरायानां चतुर्ण्णां घातीयकर्मणां, आयु–नाम-गोत्र-वेदनीय-संज्ञकानां चतुर्ण्णां अघातीयकर्मणां चापि विनाशः आवश्यको भवति। एतद् अनन्तरमेव द्रव्यमोक्षो लब्धुं शक्यते।

मोक्षावस्थायां जीवः सर्वेभ्यः औपशमिक-क्षाणौपशमिक–औदयिक भव्यत्वादिभ्यो भावेभ्यो मुक्तो भवति। स उर्ध्वगतिशीलो भवति। अतएव च उर्ध्वमेव गच्छति। किन्तु लोकाकाशात् परे यः अलोककाशः अस्ति तत्र धर्मास्तिकायस्य अभावे जीवः न प्रवेष्टुं शक्नोति। स पुनः ततः संसारे अपि आगन्तुं नैव क्षमते। जैनदर्शानानुसारं मुक्तो जीवः परमात्मनि ऐक्यभावं न लभते। अर्थात् परमात्मनि तस्य लयो न भवति। परिणामस्वरुपं मुक्तः अपि जीवः अनन्तकालपर्यन्तं सिद्धशिलायामेव वसति। अयमेव मोक्षो मन्यते।

## ९.८) प्रमाणपरिचयः

जैनदर्शने ज्ञानस्य द्वैविध्यं स्वीकृतम अस्ति, निर्विकल्पं सविकल्पं चेति। निर्विकल्पस्य चत्वारो भेदाः सन्ति, चक्षुः , अचक्षुः, अवधिः केवलश्च। सविकल्पस्य पञ्च भेदाः भवन्ति मतिः, श्रुतिः, अवधिः, मनः पर्यायः, केवलश्च। सविकल्पस्य ज्ञानस्य पञ्चभेदा एव प्रमाणाय विषयीभूताः स्वीक्रियन्ते। प्रमाणं तु यथार्थज्ञानं भवति, यं हि जीवोः स्वेतरस्य कस्यापि साहाय्यं विना लभते। जैनदर्शने प्रत्यक्षस्य कृते



मनसः इन्द्रियाणां वा आवस्यकता नास्ति, यतो हि तत्र सर्वदा वस्तुनो यथार्थज्ञानमेव उत्पादयति। जैनदर्शने प्रमाणं द्विधा निरुपितम्। तत्र प्रत्यक्षमपि द्विविधं पारमार्थिकं व्यावहारिकञ्च। पारमार्थिकं प्रत्यक्षं तद् अस्ति यत् कर्मप्रभावतो मुक्तं स्यात्, स्वातन्त्र्येण चात्मानं प्रकाशयेत्। अनेनैव जगत् प्रकाशितं भवति। यस्य ज्ञानस्य कृते जीव इन्द्रियार्थसन्निकर्षे मनसि च निर्भरो भवति तत् व्यावहारिकं प्रत्यक्षं भवति।

साकारस्य ज्ञानस्य मति-श्रुति-अवधि-मनः पर्याय-केवल-भेदात् पञ्च प्रकाराः सन्ति। एषु मतिज्ञानं चतुर्धा प्रतिपादितम्-अवग्रहः अर्थात् संयोगसन्निकर्षः, ईहा संयुक्तसमवायरुपा, अवायः संयुक्तसमवेतसमवायरुपः, धारणा चेति। आगमैः आप्तवचनैः वा प्राप्तं ज्ञानं श्रुतज्ञानं भवति। मतिश्रुतज्ञानयोः अपि भेदकत्वं जैनदर्शने निर्दिष्टम्। तथा हि मतिज्ञानं केवलं वर्तमानाश्रितं भवति किन्तु श्रुतज्ञानं त्रैकालिकं भवति। जैनगमानुसारं श्रुतज्ञानं मतिज्ञानापेक्षया प्रामाणिकम् अस्ति। यतो हि मतिज्ञानं परिणामाश्रितं भवति, किन्तु श्रुतज्ञानम् आप्तवचनं कारणातीतम् च अस्ति।

घातीयेभ्यः अघातीयेभ्यः कर्मभ्यो मुक्तो जीवो यदा इन्द्रियादीनि करणानि विना ज्ञानं प्राप्नोति तदा तत् ज्ञानं पारमार्थिकं प्रत्यक्षम् उच्यते। पारमार्थिकप्रत्यक्षस्य अपि भेदद्वयं विद्यते केवलज्ञानं विकलज्ञानं च। रागद्वेषादिरहितम् अर्हत्सु विद्यमानं केवलज्ञानं भवति। विकलज्ञानं तु अवधिमनः पर्यायभेदात् द्विधा वर्तते। ज्ञानावरणे विनिष्टे सति देवतासु नारकीयेषु च स्वभावतो जायमानं ज्ञानं, मनुष्येषु इतरतिर्यग्योनिषु च प्रयत्नपूर्वकं विधीयमानं सम्यग् दर्शनजन्यज्ञानम् अवधिज्ञानं भवति। सम्यकचारित्रेण ज्ञानावरणे विनष्टे यद् ज्ञानम् उत्पद्यते जनमनस्सु सीमितं च दृश्यते, तत् मनः पर्यायज्ञानं भवति। इदं विशेषेण तपस्विभिः एव प्राप्यते।

परोक्षप्रमाणम् (अनुमानम्) हेतुना साध्यस्य ज्ञाने या प्रक्रिया भवति सा अनुमानम् इति उच्यते। अनुमानमपि द्विधा प्रतिपादितम् स्वार्थानुमानं परार्थानुमान् चेति। बहुभिः दृष्टान्तैः एकस्य अनिश्चितायाः अवधारणायाः पुष्टिः स्वार्थानुमानम् अस्ति। यथा बहुवारं धूमं विह्नियुक्तं दृष्ट्वा दर्शकः स्वमनसि निर्धारयति यत्र यत्र धूमस्तत्र तत्र वह्निरिति। अत्र कारणरुपस्य धूमस्य कार्यरुपस्य वह्नेश्च साहचर्यं व्याप्तिनाम्ना कथ्यते। अतः साहचर्यनियमो व्याप्तिः इति सिद्धान्तो निर्धारितः। कदाचित् कुत्रचित् सुदूरं पर्वतादौ धूमं दृष्ट्वा पूर्वनिश्चितायाः व्याप्तेः स्मरणात् "यत्र यत्र धूमस्तत्र तत्र वह्नि" रिति नियमस्य आधारेण दर्शकः पर्वते वह्निज्ञानं करोति। दर्शकः स्वमनसि विश्वसिति यत् यत्रापि धूमो भविष्यति तत्रैव वह्निः अवश्यं भविष्यति। यतोऽहि इमां धारणां सः पूर्वमपि बहुभिः दृष्टोदाहरणैः कृतवान्। अतः धूमे सति वह्नेः निश्चये स्वार्थानुमानं क्रियान्वितं भवति। अस्मिन् स्वार्थानुमाने यत्र साध्यसिद्धिः सन्दिग्धा भवति, सः पक्षो भवति, यतो हि तस्मिन् हेतुरुपो धूमः स्पष्टरुपेण परिलक्षितो भवति। अर्थात् पर्वतरुपिणि पक्षे दृश्यमाणो धूमः पक्षधर्मः अस्ति। यतो हि सः धूमो धूमवत्त्वधर्मेण विशिष्टः अस्ति। धूमवत्वेन विशिष्टस्य धूमस्य पर्वतरुपिणि पक्षे विद्यमानता पक्षधर्मता भवति। एवं व्याप्तिः पक्षधर्मता चेत्यनुमानस्य मुख्यम् अङ्गम् अस्ति। अतो व्याप्तिविशिष्टपक्षधर्मतायाः ज्ञानमनुमानं मन्यते।



परार्थानुमाने अनुमानस्य उक्तो विधिः परेभ्योः अवगमयितुं उपयुज्यते। किन्तु अस्मिन् पञ्च अवयवाः भवन्ति-प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः निगमनं चेति। यथा " पर्वतो वह्निमान् धूमात्" इत्यस्मिन् वाक्ये पर्वते वह्निः अस्ति इत्यस्य ज्ञापनार्थं प्रतिज्ञा विद्यते। 'धूमात्' इति कथनं हेतुः अस्ति यतो धूमं विना 'पर्वते वह्निरस्ति' इत्यस्य अनुमानं न भवति। यत्र यत्र धूमः तत्र तत्र वह्निः यथा महानस इति उदाहरणं विद्यते। यथा महानसे तथा अत्र पर्वते इति उपनयः अस्ति। पर्वते अपि धूमात् अग्निरेव नान्यत् इति निगमनम् अस्ति। आचार्यभद्रबाहुः उक्तवान् यत् परार्थानुमानस्य प्रक्रियायां दश अवयवा भवन्ति- (१) प्रतिज्ञा (२)प्रतिज्ञाविभक्तिः (३) हेतुः (४) हेतुविभक्तिः (५) विपक्षः (६) विपक्षप्रतिषेधः (७) दृष्टान्तः (८) आशङ्का (९) आशङ्काप्रतिषेधः (१०) निगमनम चेति। अनुमाने प्रायेण पक्षः साध्यो हेतुश्चेति त्रीणि अङ्गानि भवन्ति। अनुमानेन यस्य ज्ञानं विधीयते तत् साध्यं भवति यथा " पर्वतो वह्निमान्" इत्यादौ वह्निः। यस्मिन् आश्रये साध्यस्य सिद्धिः विधीयते सः पक्षो भवति, यथा "पर्वतो वह्निमान्" इत्याद्युदाहरणे पर्वतः। साध्यस्य सिद्धये यत् साधनं भवति, तत् हेतुर्भवति, यथा "पर्वतो वह्निमान् धूमवत्त्वात्" इत्याद्युदाहरणे धूमवत्त्वम्।

## ९.९) नयज्ञानम् स्यात्वादो वा

प्रमाणातिरिक्तात् दृष्टिभेदादपि तत्त्वज्ञानस्य उत्पत्तिः सम्भवति। अयं दृष्टिभेदो नय इत्युच्यते। जैनदर्शनस्य चिन्तने एकं वस्तु अनेकधर्मयुतं भवति। तेषु अनेकेषु धर्मेषु विद्यमानेष्वपि एकस्य धर्मविशेषस्य ग्रहणेन वस्तु निश्चीयते। तत्र वस्तुनिश्चयस्य प्रक्रिया नय इत्युच्यते। नयेन वस्तुनः एकस्य एव व्यङ्गस्य ज्ञानं भवितुं शक्नोति, किन्तु प्रमाणेन वस्तुनः अनेकेषां धर्माणां ज्ञानं भवति। नयोऽपि द्विधा भवति निश्चयनयो व्यावहारिकनयः चेति। निश्चयनयेन वस्तूनां तात्विकं ज्ञानं जायते। व्यावहारिकनयेन च वस्तूनां सांसारिकं ज्ञानं भवति। एतद् अतिरिक्तमपि वस्तूनां विभिन्नानि रूपाणि विभिन्नदृष्ट्या अवगन्तुम् अनेके नयाः जैनदर्शने स्वीकृताः सन्ति। येषु द्रव्यार्थिकनयः पारमार्थिकनयश्च प्रमुखौ स्तः। कर्मवादजैनदार्शनिकैः अपि कर्माण्येव बन्धनानां मुख्यकारणतया स्वीकृतानि सन्ति। कर्मवशादेव जीवस्य क्रोध मानमायालोभादिभिः चतुर्भिः कषायैः अनादि अनन्तं च सम्पर्को भवति। अतः कर्म एव अविद्याऽस्ति। इदं स्वीकर्त्तुं शाक्नोति। यतो हि जीवस्य कर्मणां तत्सम्पर्कगैः वस्तुभिः सम्बन्धः तिष्ठति। कर्मसम्बन्धिनः पुद्गलाः कर्मपुद्गलाः भवन्ति।

**स्वाभाववादः** अनेकान्तवादश्च वादद्वयं जैनदर्शने स्तः। जैनमतानुसारेण सतो द्रव्यस्य वा स्वभावपरिणामिता स्वीक्रियते। अतः तस्य उत्पादव्ययौ जायेते। तथापि द्रव्यस्य सतो वा मूलतो ध्रौव्यम् अस्ति। अतः तस्य विनाशो न जायते यथा घटः पटो वा। घटस्य उत्पत्तिः मृत्तिकया भवति। पुनश्च तस्य विनाशो भूत्वा ध्वंसरूपः अवशिष्यते। स च मृत्तिका एव अस्ति। पदार्थस्य मौलिकं रूपं यथा घटस्य मृदा, उभयोः अवस्थयोः भवति। इदमेव ध्रौव्यमस्ति। तत्त्वचिन्तनस्य दशायां अनेकेषां धर्माणां विचारः आवश्यकः अस्ति। तदैव तद्वस्तुनः स्वरूपस्य परिचयः प्राप्यते। परिणामिनित्यतावादः जैनाः स्वीकुर्वन्ति। जैनसिद्धान्तानुसारेण सत्सु द्रव्येषु वा उत्पादव्ययध्रौव्यादयो गुणा विद्यन्ते। उत्पादविनाशसदृशयोः अवस्थयोः अपि वस्तुनः अस्तित्वं सिदध्यति। परस्परविरुद्धयोः अवस्थयोः अपि



विद्यमानतया अयं परिणामिनित्यतावादः अनेकान्तवादो वा कथ्यते। जैनमतेन चेतनाचेतनयोः सर्वयोः पदार्थयोः असंख्याः धर्माः सन्ति। यथा आत्मनि सत्त्व-व्यापकत्व-चेतनत्वादयाः धर्माः विद्यन्ते। किन्तु इमाः धर्माः कस्यापि अपरस्य वस्तुनः अपेक्षया वर्तन्ते। कस्यापि अन्यस्य अपेक्षया च नैव वर्तन्ते। एवं कस्यचिद् अपेक्षया आत्मा सत् अस्ति कस्यचिच्च अपेक्षया आत्मा असत् वर्तते। वस्तुतस्तु वस्तुनः स्वरूपं न केवलं तस्यैव वस्तुनो ज्ञानस्य अपेक्षा न भवति। अपितु अन्येषाम् अपि वस्तूनां ज्ञानमावश्यकं भवति। येषाम् अपेक्षया मूलवस्तुनः स्वरूपं ज्ञातुं शक्यते। अर्थात् एकस्य वस्तुनः अवज्ञानाय अन्यवस्तूनां सम्भावना अपि परोक्ष्या भवति। एषा सम्भावना जैनदर्शने 'स्याद्' इति पदेन व्यज्यते।

**स्याद्वादः** जैनदर्शने सप्तभङ्गीन्यायेन प्रदर्श्यते। तद्यथा १)स्याद् अस्ति। २)स्यान् नास्ति। ३)स्याद् अस्ति च नास्ति च। ४)स्याद् अवक्तव्यः। ५)स्याद् अस्ति च अवक्तव्यः। ६)स्याद् नास्ति च अवक्तव्यः। ७)स्याद् अस्ति च नास्ति च अवक्तव्यः। अयं एव सप्तभङ्गीन्यायः।

## ९.१०) आर्हतदर्शने केचन प्रसिद्धाः श्लोकाः

"सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः।
यथास्थितार्थवदी च देवोर्हन्परमेश्वरः। इति "

**अन्वयः-**

सर्वज्ञः जीतरागादिदोषः त्रैलक्यपूजितः यथास्थितः अर्थवादी देवः परमेश्वरः च अर्हत्।

**व्याख्यानम्-**

अत्र श्लोके अर्हतः स्वरूपम् उच्यते। यः सर्वज्ञः सर्वं विशेषणं वेत्तिः। रागादिदोषैः रहितः। लोकत्रये पूज्यः। यथा पश्यति तथैव वदति तन्नाम यथार्थः वक्ता। अपि च स एव परमेश्वरः। स एव अर्हत् इति पदेन उच्यते अतः यथा भगवतः स्वरूपम् अस्ति तथैव अर्हतः अपि स्वरूपम्। रागादिवासनाजनितः जीवः, तद्व्यतिरिच्य सर्वदोषरहितः आर्हत्। अत्र एतत् ज्ञातव्यं यत् यद्यपि जैनाः ईश्वरं न अङ्गीकुर्वन्ति तथा अर्हतम् एव ईश्वरवत् पूज्यते।

यथावस्थिततत्त्वानां संक्षेपाद्विस्तरेण वा।
योवबोधस्तमत्राहुः सम्यग्ज्ञानं मनीषिणः। इति।

**अन्वयः-**

मनीषिणः यथावस्थितत्त्वानां संक्षेपाद् विस्तरेण वा यः अवबोधः (भवति) तं अवबोधं सम्यग्ज्ञानं आहुः।

**व्याख्यानम्-** जैनदर्शने सम्यग्ज्ञानं स्वीक्रियते। ननु किं तावत् सम्यग्ज्ञानम् इति चेद् उच्यते यत् वस्तुनः यथा स्तितिः वर्तते तथा वस्तुनां तत्त्वानां ज्ञानम् एव सम्यग्ज्ञानम्। तद् संक्षेपेण वा भवतु विस्तरेण वा भवतु। परन्तु वस्तुनां यथास्थितिः तथा तत्त्वज्ञानमेव सम्यग्ज्ञानम् इति। अस्य च सम्यग्ज्ञानस्य पञ्चभेदाः वर्तन्ते। एतादृशैः ज्ञानप्रकारैः जैनानां वस्तु अवधारणा भवति।



## पाठगतप्रश्नाः-२

साधु उत्तरस्य चयनं कर्तव्यम्

११. स्याद्वादस्य कति प्रकाराः सन्ति।

१)पञ्च २) सप्त ३) अष्टौ ४) षट्

१२. जैनाः किं ईश्वरम् अङ्गीकुर्वन्ति।

१)करोति २) न स्वीकुर्वन्ति ३) उययम्

१३. जैनदर्शनमते जीवस्य बन्धकारणम् किम्।

१)कर्म २) दुःखम् ३) अज्ञानम् ४) माया

१४. जैनमते ज्ञानस्य किं स्वरूपम्।

१) स्वप्रकाश २) अप्रकाशः ३) अनित्यम् ४) एतत्त्रयम् नास्ति

१५. गुप्तेः कति प्रकाराः सन्ति।

१)द्वौ २) त्रय ३) पञ्च ४) चत्वारि

१६. जैनमते कालस्य स्वरूपम् किम्।

१७. जैनदर्शनानुसारं धर्माधर्मयोः स्वरूपम् किम्।

१८. अनेकान्तवादस्य वर्णनां कुरुत।

१९. जैनसम्प्रदायस्य वर्णनां कुरुत।



## पाठसारः

पाठे अस्मिन् जैनदर्शनस्य विषये आलोचना कृता। जैनानाम् उत्सः। तेषां धर्मप्रचारकानां नामानि। जैनानाम् आचारानुष्ठानानि अपि उक्तानि। जैनानां प्रमाप्रमाणविषये आलोचना वर्तते। अपि स्याद्वादस्य वर्णना अत्र पाठे अस्ति। जैनानां जीवविषये आलोचना कृता। जैनदर्शने मोक्षः कः वा कथं मोक्षः भवति तद्विषये आलोचना वर्तते। जैनानाम् अनेकात्मवादस्य वर्णना दृश्यते। भारतीयदर्शषु जैनानां स्थानम् आलोचितम्। किञ्च तेषां नास्तिकदर्शनत्वं कथं तदपि अत्र पाठे प्रदर्शितम्।



## पाठान्तप्रश्नाः

१. जैनदर्शनस्य अवदानं लिखत।

२. जैनदर्शनस्य प्रमाणविषये आलोचनां कुरुत।



३. जैनदर्शने मोक्षस्वरूपं लिखत।

४. पुद्गलनिर्जीवतत्त्वविषये टिप्पणीं लिखत।

५. जैनानां साधनविषये आलोचनां कुरुत।

६. जैनादर्शनस्य नास्तिकत्वविचारः।

७. जैनाः प्रमयेविषये लघुनिबन्धं लिखत।

८. अनेकान्तवादस्य अङ्गीकारः कथं तत् प्रतिपादयत।



## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि १

१. ऋषभदेवः।

२. जैनतीर्थङ्करः।

३. प्रमाणद्वयम्।

४. अचेतनजडद्रव्यमेव पुद्गलः इति कथ्यते। पूरयन्ति गलन्ति च इति व्युत्पत्त्या पुद्गलः इति कथ्यते।

५. गुणपर्यायवत् द्रव्यमिति।

६. पञ्चप्रकाराः सन्ति।

७. जैननां वर्तते।

८. चतुर्विंशतिः तीर्थङ्कराः सन्ति।

९. अहिंसा-सुनृत-अस्तेय-ब्रह्मचर्य-अपरिग्रहश्चेति पञ्चमहाव्रतानि।

१०. द्रव्यस्य प्रकारद्वयं वर्तते। अस्तिकायः अनस्तिकायश्चेति।

### उत्तराणि २

११. सप्त प्रकाराः।

१२. ईश्वरं नाङ्गीकुर्वन्ति।

१३. कर्म।

१४. स्वप्रकाशः।

१५. द्वौ।

१६. जैनमते कालः आकाशस्य इव अनुमेयः। कालः अनस्तिकायद्रव्यम्। कालः देशे वा एकस्मिन् स्थाने न तिष्ठति। कालः अविभज्य अपि व्यवहारिकप्रयोजने खण्डोऽपि क्रियते। अतीतादिव्यवहारः अपि कालस्य साह्येन एव भवति। न्यायवैशषिकमते कालः षष्ठद्रव्यम्। कालः नित्यं एकः विभुः भवति। कालः सर्वेषां आधारभूतः सर्वकार्यस्य निमित्तकारणम्।



१७. अस्माभिः यथा सामान्यतः धर्माधर्मौ इत्युक्ते पापपुण्यौ इति ज्ञायते। परन्तु जैनदर्शने धर्मः इत्युक्ते गतिः इति उच्यते। अधर्मः इत्युक्ते स्थितेः ग्राहकः। गतिस्थित्योः नियामकरूपेण धर्माधर्मौ अनुमितौ। तौ नित्यौ अरूपौ निष्क्रियौ भवतः। किञ्च वेदविहितकर्मानुष्ठानेन आत्मनि यः गुणः उत्पद्यते स गुणःधर्मः इति। पक्षान्तरे वेदोक्तनिषिद्धकर्मणा आत्मनि यः गुणः उत्पद्यते स अधर्मः। सुखेन यथा धर्मस्य अनुमानं क्रियते तथा दुःखेन अधर्मस्य अनुमानं क्रियते।

१८. जैनाः अनेकान्तवादं स्वीकुर्वन्ति। अनेकान्तवादमते वस्तुनः यथार्थतत्त्वम् एकान्तभावेन न ज्ञातुं शक्यते। कारणं हि जीवस्य ज्ञानं परिमितं भवति। मृन्मयघटः यथा मृत्तिकारूपेण सत्यं तथैव मृत्तिकायाः विकाररूपेण अपि सत्यम् भवति। स्वस्वसम्प्रदायदार्शनिकाः विशेषदृष्टिभेदात् बहुधा व्याख्यानं कुर्वन्ति। परन्तु तेषां व्याख्यानुसारेण एतत् तत्त्वं एव एकान्तभावेन सत्यमिति वक्तुं न शक्यते। प्रत्येकस्य मतवादस्य आंशिकसत्यता भवति न तु सम्पूर्णतः सत्यता भवति। केवलं स्वसम्प्रदायः एव सत्यं अपरस्य सम्प्रदायस्य तत्त्वं मिथ्या एतत् एकान्तभावेन उच्यते। परन्तु वस्तुमात्रं अनन्तधर्मविशिष्टम्। अतः एतत् वस्तु सदेव वा असद् इति निर्दिष्टरूपेण वक्तुं न शक्यम्। अतः अनेकान्तवादः स्वीकर्तव्यः।

१९. जैनदर्शने चतुर्विंशतिः तीर्थङ्कराः सन्ति। प्रथमः ऋषभदेवः अन्तिमः महावीरः। श्वेताम्बरः दिगम्बरश्च जैनानां द्वौ सम्प्रदायौ। श्वेताम्बरसम्प्रदायिकाः उदारपन्थिनः भवन्ति। पक्षान्तरे दिगम्बरसम्प्रदायिकाः चरमपन्थिनः भवन्ति। यद्यपि मौलिकविषये तयोः पार्थक्यं न दृश्यते तथापि आचरणभेदेन पार्थक्यं दृश्यते।

॥ इति नवमः पाठः ॥



१०

# न्यायदर्शनम्

## प्रस्तावना

दृशिर् प्रेक्षणे इति धातोः परं भावे ल्युट्प्रत्यये दर्शनशब्दः निष्पद्यते। स च दर्शनशब्दः यद्यपि बहुत्र चाक्षुषप्रत्यक्षज्ञानवाची तथापि एषु प्रसङ्गेषु स तत्त्वज्ञानवाची। अपिच 'दृश्यते ज्ञायते अनेन' इति करणे ल्युट्-प्रत्यययोगे निष्पन्नः दर्शनशब्दः न्यायादिविद्यावाचकः। गौण्या वृत्त्या तद्विद्याप्रतिपादकग्रन्थवाचकश्च। भारतीयं प्राच्यं दर्शनं तावत् द्विविधम् - आस्तिकं नास्तिकञ्च। आस्तिकानि दर्शनानि तानि यानि वेदं प्रमाणरूपेण गणयन्ति। तानि नास्तिकानि यानि वेदस्य प्रामाण्यं न स्वीकुर्वन्ति। नास्तिकदर्शनं प्राधान्येन त्रिविधम् - चार्वाकाः बौद्धाः जैनाश्चेति। तेषु कर्मज्ञानोभयकाण्डस्यैव प्रामाण्यस्य निराकरणात् चार्वाकाः चरमनास्तिकाः। बौद्धाः जैनाश्च मुख्यतः कर्मकाण्डस्यैव प्रामाण्यं निराकुर्वन्ति। ततः ते चार्वाकवत् न चरमनास्तिकाः। आस्तिकेषु षट् प्रधानानि दर्शनानि वर्तन्ते - न्यायवैशेषिकसांख्ययोगमीमांसावेदान्ताश्चेति। समेषाम् एव दर्शनशास्त्राणां मूलम् उद्देश्यं मोक्षः एव। तस्मात् दर्शनशास्त्रं मोक्षशास्त्ररूपेण कथ्यते।



## उद्देश्यानि

अनेन पाठेन भवान् अधोलिखितान् विषयान् ज्ञास्यति-

- न्यायदर्शनस्य माहात्म्यम्
- न्यायशब्दस्य अर्थः
- न्यायशास्त्रस्य बीजम्
- कालभेदेन न्यायशास्त्रस्य विभागः
- न्यायशास्त्रस्य आचार्याः
- न्यायशास्त्रस्य विषयाः
- न्यायमते प्रमाणतत्त्वम्
- न्यायमते प्रमेयतत्त्वम्
- हेत्वाभासपरिचयः
- न्यायमते मोक्षः
- असत्कार्यवादः



## १०.१) न्यायदर्शनस्य माहात्म्यम्

आस्तिकसम्प्रदाये न्यायदर्शनम् अन्यतमम्। एतत् च कुत्रचित् तर्कशास्त्रम् आन्वीक्षिकी वा इति नाम्ना अभिधीयते। कौटिलीये अर्थशास्त्रे एतस्य शास्त्रस्य महत्त्वम् उल्लिख्य भूयसी प्रशंसा कृता। तथा हि–

प्रदीपः सर्वविद्यानाम् उपायः सर्वकर्मणाम्।

आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता॥ इति।

वस्तुतः न्यायशास्त्रस्य या युक्तिपद्धतिः सा विशेषतया सर्वैः व्याकरणालंकारादिदर्शनसम्प्रदायैः स्वीकृता। तया एव युक्त्या वेदादीनां विद्यानां ग्रहो दृढो भवति। अतः तत् न्यायशास्त्रं शश्वद् इति चिन्त्यते। तथा च साहित्ये न्यायशास्त्रस्य प्रभावस्य दिङ्मात्रमुदाहरणम् नैषधचरिते। तत्र श्रीहर्षेण न्यायशास्त्रानुसारं मनसः अणुपरिमाणत्वमुक्तम्। तत्र अणुपरिमाणैः जनस्य चेतोभिः सह धूलिकणानामुपमा प्रदत्ता। तथा च श्लोकः-

अजस्रभूमीतटकुट्टनोत्थितैः उपास्यमानं चरणेषु रेणुभिः।

रथप्रकर्षाध्ययनार्थमागतैः जनस्य चेतोभिरिवाणिमाङ्कितैः॥ इति।

## १०.२) न्यायशब्दस्य अर्थः

नीयते प्राप्यते विवक्षितार्थसिद्धिः अनेन इति नीधातोः करणे घञ्प्रत्यययोगे न्यायशब्दः व्युत्पद्यते। भाष्यकारः वात्सायनः न्यायशब्दस्य अमुमर्थम् आह – प्रमाणैरर्थपरीक्षणं न्यायः इति। अत्र प्रमाणैः इति पदेन अनुमानस्य पञ्च अवयवाः गृहीताः। प्रतिज्ञा हेतुः उदाहरणम् उपनयं निगमनञ्चेति पञ्च अवयवाः। प्रत्यक्षादीनि प्रमाणानि च एतेषाम् अवयवानां मूलम्। तथा हि उक्तं वात्सायनेन भाष्ये –

"तेषु प्रमाणसमवायः। आगमः प्रतिज्ञा। हेतुः अनुमानम्। उदाहरणं प्रत्यक्षम्। उपनयनम् उपमानम्।" इति।

अर्थपदेन च अनुमेयः पदार्थः ग्राह्यः। अतः प्रमाणैः पञ्चभिः अवयवैः अर्थस्य अनुमेयस्य पदार्थस्य परीक्षणं परीक्षा न्यायः इति। तेन च परोक्षतया अनुमानं प्रमाणम् एव न्यायशब्दस्य फलितः अर्थः भवति।

पूर्वम् उक्तं यत् न्यायशास्त्रम् आन्वीक्षिकीपदेन उच्यते। अनु पश्चात् ईक्षा ज्ञानम् इति अनुमानपरम् अन्वीक्षापदम्। अतः भाष्यकारः वात्सायनः आह–

"प्रत्यक्षागमाभ्यामीक्षितस्य अन्वीक्षणम् अन्वीक्षा। तया प्रवर्तते इति आन्वीक्षिकी न्यायविद्या, न्यायशास्त्रम्।" इति।

अत्रायम् आक्षेपो भवितुमर्हति यद् न्यायशब्दस्यार्थः अनुमानं भवति चेत् बौद्धशास्त्रादिष्वपि न्यायशास्त्राख्या भविष्यति, यतो हि तेषु शास्त्रेष्वपि अनुमानं स्वीक्रियते। वस्तुतः न्यायशास्त्रे अनुमानप्रमाणेन दृढतया वेदस्य प्रामाण्यं प्रतिष्ठाप्यते। तथा हि उक्तं न्यायमञ्जर्याम्- "न्यायविस्तरस्तु मूलस्तम्भभूतः सर्वविद्यानां वेदप्रामाण्यहेतुत्वात्।' इति।



## १०.३) न्यायशास्त्रस्य बीजम्

न्यायशास्त्रस्य बीजम् वैदिकसाहित्ये निहितम् अस्ति। छान्दोग्योपनिषदि नारदस्य वचने न्यायशास्त्रस्य उल्लेखः दृश्यते। तथाहि आम्नातम् –

"ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदम् आथर्वणं चतुर्थम् इतिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यम्..." (छा.उप.७.१.२) इति।

अत्र वाकोवाक्यशब्दस्य अर्थम् आह आचार्यः शङ्करः 'वाकोवाक्यं तर्कशास्त्रम्' इति। अतः न्यायविद्यायाः उद्भवः कदा अभवत् एतत् निश्चिततया वक्तुं न शक्यते। यथा माल्यकारः उद्याने प्रस्फुटितानि पुष्पाणि एकैकम् चित्वा एकत्र आहृत्य पुष्पमाल्यं रचयति, तथैव महर्षिः गौतमः न्यायविद्यायाः सिद्धान्तान् सर्वतः संगृह्य न्यायसूत्रम् विरचितवान्।

## १०.४) कालभेदेन न्यायशास्त्रस्य विभागः

कालभेदेन न्यायशास्त्रं प्राचीन-मध्य-नव्यभेदेन त्रिविधम्। आचार्यस्य गौतमस्य कालादारभ्य उदयनाचार्यस्य कालपर्यन्तं प्राचीनः न्यायः, भा-सवर्ज्ञस्य कालादारभ्य गङ्गेशोपाध्यायात् पूर्वं यावत् समये मध्यः न्यायः, गङ्गेशोपाध्यायस्य कालात् परवर्ती कालः नव्यन्यायस्य इति स्थितिः।

## १०.५) प्राचीन-मध्य-नव्य-न्यायवैशिष्ट्यानि

प्राचीनन्याये प्रमेयाणां प्राधान्यं वर्तते। भाषा सरला निराडम्बरा च। विषयप्रतिपादनकौशलञ्च अत्र स्थूलम्। प्राचीनन्यायस्य प्रधानम् प्रतिपक्षः बौद्धसम्प्रदायः। नव्यन्याये प्रमाणानां प्राधान्यं दृश्यते। तथा हि नव्यन्यायस्य प्रामाणिके ग्रन्थे तत्त्वचिन्तामणौ प्रत्यक्षम् अनुमानम् उपमानं शब्दः चेति चत्वारः खण्डाः विद्यन्ते। अत्र प्रकारता, विशेष्यता, प्रतियोगिता, अनुयोगिता, अवच्छेदकता इत्यादीनां पारिभाषिकपदानां प्रयोगस्य बाहुल्याद् भाषायाः काठिन्यं वर्तते। विषयप्रतिपादनकौशलञ्च अत्र सूक्ष्मम्। नव्यन्यायस्य प्रधानम् प्रतिपक्षः प्राभाकरसम्प्रदायः। भा-सर्वज्ञकृतं न्यायसारम् अवलम्ब्य मध्यन्यायस्य आरम्भः। मध्यन्याये वैशेषिकसिद्धान्तः न्यायशास्त्रस्य परिपूरकसिद्धान्तरूपेण न गृहीतः। मध्यन्यायस्य मुख्यः प्रतिपक्षः बौद्धसम्प्रदायः जैनसम्प्रदायश्च।

## १०.६) न्यायसम्प्रदायस्य आचार्याः

कालक्रमेण न्यायशास्त्रस्य आचार्याणां नामानि तथा तैः प्रणीतानां सन्दर्भाणां नामानि प्रदीयन्ते।

| अनुक्रमः | ग्रन्थकारः | ग्रन्थः | कालः (इशवीयशतकम्) |
|---|---|---|---|
| १ | गौतमः/अक्षपादः | १. न्यायसूत्रम् | ४ (इशुपूर्वम्) |



| | | | |
|---|---|---|---|
| २ | वात्सायनः | १. न्यायसूत्रभाष्यम् | ३ (इशुपूर्वम्) |
| ३ | उद्योतकरः | १. न्यायवार्तिकम् | ३ (इशुपूर्वम्) |
| ४ | वाचस्पतिमिश्रः | १. न्यायवार्तिकतात्पर्यम्<br>२. न्यायसूचीनिबन्धः<br>३. न्यायसूत्रोद्धारः<br>४. तत्त्वविन्दुः | ९ (इशूत्तरम्) |
| ५ | जयन्तभट्टः | १. न्यायमञ्जरी | ९ |
| ६ | उदयनाचार्यः | १. न्यायवार्तिकतात्पर्यपरिशुद्धिः(न्यायनिबन्धः वा)<br>२. न्यायकुसुमाञ्जलिः<br>३. न्यायपरिशिष्टः<br>४. आत्मतत्त्वविवेकम् | १० |
| ७ | भासर्वज्ञः | १. न्यायसारः<br>२. न्यायभूषणम् | १० |
| ८ | वरदराजः | १. बोधिनी(कुसुमाञ्जलिटीका)<br>२. तार्किकरक्षा | १२ |
| ९ | दिवाकर-उपाध्यायः | १. परिमलः(कुसुमाञ्जलिटीका)<br>२. न्यायनिबन्धनोद्यतः(परिशुद्धिटीका) | १३ |
| १० | शशधरः आचार्यः | १. न्यायसिद्धान्तदीपः | १३ |
| ११ | मणिकण्ठमिश्रः | १. न्यायरत्नम्<br>२. न्यायचिन्तामणिः | १४ |
| १२ | गङ्गेशोपाध्यायः | १. तत्त्वचिन्तामणिः | १४ |
| १३ | वर्धमानोपाध्यायः | १. न्यायनिबन्धप्रकाशः<br>२. मणिप्रकाशः<br>३. कुसुमाञ्जलिप्रकाशः | १४ |
| १४ | शङ्करमिश्रः | १. वादिविनोदः<br>२. भेदप्रकाशः<br>३. मणिमयूखः | १४ |
| १५ | यज्ञपतिः उपाध्यायः | १. मणिप्रभा | १५ |



| | | | |
|---|---|---|---|
| १६ | वासुदेवः सार्वभौमः | १. अनुमानपरीक्षा<br>२. प्रत्यक्षमणिपरीक्षा<br>३. शब्दमणिपरीक्षा | १६ |
| १७ | अन्नंभट्टः | १. तर्कसंग्रहः | १६ |
| १८ | जगदीशः तर्कालंकारः | १. मयुखः (चिन्तामणिटीका)<br>२. न्यायादर्शः<br>३. तर्कामृतम् | १६ |
| १९ | रघुनाथशिरोमणिः | १. तत्त्वचिन्तामणिदीधितिः | १६ |
| २० | विश्वनाथ-न्यायपञ्चाननः | १. न्यायसूत्रवृत्तिः<br>२. भाषापरिच्छेदः | १७ |



## पाठगतप्रश्नाः

१. दर्शनशब्दस्य अर्थः कः।

२. नास्तिकदर्शनसम्प्रदायाः के सन्ति।

३. न्यायशास्त्रस्य नामान्तरं किम्।

४. भाष्यकारेण न्यायशब्दस्य कीदृशः अर्थः कृतः।

५. अनुमानस्य पञ्च अवयवाः के।

६. न्यायशास्त्रे केन प्रमाणेन वेदस्य प्रामाण्यम् उपस्थापितम्।

७. छान्दोग्योपनिषदि आम्नातस्य 'वाकोवाक्यम्' इति पदस्य अर्थः कः।

८. न्यायसूत्रस्य प्रणेता कः।

९. नव्यन्यायस्य प्रवक्ता कः।

१०. एकस्य मध्यन्यायस्य आचार्यस्य नाम लेख्यम्।

११. प्राचीननव्यन्याययोः भेदः कः।

१२. न्यायसूत्रस्य उद्भवकालः कदा आसीत्।

१३. न्यायवार्तिकं केन प्रणीतम्।

१४. न्यायवार्तिकतात्पर्यः केन विरचितः।

१५. उदयनाचार्यकृतस्य न्यायशास्त्रस्य ग्रन्थस्य नाम किम्।

१६. न्यायमञ्जरीकारः कः।



१७. नव्यन्यायस्य प्रामाणिकः ग्रन्थः कः।

१८. बर्धमानोपाध्यायकृतायाः टीकायाः नाम किम्।

१९. वादिविनोदः केन प्रणीतः।

२०. न्यायसूत्रवृत्तिकारः कः।

२१. रघुनाथशिरोमणिकृतस्य न्यायग्रन्थस्य नाम किम्।

२२. न्यायसारः केन प्रणीतः।

## १०.७) न्यायशास्त्रस्य विषयाः

न्यायशास्त्रे षोडश पदार्थाः सन्ति येषां च ज्ञानं मोक्षलाभाय अनुकूलम्। ते च पदार्थाः – प्रमाणं, प्रमेयं, संशयः, प्रयोजनं, दृष्टान्तः, सिद्धान्तः, अवयवः, तर्कः, निर्णयः, वादः, जल्पः, वितण्डा, हेत्वाभासः, छलं, जातिः, निग्रहस्थानं च इति। एतेषां पदार्थानां तत्त्वज्ञानात् मोक्षस्य लाभः भवति। तथा च सूत्रम्- 'प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः।' इति। एतान् पदार्थान् विहाय वाच्यता अवच्छेदकता इत्यादयः अनन्ताः पदार्थाः न्यायनये प्रतिपाद्यन्ते व्यवह्रियन्ते, अतः स्वीक्रियन्ते। अतः नैयायिकाः अनियतपदार्थवादिनः।

## १०.८) प्रमाणतत्त्वम्

प्रमाणादेव प्रमेयसिद्धिः भवति। यथार्थानुभवसाधनं प्रमाणम्। न्यायमते प्रमाणं चतुर्विधम् – प्रत्यक्षम् अनुमानम् उपमानं शब्दः च। तथा च न्यायसूत्रम्- 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि।' इति। एतैः प्रमाणैः च यथाक्रमं प्रत्यक्षम् अनुमितिः उपमितिः शाब्दः च इति प्रमाचतुष्टयम् उत्पद्यते। प्रमा यथार्थः अनुभवः ज्ञानं वा।

## १०.९) प्रत्यक्षम्

इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। ज्ञानं कथम् उत्पद्यते। आत्मा मनसा संयुज्यते, मनः इन्द्रियेण संयुज्यते, इन्द्रियं च अर्थेन संसृष्टं भवति। ततः पुंसाम् अर्थस्य ज्ञानम् उत्पद्यते। एकेन इन्द्रियेण एकाधिकविषयाः युगपद् ज्ञातुं शक्याः। परन्तु एकाधिकेन इन्द्रियेण युगपत् ज्ञानं न उत्पद्यते। इन्द्रियाणि पञ्च - चक्षुः कर्णः नासिका जिह्वा त्वक् च। मनः अपि इन्द्रियमेव। अर्थाः घटादयः विषयाः। सन्निकर्षाः संयोगादयः सम्बन्धाः। षड्भिः इन्द्रियैः यद् ज्ञानं जायते तद् यथा- चक्षुषा जन्यं ज्ञानं चाक्षुषम्। श्रोत्रेण जन्यं ज्ञानं श्रावणम्। घ्राणेन जायमानं ज्ञानं घ्राणजम्। रसनेन जन्यं ज्ञानं रासनम्। त्वचा जन्यं ज्ञानं त्वाचम्। मनसा जन्यं ज्ञानं मानसम् इत्याख्यायते।

इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षं कथ्यते। तच्च प्रत्यक्षं द्विविधम् निर्विकल्पकं सविकल्पकञ्च। निष्प्रकारकं ज्ञानं निर्विकल्पकं प्रत्यक्षम्, सप्रकारकं ज्ञानञ्च सविकल्पकं प्रत्यक्षम्। प्रत्यक्षज्ञानस्य करणं प्रत्यक्षप्रमाणम्। तच्च इन्द्रियमेव।



## १०.९.१) सन्निकर्षः

इन्द्रियस्य विषयेण सह विशिष्टः सम्बन्धः भवति चेदेव ज्ञानम् उत्पद्यते। तत्र यः सम्बन्धः ज्ञानं कारणं भवति स सम्बन्ध एव सन्निकर्षः कथ्यते। विषयः अर्थः कथ्यते। इन्द्रियस्य अर्थेन सह सः संसर्गः, सम्बन्धः, यद्वशाद् आत्मनि ज्ञानम् उत्पद्यते स सम्बन्धः एव सन्निकर्षः कथ्यते। अर्थाः नैके सन्ति। तैः इन्द्रियाणां विभिन्नाः सम्बन्धाः भवन्ति। अतः विविधाः सन्निकर्षाः सन्ति। इन्द्रियेण सह अर्थस्य सन्निकर्षाद् उत्पन्नं ज्ञानं प्रत्यक्षं कथ्यते। उदाहरणम् - चक्षुषा ज्ञानं कथमुत्पद्यते। तथाहि- आत्मा मनसा संयुज्यते, मनः चक्षुषा संयुज्यते, चक्षुः च घटादिना द्रव्येण संयुक्तम् भवति। चक्षुः तैजसम् अस्ति। तद् विषयदेशं गच्छति। चक्षुरपि द्रव्यम्। घटादिकम् अपि द्रव्यम्। अतः द्वयोः द्रव्ययोः संयोगः भवति। अस्मादेव संयोगाद् घटविषयकं चाक्षुषं ज्ञानम् उत्पद्यते। इदं सन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् समाख्यायते। तत्रायं संयोगः एव सन्निकर्षः कथ्यते। इत्थम् इन्द्रियभेदेन विषयभेदेन च सन्निकर्षः भिद्यते।

स च सन्निकर्षः द्विविधः लौकिकालौकिकभेदात्। लौकिक-सन्निकर्षः षड्विधः- संयोगः, संयुक्तसमवायः, संयुक्तसमवेत-समवायः, समवायः, समवेतसमवायः, विशेष्यविशेषणभावश्च। अलौकिकसन्निकर्षश्च त्रिविधः सामान्यलक्षणज्ञानलक्षण-योगजभेदात्।

१.**संयोगः** – चक्षुषा घटप्रत्यक्षे संयोगः सन्निकर्षः।

२. **संयुक्तसमवायः** – चक्षुषा घटरूपप्रत्यक्षे संयुक्तसमवायः सन्निकर्षः, चक्षुःसंयुक्ते घटे रूपस्य समवायात्।

३. **संयुक्तसमवेतसमवायः** – रूपत्वजातिप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः। चक्षुःसंयुक्ते घटे रूपं समवेतम्, तत्र रूपे च रूपत्वजातेः समवायात्।

४. **समवायः** – श्रोत्रेण शब्दप्रत्यक्षे समवायः सन्निकर्षः। कर्णविवरवर्तिनः आकाशस्य श्रोत्रत्वात्। शब्दः आकाशगुणः। गुणगुणिनोः सम्बन्धः समवायः।

५. **समवेतसमवायः** – शब्दत्वप्रत्यक्षे च समवेतसमवायः सन्निकर्षः, श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्।

६. **विशेष्यविशेषणभावः** – चक्षुषा अभावप्रत्यक्षे विशेषविशेषणभावः सन्निकर्षः, घटाभाववत् भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात्।

## १०.९.२) कारणम्

कार्यनियतपूर्ववृत्ति कारणम्। कार्यञ्च प्रागभावप्रतियोगि। अर्थात् यत् कार्यात् पूर्वं नियमेन वर्तते तत् कारणमित्युच्यते। तच्च कारणम् अनन्यथासिद्धं भवति। रासभादि तु घटकार्यं प्रति अन्यथासिद्धम्। कारणञ्च त्रिविधम् - समवायि असमवायि निमित्तञ्चेति।

१. **समवायिकारणम्** - 'यत् समवेतं कार्यमुत्पद्यते तत् समवायि कारणम्'। अर्थात् समवायसम्बन्धेन यस्मिन् द्रव्ये कार्यम् उत्पद्यते तत् द्रव्यम् उत्पन्नस्य कार्यस्य समवायि कारणं भवति।

यथा तन्तवः पटस्य, पटश्च स्वगतरूपादेः समवायिकारणम्। कार्यं समवायेन यत्र वर्तते तदेव समवायिकारणमिति संक्षेपेण ग्राह्यम्।

२. **असमवायिकारणम्** - असमवायिकारणस्य प्रत्यासत्तिद्वयम्। 'कार्येण कारणेन वा सह एकस्मिन्नर्थे समवेतत्वे सति यत् कारणं तद् असमवायिकारणम्।'

**कार्यैकार्थप्रत्यासत्तिः**- कार्येण सह एकस्मिन्नधिरकरणे समवायसम्बन्धेन वर्तते अपिच कार्यं प्रति यत्कारणं भवति तदसमवायिकारणम्। यथा, द्वयोः कपालयोः संयोगेन घटः उत्पद्यते। अतः घटं प्रति कपालसंयोगः कारणम्। कार्यः च घटः। 'कपालसंयोगः' घटात्मककार्यस्य अधिकरणे कपाले समवायसम्बन्धेन वर्तते अपि च घटात्मककार्यं प्रति कारणं च भवति। कथं कपालसंयोगः घटं प्रति कारणमिति चेदुच्यते कपालसंयोगे सति घटोत्पत्तिः भवति, कपालसंयोगाभावे घटोत्पत्तिर्न भवति। एवं तत्सत्त्वे तत्सत्ता, तदभावे तदभाव इति अन्वयव्यतिरेकाभ्यां कपालस्य कारणत्वं सुज्ञेयम्। अतः कपालसंयोगो घटं प्रति असमवायिकारणं भवति। तथैव पटं प्रति तन्तुसंयोगः असमवायिकारणं भवति।

**कारणैकार्थप्रत्यासत्तिः**- स्वकार्यसमवायिकारणेन सह एकस्मिन्नधिकरणे समवायसम्बन्धेन वर्तते किञ्च कार्यं प्रति यत्कारणं भवति तदसमवायिकारणम्। यथा, घटरूपात्मककार्यस्य समवायिकारणं घटः, स च समावायेन कपाले वर्तते। कपाले च समवायसम्बन्धेन कपालरूपं वर्तते। किञ्च घटरूपात्मककार्यं प्रति कारणं च भवति 'कपालरूपम्'। अतः घटरूपं प्रति कपालरूपम् असमवायिकारणं भवति। तथैव पटरूपं प्रति तन्तुरूपम् असमवायिकारणं भवति।

३. **निमित्तकारणम्** – समवाय्यसमवायिकारणभिन्नं कारणं निमित्तकारणं भवति। यथा पटस्य निमित्तकारणं तुरीवेमादिकम्।

त्रिविधकारणेषु कार्यस्य यत् असाधारणं कारणं तत् करणम्। असाधारणत्वं तावत् फलायोगव्यवच्छिन्नत्वम्। तदुक्तं 'फलायोगव्यवच्छिन्नं कारणं करणम्' इति। यथा हि वृक्षच्छेदने कार्ये कुठारवृक्षसंयोगविशेषः करणम्। नव्यमते तु यत् व्यापारविशिष्टं सत् कार्यम् उत्पादयति तत् कारणं करणम्। तदुक्तम् –'व्यापारवत् असाधारणं कारणं करणम्' इति। तथा सति वृक्षच्छेदने कुठार एव करणं भवति। तेन च घटप्रत्यक्षे आदिमे पक्षे चक्षुषा घटस्य संयोगः प्रत्यक्षं प्रमाणम्, द्वितीये पक्षे च चक्षुरिन्द्रियं प्रत्यक्षं प्रमाणं भवति।

## १०.१०) अनुमानम्

अनुमितिकरणम् अनुमानम्। अर्थात् अनुमितेः यत् करणं तत् अनुमानं प्रमाणम्। अनुमितिः नाम परामर्शात् जन्यं ज्ञानम्। तदुक्तम् 'परामर्शजन्यं ज्ञानम् अनुमितिः' इति। व्याप्तिविशिष्टं पक्षधर्मताज्ञानं परामर्शः। 'यत्र यत्र धूमः(हेतुः) तत्र तत्र वह्निः(साध्यः) इत्यत्र वह्निसाहचर्यं धूमे अस्ति। इदं नियतसाहचर्यनियमः एव व्याप्तिः। वस्तुतः हेतुसाध्ययोः साहचर्यनियमः व्याप्तिः। यत् साध्यते अनुमीयते तत् साध्यम् (वह्निः)। साध्यसाधनं हेतुः (धूमः)। सन्दिग्धसाध्यवान् पक्षः (पर्वतादिः)। हेतोः (धूमस्य) पक्षवृत्तित्वं (पर्वतादिवृत्तित्वम्) पक्षधर्मता। यस्य जनस्य एवं व्याप्तिज्ञानम् अस्ति स कदाचित् पर्वतसमीपं गतः पर्वते धूमं (धूमवान् पर्वतः इति) दृष्ट्वा व्याप्तिं स्मरति 'यत्र यत्र धूमः तत्र तत्र वह्निः' इति। ततः तस्य



ज्ञानं भवति- वह्निव्याप्यः धूमः अस्मिन् पर्वते अस्ति (वह्निव्याप्यधूमवान् पर्वतः इति)। एतत् हि परामर्शज्ञानम्। तस्मात् परामर्शज्ञानात् 'पर्वतः वह्निमान्' इति अनुमितिः उत्पद्यते। तस्याः अनुमितेः करणं प्राचीनमते (फलायोगव्यवच्छिन्नं कारणं करणम्) परामर्शः, नव्यमते (व्यापारवत् असाधारणं कारणं करणम्) च व्याप्तिस्मृतिः। अतः प्राचीनमते परामर्शज्ञानम् अनुमानं प्रमाणम्, नवीनमते च व्याप्तिस्मृतिः अनुमानं प्रमाणम्।

अनुमानं येन क्रमेण भवति स क्रमः अत्राधः प्रदर्श्यते -

| | | | |
|---|---|---|---|
| १. | साहचर्यग्रहः | → यत्र यत्र हेतुः तत्र तत्र साध्यम्। | यत्र यत्र धूमः तत्र तत्र वह्निः। |
| २. | व्याप्तेरनुभवः | → साध्यव्याप्यो हेतुः। | वह्निव्याप्यो धूमः। |
| ३. | पक्षधर्मताज्ञानम् | → हेतुमान् पक्षः। | धूमवान् पर्वतः। |
| ४. | व्याप्तिस्मरणम् | → साध्यव्याप्यो हेतुः। | वह्निव्याप्यो धूमः। |
| ५. | परामर्शः | → साध्यव्याप्यहेतुमान् पक्षः। | वह्निव्याप्यधूमवान् पर्वतः। |
| ६. | अनुमितिः | → पक्षः साध्यवान्। | पर्वतो वह्निमान्। |

अनुमानं द्विविधं स्वार्थानुमानं परार्थानुमानं च। यत्र स्वस्मै अनुमानं प्रवर्तते तत् स्वार्थानुमानं भवति। तथाहि यदा पर्वते धूमं दृष्ट्वा तत्र वह्निः अस्ति न वा इति संशेते। तदा यत्र यत्र धूमः तत्र तत्र वह्निः इति व्याप्तिं स्मरतः वह्निव्याप्यधूमवान् अयं पर्वतः इति परामर्शः भवति। तस्मात् च सन्दिहानस्य 'पर्वतः वह्निमान्' इति अनुमितिः उत्पद्यते। एतत् हि स्वार्थानुमानम्। अपिच यदा स्वयं धूमात् वह्निम् अनुमाय अपरं प्रति बोधयितुं पञ्चावयवयुक्तं वाक्यं प्रयुङ्क्ते, तत् परार्थानुमानं भवति।

तथाहि परार्थानुमानस्य पञ्च अवयवाः –

१) **प्रतिज्ञा** – पर्वतः वह्निमान्। (अनिर्णीतः)

२) **हेतुः** – धूमात्।

३) **उदाहरणम्** – यत्र धूमः तत्र वह्निः यथा महानसम्।

४) **उपनयम्** – तथा चायम्। (वह्निव्याप्यधूमवान् अयं पर्वतः।) (परामर्शः)

५) **निगमनम्** -- तस्मात् तथा ( वह्निव्याप्यधूमवत्त्वात् पर्वतः वह्निमान्।) (निर्णीतः)

पुनश्च अनुमानं त्रिविधं पूर्ववत् शेषवत् सामान्यतोदृष्टञ्च। यत्र कारणेन कार्यम् अनुमीयते तत्र पूर्ववत् अनुमानम्। यथा मेघोन्नत्या भविष्यति वृष्टिः इति। यत्र कार्येण कारणम् अनुमीयते तत्र शेषवत् अनुमानम्। यथा नद्याः पूर्णत्वादिकं दृष्ट्वा स्रोतसः अनुमीयते भूता वृष्टिः इति। सामान्यधर्मवत्त्वेन कस्यचित् धर्मस्य अनुमानं सामान्यतोदृष्टम् अनुमानम्। यथा गतिक्रियाप्रयुक्तम् अन्यत्र दृष्टस्य अन्यत्र दर्शनम्। तथा च सूर्यस्य। अतः सूर्यः गतिमान् इति।






## १०.११) उपमानम्

उपमितिकरणम् उपमानं प्रमाणम्। उपमितिः संज्ञासंज्ञिनोः सम्बन्धस्य ज्ञानम्। संज्ञया सह संज्ञिनः सम्बन्धज्ञानम् उपमितिः। तथा हि कोऽपि गवयशब्देन किं वाच्यम् इति न जानाति, तेन कस्माद् अपि आरण्यकपुरुषात् श्रुतम् 'गोसदृशः गवयः' इति। ततः स वनं गतः गोसदृशं पिण्डं पश्यन् 'गोसदृशः गवयः' इति वाक्यार्थं स्मरति। तेन च 'अयं गवयशब्दवाच्यः' इति ज्ञानम् उत्पद्यते। तत् ज्ञानं हि उपमितिः। अत्र गवयः इति संज्ञा, गोसदृशः पिण्डः अत्र संज्ञी। अतः अयं पिण्डः गवयशब्दवाच्यः इति ज्ञानम् उपमितिः। प्राचीनमते अतिदेशवाक्यार्थस्मरणम् उपमानं प्रमाणम्, नवीनमते च सादृश्यज्ञानम् उपमानं प्रमाणम्, अतिदेशवाक्यार्थस्मरणं च व्यापारः।

## १०.१२) शब्दः

'आप्तवाक्यं शब्दः।' यः यथार्थं वक्ति स यथार्थवक्ता एव आप्तः। स हि भ्रमादिदोषशून्यः। तस्य यद् वाक्यं तदेव शब्दः, तदेव प्रमाणम्। पदसमूहः वाक्यम्। शक्तिविशिष्टः वर्णात्मकः शब्दः पदम्। पदस्य तदर्थेन सह सम्बन्धः एव शक्तिः, तत्पदश्रवणे यया अर्थस्मृतिः जायते। तथा च उक्तं तर्कसंग्रहे – "अस्मात् पदाद् अयम् अर्थो बोद्धव्यः इति ईश्वरसंकेतः शक्तिः" इति। मानवः इमां शक्तिं कथं जानाति। शक्तिग्रहः वृद्धव्यवहारेण भवति। तथा हि उत्तमवृद्धस्य 'अश्वम् आनय' 'गां बधान' इति व्याक्यानि श्रुत्वा मध्यमः बृद्धः तत् तथा करोति। इदं सर्वं बालः पश्यति। तस्मात् आवापेन उद्वापेन च गोपदस्य गवि तथा अश्वपदस्य अश्वे शक्तिः इति बालस्य ज्ञानम् उत्पद्यते। शाब्दबोधे आकाङ्क्षा योग्यता आसत्तिः इति एतत्त्रयं कारणम्। तात्पर्यमपि। शाब्दबोधस्य करणं प्राचीनमते पदार्थज्ञानं (स्मरणात्मकम्), नवीनमते च पदज्ञानम् (स्मरणात्मकम्)। तदुक्तं भाषापरिच्छेदे- 'पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः' इति। अतः प्राचीननये पदार्थज्ञानं (स्मरणात्मकम्) शब्दप्रमाणं नवीननये च पदज्ञानम् (स्मरणात्मकम्) इति ज्ञेयम्। शब्दप्रमाणं द्विविधं दृष्टार्थम् अदृष्टार्थञ्च। लौकिकविषये दृष्टार्थम्, अलौकिकविषये च अदृष्टार्थम्।



## पाठगतप्रश्नाः २

२३. न्यायशास्त्रे मोक्षानुकूलाः पदार्थाः कतिविधाः।

२४. अनियतपदार्थवादिनः के।

२५. न्यायमते प्रमाणं कतिविधम्।



२६. प्रत्यक्षस्य लक्षणं किम्।

२७. प्रत्यक्षं कतिविधम्।

२८. सन्निकर्षः कतिविधः।

२९. लौकिकाः सन्निकर्षाः के।

३०. अलौकिकाः सन्निकर्षाः के।

३१. घटरूपप्रत्यक्षे कीदृशः सन्निकर्षः भवति।

३२. शब्दप्रत्यक्षे कीदृशः सन्निकर्षः भवति।

३३. अभावप्रत्यक्षे कीदृशः सन्निकर्षः भवति।

३४. कारणलक्षणं किम्।

३५. कारणं कतिविधम्।

३६. पटस्य समवायिकारणं किम्।

३७. पटकार्यस्य निमित्तकारणं किम्।

३८. करणं किम्।

३९. नव्यन्यायमते प्रत्यक्षप्रमाणं किम्।

४०. प्राचीनमते करणलक्षणं किम्।

४१. नव्यमते करणलक्षणं किम्।

४२. अनुमितिः का।

४३. परामर्शः कः।

४४. प्राचीनमते अनुमानप्रमाणं किम्।

४५. नव्यमते अनुमानप्रमाणं किम्।

४६. अनुमानं कतिविधम्।

४७. पूर्ववत् अनुमानस्य एकम् उदाहरणं देयम्।

४८. उपमितिः का।

४९. प्राचीनमते उपमानप्रमाणं किम्।

५०. शब्दप्रमाणं किम्।

५१. शब्दप्रमाणं कतिविधम्।

५२. शक्तिः का।

५३. शक्तिग्रहः कथं भवति।

५४. शाब्दबोधे कारणत्रयं किम्।

५५. नव्यमते शब्दप्रमाणं किम्।

५६. शाब्दबोधे व्यापारः कः।



## १०.१३) प्रमेयतत्त्वम्

**प्रमेयम्**- न्यायशास्त्रे प्रमेयाणि द्वादश - आत्मा, शरीरम्, इन्द्रियम्, अर्थः, बुद्धिः, मनः, प्रवृत्तिः, दोषः, प्रेत्यभावः, फलम्, दुःखम्, अपवर्गश्चेति।

१. **आत्मा** – आत्मा सर्वस्य द्रष्टा सर्वस्य भोक्ता सर्वज्ञः सर्वानुभावी च। इच्छा द्वेषः प्रयत्नः सुखं दुःखं ज्ञानं च आत्मनः गुणाः। तथा च सूत्रम्- 'इच्छा-द्वेष-प्रयत्न-सुख-दुःख-ज्ञानानि आत्मनो लिङ्गम्।' इति।

२. **शरीरम्** – शरीरम् आत्मनः भोगायतनम्। तच्च चेष्टेन्द्रियार्थानाम् आश्रयः।

३. **इन्द्रियाणि** – भोगस्य साधनानि पञ्चभूतजन्यानि घ्राणादीनि पञ्च इन्द्रियाणि।

४. **अर्थाः** –'गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणाः तदर्थाः' इति। भोगयोग्याः विषयाः अर्थाः। रूपादयः।

५. **बुद्धिः** – बुद्धिः उपलब्धिः ज्ञानम्। 'बुद्धिरुपलब्धिर्ज्ञानमिति अनर्थान्तरम्।' इति।

६. **मनः** - मनः अन्तःकरणम् अन्तरिन्द्रियम्। युगपत् ज्ञानानाम् अनुत्पत्तिः मनसः अनुमापकम्।

७. **प्रवृत्तिः** –'प्रवृत्तिः वाग्-बुद्धि-शरीरारम्भः' इति। प्रवृत्तिः वाचिकं मानसिकं तथा शारीरिकं कर्म।

८. **दोषः** – 'प्रवर्तनालक्षणा दोषाः' इति। रागः द्वेषः मोहः चेति प्रवृत्तिकारणं दोषः।

९. **प्रेत्यभावः**- 'पुनरुत्पत्तिः प्रेत्यभावः' इति। मृत्योः परं पुनर्जन्म प्रेत्यभावः।

१०. **फलम्**- प्रवृत्तिदोषात् जातः अर्थः फलम्। स सुखस्य दुःखस्य च अनुभवः, भोग इत्याख्यायते।

११. **दुःखम्** –'बाधनालक्षणं दुःखम्' इति। पीडालक्षणं दुःखम्। दुःखानुषङ्गञ्च दुःखम्।

१२. **अपवर्गः** – 'तदत्यन्तविमोक्षः अपवर्गः' इति। दुःखेन जन्मना आत्यन्तिकी विमुक्तिः अपवर्गः।

अत्र उक्तानि द्वादशप्रमेयानि व्यतिरिच्य संशयादयः ये पदार्थाः सन्ति, तेषाम् अपि अन्तर्भावः प्रमेयपदार्थे भवति। मोक्षलाभे आत्मादीनां तत्त्वज्ञानानां साक्षात् उपयोगः वर्तते। अतः तेषाम् प्रमेयसूत्रे पृथक् उल्लेखः कृतः।

## १०.१४) संशयः

एकस्मिन् धर्मिणि विरुद्धप्रकारकं ज्ञानं संशयः। यथा आत्मा नित्यः अनित्यः वा इति। अत्र आत्मा एकः धर्मी। तस्मिन् नित्यत्वम् अनित्यत्वं चैतौ विरुद्धधर्मौ। तौ आत्मनि युगपत् गृहीतौ चेत् तज्ज्ञानं संशयः।

## १०.१५) प्रयोजनम्

'यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम्' इति। अर्थात् यम् अर्थम् आश्रित्य प्रवर्तते निवर्तते वा तत् प्रयोजनम्।



## १०.१६) दृष्टान्तः

'लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः' इति। यस्मिन् अर्थे लौकिकानां तथा परीक्षकाणां बुद्धिसाम्यं वर्तते स दृष्टान्तः। स च दृष्टान्तः प्रत्यक्षविषयः अर्थः ।

## १०.१७) सिद्धान्तः

'तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः' इति। शास्त्रेषु प्रमाणैः पदार्थानां स्वीकारः सिद्धान्तः। अस्ति अयम् इति स्वीक्रियमाणः पदार्थः वा। स च चतुर्विधः सर्वतन्त्रः प्रतितन्त्रः अधिकरणः अभ्युपगमश्च।

## १०.१८) अवयवः

'प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि अवयवाः' इति। प्रतिज्ञा हेतुः उदाहरणम् उपनयं निगमनं च इति पञ्च अवयवाः। एतानि च अनुमानवाक्यानि।

## १०.१९) तर्कः

'अविज्ञाततत्त्वे अर्थे कारणोपपत्तितः तत्त्वज्ञानार्थम् ऊहः तर्कः'। ऊहः ज्ञानविशेषः। कारणोपपत्तितः ऊहः इति तर्कलक्षणम्। अविज्ञाततत्त्वे अर्थे तत्त्वज्ञानार्थम् इति प्रयोजनकथनम्। कारणपदं प्रमाणार्थम्। उपपत्तिपदञ्च सम्भवपरम्। अतः सामान्यतः ज्ञातस्य यस्य पदार्थस्य तत्त्वम् अविज्ञातम्, तस्मिन् पदार्थे तत्त्वज्ञानार्थं प्रमाणसम्भवप्रयुक्तः ज्ञानविशेषः तर्कः। स च तर्कः न प्रमाणान्तर्गतः न च प्रमाणान्तरम्। स तु प्रमाणानाम् अनुग्राहकः सन् तत्त्वज्ञानाय कल्पते। तथाहि 'किमिदं जन्म कृतकहेतुकम् उत अकृतकहेतुकम् अथवा आकस्मिकहेतुकम्' इति अविज्ञाततत्त्वे अर्थे कारणोपपत्त्या ऊहः प्रवर्तते। यदि कृतकहेतुकं जन्मेति हेतुच्छेदाद् उपपन्नः जन्मोच्छेदः। अथ अकृतकेन हेतुना चेद् हेतूच्छेदस्य अशक्यत्वात् अनुपपन्नः अयं जन्मोच्छेदः। आकस्मिकञ्चेद् अकस्माद् उत्पन्नं न पुनः विनश्यति, निवृत्तिकारणाभावात्। एतस्मिन् तर्कविषये कर्मनिमित्तं जन्मेति प्रवर्तमानानि प्रमाणानि तर्केण अनुगृह्यन्ते। अपिच तर्कः व्याप्तिग्राहकः। तथाहि 'धूमः यदि वह्निव्याभिचारी स्यात्, वह्निजन्यः न स्यादि'ति धूमवह्न्योः व्याप्तिनिश्चयः। तस्मात् प्रमाणादितत्त्वज्ञानं सोपयोगं भवति। अतः प्रमाणानुग्राहकत्वात् तर्कस्यापि तत्र पारक्ष्येण उपयोगः अस्तीति बोध्यम्। स च तर्कः पञ्चविधः- आत्माश्रयः इतरेतराश्रयः चक्रकाश्रयः अनवस्था अनिष्टप्रसङ्गश्चेति।

## १०.२०) निर्णयः

'विमृश्य पक्षप्रतिपक्षाभ्याम् अर्थावधारणं निर्णयः' इति। संशयस्थले वादिप्रतिवादिभ्यां स्वपक्षस्य स्थापनया परपक्षस्य खण्डनेन पदार्थस्य अवधारणं निर्णयः। स च निर्णयः तत्त्वज्ञानं, प्रमाणानां फलम्।

## १०.२१) वादः

वादजल्पवितण्डाः साकल्येन कथापदेन उच्यन्ते। पूर्वपक्षोत्तरपक्षप्रतिपादक-न्यायानुगतवाक्यसन्दर्भः कथा। तत्र तत्त्वबुभुत्सुकथा वादः। यः बोद्धुम् इच्छति स बुभुत्सुः। तत्त्वं बुभुत्सुः तत्त्वबुभुत्सुः। तयोः कथा वादः। तस्मिन् वादे प्रमाणैः तर्केन च स्वपक्षस्य स्थापना परपक्षस्य च उपालम्भः भवति। तत्त्वनिर्णयार्थं पक्षप्रतिपक्षौ पञ्चावयवयुक्तं वादं कुरुतः। यथा हि गुरुशिष्ययोः तत्त्वालोचनं वादः।

## १०.२२) जल्पः

विजिगीषुकथा जल्पः। यः जयमिच्छति स विजिगीषुः। यत्र कथायां पक्षप्रतिपक्षौ विजयार्थं तत्त्वज्ञानार्थं वा छलजातिनिग्रहस्थानैः प्रवर्तेते तत्र जल्पः भवति।

## १०.२३) वितण्डा

'स प्रतिपक्षस्थापनाहीनो वितण्डा' इति। यत्र कथायां प्रतिपक्षः पक्षस्य मतं खण्डयति, किन्तु स्वमतं न स्थापयति, सा कथा वितण्डा भवति।

## १०.२४) हेत्वाभासः

यस्मिन् हेतौ व्याप्तिः अस्ति अपिच हेतुः पक्षे अस्ति स सद्धेतुः भवति। सद्धेतुः अस्ति चेद् अनुमितिः भवति। सद्धेतुः नास्ति चेद् अनुमितिः न भवति। यः हेतुः सद्धेतुः नास्ति स असद्धेतुः कथ्यते। स एव हेत्वाभासः इत्यपि समाख्यायते।

अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वम् हेत्वाभासस्य लक्षणम्। हेत्वाभासपदस्य द्वेधा व्युत्पत्तिः। हेतुवत् आभासन्ते इति हेत्वाभासाः, दुष्टाः हेतवः इति यावत्। अथवा हेतोः आभासाः इति हेत्वाभासाः, हेतुदोषाः इति यावत्। हेत्वाभासविषयकं यथार्थज्ञानम् अनुमानस्य साक्षात् परम्परया वा प्रतिबन्धकं भवति। यत्र हेत्वाभासाः वर्तन्ते तत्र अनुमितिः न जायते। हेत्वाभासः (दुष्टहेतुः) पञ्चधा-- सव्यभिचार-विरुद्ध-सत्प्रतिपक्षासिद्ध-बाधितभेदेन। सव्याभिचारः पुनः साधारणासाधारणानुपसंहारिभेदात् त्रिविधः। असिद्धो हेत्वाभासोऽपि त्रिविधः - आश्रयासिद्धः स्वरूपासिद्धः व्याप्यत्वासिद्धः च। हेत्वाभासः (हेतुदोषः) पञ्चधा-व्यभिचारविरोधसत्प्रतिपक्षासिद्धिबाधभेदात्। यस्य व्यभिचारदोषः स सव्यभिचारः। यस्य विरोधः दोषः स विरुद्धः। यस्य सत्प्रतिपक्षः दोषः स सत्प्रतिपक्षः। यस्य असिद्धिः दोषः स असिद्धः। यस्य बाधः दोषः स बाधितः।

### १०.२४.१) सव्यभिचारः

व्यभिचारेण सह वर्तमानः सव्याभिचारः। व्याभिचारः एकतरपक्षे नियमाभावः। हेतोः साध्यधर्मे अनियता अवस्थितिः।



१. **साधारणः**– साध्याभाववद्वृत्तिः साधारणः। यत्र साध्याभावस्य आश्रये हेतुः तिष्ठति स साधारणः। यथा पर्वतः वह्निमान् प्रमेयत्वात्।

२. **असाधारणः**– सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिः असाधारणः। निश्चितसाध्यवान् पक्षः। निश्चितसाध्याभाववान् पक्षः। यत्र केवलं पक्षे हेतुः तिष्ठति, नान्यत्र सपक्षादौ, सः असाधारणः। यथा शब्दः नित्यः शब्दत्वात्।

३. **अनुपसंहारी**– अन्वयव्यतिरेकदृष्टान्तरहितः अनुपसंहारी। यत्र अन्वयदृष्टान्तः व्यातिरेकदृष्टान्तश्च न स्तः सः अनुपसंहारी। यथा सर्वम् अनित्यं प्रमेयत्वात्। अत्र सर्वस्य पक्षत्वात् दृष्टान्तः नास्ति।




## १०.२४.२) विरुद्धः

साध्याभावव्याप्तः हेतुः विरुद्धः। साधस्य अभावेन सह व्याप्तः हेतुः विरुद्धः। यथा शब्दः नित्यः कृतकत्वात्।

## १०.२४.३) सत्प्रतिपक्षः (प्रकरणसमः)

यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः। यथा शब्दः नित्यः श्रावणत्वात्। शब्दः अनित्यः कार्यत्वात् घटवत्।

## १०.२४.४) असिद्धः (साध्यसमः)

असिद्धत्वप्रयुक्तः साध्यपदार्थः साध्यतुल्यः साध्यसमः असिद्धः वा कथ्यते।

१. **आश्रयासिद्धः** – यत्र पक्षः आश्रयः न सिद्धः, आश्रयः अप्रसिद्धः इति यावत्। यथा गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत्।

२. **स्वरूपासिद्धः** – यत्र पक्षे हेतुः स्वरूपतः कदापि न तिष्ठति। यथा शब्दः गुणः चाक्षुषत्वात्।



३. **व्याप्यतासिद्धः** – सोपाधिकः हेतुः व्याप्यतासिद्धः। यत्र उपाधियुक्तः हेतुः तिष्ठति स व्याप्यतासिद्धः। 'साध्यव्यापकत्वे सति साधनाव्यापकत्वम् उपाधिः'। यः साध्यस्य व्यापकः किन्तु हेतोः अव्यापकः स उपाधिः। यथा पर्वतः धूमवान् वह्निमत्त्वात्। अत्र आर्द्रेन्धनसंयोगः उपाधिः।

### १०.२४.५) बाधितः (कालातीतः)

यस्य साध्यस्य अभावः प्रमाणान्तरेण निश्चितः स बाधितः। यस्य साध्यस्य अभावः अन्येन प्रमाणेन निश्चितः स बाधितः हेत्वाभासः। यथा – वह्निः अनुष्णः द्रव्यत्वात्।

## १०.२५) छलम्

"वचनविघातोऽर्थविकल्पोपपत्त्या छलम्" इति। अभिमतस्य अर्थस्य विरुद्धम् अर्थम् गृहीत्वा वादिनः वचनस्य विघातः छलम्। तच्च त्रिविधम् – वाक्छलं सामान्यछलम् उपचारछलञ्च। यथा 'नवकम्बलवान् अयं माणवकः। नवकम्बलः इति अभिप्राये नव कम्बलाः अस्य इति अर्थम् आदाय असम्भवेन प्रतिषेधयति – अस्य एकः कम्बलः अस्ति, कुतः नव कम्बलाः इति वाक्छलम्।

## १०.२६) जातिः

असदुत्तरं जातिः। तथा च न्यायसूत्रम् - "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" इति। साधर्म्येण वैधर्म्येण च हेतोः प्रतिषेधः जातिः भवति। वादिना स्वपक्षस्य साधनाय हेतौ प्रयुक्ते प्रतिवादिनः प्रतिषेधहेतवः जातयः। ताश्च जातयः साधर्म्यसमादयः चतुर्विंशतिप्रकाराः। तथा हि 'क्रियावान् आत्मा' द्रव्यस्य क्रियाहेतुगुणयोगात्। द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान्, यथा चात्मा, तस्मात् क्रियावान् इति। एवम् उदाहृते परः साधर्म्येण प्रत्यवतिष्ठते – 'निष्क्रियः आत्मा विभुद्रव्यत्वात् आकाशवत्' इति साधर्म्यसमा जातिः।

## १०.२७) निग्रहस्थानम्

निग्रहस्थानं पराजयहेतुः। 'विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्।' इति न्यायसूत्रम्। विपरीता कुत्सिता वा प्रतिपत्तिः ज्ञानं विप्रतिपत्तिः। आरम्भविषये च अनारम्भः अप्रतिपत्तिः। यत्र परेण स्थापितं पक्षं न प्रतिषेधति, न वा दोषम् उद्धरति तत्र अप्रतिपत्तिः भवति। विप्रतिपत्तिः अप्रतिपत्तिश्च न निग्रहस्थानभेदः, अपि तु निग्रहस्थानानाम् अनुमापकं तथा सामान्यलक्षणम्। प्रतिज्ञाहानिप्रतिज्ञान्तरादिषु च द्वाविंशतिनिग्रहस्थानेषु षट् अप्रतिपत्तिमूलकानि निग्रहस्थानानि, अपराणि षोडश विप्रतिपत्तिमूलकानि निग्रहस्थानानि।

## १०.२८) मोक्षः

धर्मः अर्थः कामः मोक्षश्चेति पुरुषार्थचतुष्टयम्। तत्र मोक्षः परमः पुरुषार्थः। स हि मोक्षः निःश्रेयसं मुक्तिः अपवर्गः निर्वाणम् इत्यादिभिः पदैः अभिधीयते। न्यायदर्शनस्य प्रवृत्तिः मोक्षलाभाय एव।



अतः न्यायदर्शनस्य आदिमसूत्रे उक्तम् प्रमाणादीनां पदार्थानां तत्त्वज्ञानात् निःश्रेयसलाभः इति। तच्च निःश्रेयसं द्वादशविधेषु प्रमेयेषु अन्यतमम्। दुःखस्य आत्यन्तिकी निवृत्तिः मोक्षः। न्यायसूत्रे मोक्षस्वरूपम् उक्तम्– "तदत्यन्तविमोक्षोऽपवर्गः।" इति। तत्पदेन अत्र दुःखम् अवगन्तव्यम्। अतः सर्वेषां दुःखानाम् अत्यन्तं विमोक्षः निवृत्तिः। सः अपवर्गः। द्वितीये सूत्रे च मोक्षलाभस्य क्रमः निर्दिष्टः – "दुःख-जन्म-प्रवृत्ति-दोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायाद् अपवर्गः।" इति। जन्म पुनरुत्पत्तिर्वा दुःखानां कारणम्। अतः पुनर्जन्मविनाशे सर्वेषां दुःखानाम् आत्यन्तिकी निवृत्तिः सम्भवेत्। जन्मनः कारणं तावत् प्रवृत्तिः। प्रवृत्तिद्वारा शुभाशुभानि कर्मफलानि जायन्ते। तेषां भोगाय पुनर्जन्म भवति। प्रवृत्तिश्च रागद्वेषमोहादिभिः दोषैः जायते। दोषाश्च देहादौ आत्माभिमानरूपाद् मिथ्याज्ञानात् समुद्भवन्ति। अतः मिथ्याज्ञानानां नाशे यथाक्रमं जन्मरोधे च दुःखस्य आत्यन्तिकी निवृत्तिः स्यात्। तथाहि न्यायमञ्जरीकारः-

यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः।
तावदात्यन्तिकी दुःखनिवृत्तिर्नावकल्प्यते।।
धर्माधर्मनिमित्तो हि सम्भवः सुखदुःखयोः।
मूलभूतौ च तावेव स्तम्भौ संसारसद्मनः।।
तदुच्छेदे तु तत्कार्यशरीरानुपलम्भनात्।
नात्मनः सुखदुःखे स्त इत्यासौ मुक्त उच्यते।। (इति न्यायमञ्जरी)

## १०.२९) असत्कार्यवादः

नैयायिकाः असत्कार्यवादिनः। तेषां मते उत्पत्तेः पूर्वं कार्यं तदीये उपादानकारणे असत् इति। घटकार्यम् उत्पत्तेः पूर्वं घटकारणे मृत्तिकायां कदापि न तिष्ठति। कार्यं कारणात् भिन्नमेव। असत्कार्यवादानुसारं सतः कारणात् असतः कार्यस्य उत्पत्तिः भवति। कार्योत्पत्तेः पूर्वं सति उपादानकारणे असतः कार्यस्य या उत्पत्तिः सा 'आरम्भः' इत्युच्यते। जगतः उपादानकारणं परमाणुसमूहः सत् अर्थात् नित्यम्। परमाणुतः द्व्यणुकादेः उत्पत्तिः भवति। द्व्यणुकादिकं कार्यजातम् उत्पत्तेः पूर्वं नास्ति। न च विनाशात् परं स्यात्। अतः न्यायमते सतः कारणात् एव असत् कार्यम् उत्पद्यते। एष एव असत्कार्यवादः आरम्भवादस्य मूलम्। महर्षिः गौतमः अपि आह। यतः कार्यस्य उत्पत्तिविनाशौ प्रत्यक्षसिद्धौ अतः कार्यम् असदेव। तथा च न्यायसूत्रम् –"उत्पादव्ययदर्शनात्।" इति।



## पाठगतप्रश्नाः

५७. न्यायमते प्रमेयं कतिविधम्।

५८. न्यायमते आत्मगुणाः के।



५९. शरीरं किम्।

६०. अर्थाः के।

६१. मनसः लिङ्गं किम्।

६२. दोषः कः।

६३. प्रेत्यभावः कः।

६४. अपवर्गः कः।

६५. संशयः कः।

६६. सिद्धान्तः कतिविधः।

६७. तर्कः कः।

६८. प्रमाणानां फलं किम्।

६९. निर्णयलक्षणं किम्।

७०. वादः कः।

७१. जल्पः कः।

७२. कस्यां कथायां स्वपक्षस्थापना न तिष्ठति।

७३. छलादीनां प्रयोगः कस्यां कथायां भवति।

७४. हेत्वाभासः कः।

७५. हेत्वाभासः कतिविधः।

७६. सव्याभिचारः हेत्वाभासः कतिविधः।

७७. 'गगनारविन्दं सुरभि अरविन्दत्वात्' इत्यत्र कः हेत्वाभासः विद्यमानः।

७८. 'वह्निः अनुष्णः द्रव्यत्वात्' इत्यत्र कः हेत्वाभासः विद्यमानः।

७९. छलं कतिविधम्।

८०. जातिः का।

८१. निग्रहस्थानं किम्।

८२. निग्रहस्थानं कतिविधम्।

८३. विप्रतिपत्तिमूलकानि निग्रहस्थानानि कति।

८४. न्यायमते मोक्षस्वरूपं किम्।

८५. 'तदत्यन्तविमोक्षोऽपवर्गः' इत्यत्र तत्पदस्य अर्थः कः।

८६. न्यायमते निःश्रेयसलाभः कथं भवति।

८७. दुःखस्य आत्यन्तिकी निवृत्तिः कथं स्यात्।

८८. असत्कार्यवादिनः के।

८९. असत्कार्यवादस्य सारः कः।



१०. आरम्भवादिनः के।



## पाठसारः

गौतमप्रणीतं न्यायसूत्रं न्यायदर्शनस्य प्रामाणिकः ग्रन्थः। अस्मिन् दर्शने प्रमाणादयः षोडश पदार्थाः स्वीकृताः। एतेषां पदार्थानां तत्त्वज्ञानात् निःश्रेयसलाभः भवति। न्यायमते प्रत्यक्षानुमानोपमानशब्दभेदात् चत्वारि प्रमाणानि। प्राचीननव्यमध्यभेदेन न्यायसम्प्रदायः त्रिविधः। गङ्गेशोपाध्यायः नव्यन्यायस्य प्रवर्तकः। नैयायिकमते 'सतः असत् उत्पद्यते', अतस्ते असत्कार्यवादिनः। दुःखस्य आत्यन्तिकी निवृत्तिः मोक्षः। तस्य च मोक्षस्य लाभः मिथ्याज्ञानादीनां नाशे पुनर्जन्मरोधात् सम्भवति।



## पाठान्तप्रश्नाः

१. न्यायदर्शनस्य महिमानम् वर्णयत।
२. न्यायशब्दस्यार्थं विवृणुत।
३. न्यायशास्त्रस्य बीजं लिखत।
४. कालभेदेन न्यायशास्त्रस्य भेदान् विशदयत।
५. प्राचीन-मध्य-नव्य-न्यायवैशिष्ट्यानि कानि।
६. न्यायमते प्रत्यक्षं ज्ञानं कथं जायते।
७. न्यायमते सन्निकर्षान् विशदयत।
८. कारणानि परिचाययत।
९. न्यायमते अनुमानं कथं जायते।
१०. न्यायमते परार्थानुमानं विस्तारयत।
११. न्यायमते उपमानं व्याख्येयम्।
१२. न्यायमते शब्दप्रमाणं विशदीकर्तव्यम्।
१३. न्यायस्य प्रमेयाणि परिचाययत।
१४. सव्यभिचारं हेत्वाभासं सभेदं सोदाहरणं च परिचाययत।
१५. साध्यसमं हेत्वाभासं सभेदं सोदाहरणं च परिचाययत।
१६. छलं स्पष्टीकर्तव्यम्।
१७. न्यायनये प्रमयेषु जातिः वर्णनीया।
१८. न्यायानुसारं मोक्षः प्रतिपाद्यः।



१९. न्यायस्य असत्कार्यवादम् उपपादयत।



## पाठगतप्रश्नानामुत्तराणि

१. दर्शनशब्दस्य अर्थः तत्त्वज्ञानम्।

२. नास्तिकदर्शनसम्प्रदायाः चार्वाकाः बौद्धाः जैनाश्च।

३. न्यायशास्त्रस्य आन्वीक्षिकी तर्कशास्त्रं वेति नामान्तरम्।

४. भाष्यकारेण न्यायशब्दस्य अर्थः कृतः 'प्रमाणैः अर्थपरीक्षणं न्यायः' ।

५. प्रतिज्ञा हेतुः उदाहरणम् उपनयं निगमनञ्च इति अनुमानस्य पञ्च अवयवाः।

६. न्यायशास्त्रे अनुमानप्रमाणेन वेदस्य प्रामाण्यम् उपस्थापितम्।

७. छान्दोग्योपनिषदि आम्नातस्य 'वाकोवाक्यम्' इति पदस्य अर्थः 'तर्कशास्त्रम्' इति।

८. महर्षिः गौतमः न्यायसूत्रस्य प्रणेता।

९. गङ्गेशोपाध्यायः नव्यन्यायस्य प्रवक्ता।

१०. भासर्वज्ञः मध्यन्यायस्य आचार्यः।

११. प्राचीनन्याये प्रमेयाणां प्राधान्यं दृश्यते किन्तु नव्यनाये प्रमाणं प्रधानम्।

१२. ख्राष्टपूर्वचतुर्थशतकं न्यायसूत्रस्य उद्भवकालः।

१३. न्यायवार्तिकं उद्योतकरेण प्रणीतम्।

१४. न्यायवार्तिकतात्पर्यः वाचस्पतिमिश्रेण विरचितः।

१५. उदयनाचार्यकृतः न्यायशास्त्रस्य ग्रन्थः न्यायनिबन्धः इति।

१६. न्यायमञ्जरीकारः जयन्तभट्टः।

१७. नव्यन्यायस्य प्रामाणिकः ग्रन्थः गङ्गेशोपाध्यायकृतः तत्त्वचिन्तामणिः।

१८. बर्धमानोपाध्यायकृता प्रकाशटीका।

१९. वादिविनोदः शङ्करमिश्रेण प्रणीतः।

२०. विश्वनाथन्यायपञ्चाननः न्यायसूत्रवृत्तिकारः।

२१. रघुनाथशिरोमणिकृतः न्यायग्रन्थः तत्त्वचिन्तामणिदीधितिः इति।

२२. न्यायसारः भासर्वज्ञेन प्रणीतः।

२३. न्यायशास्त्रे मोक्षानुकूलाः षोडश पदार्थाः प्रमाणादयः।

२४. नैयायिकाः अनियतपदार्थवादिनः।

२५. न्यायमते प्रमाणं चतुर्विधम्- प्रत्यक्षम् अनुमानम् उपमानं शब्दश्च।

२६. 'इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्' इति प्रत्यक्षस्य लक्षणम्

२७. प्रत्यक्षं द्विविधम्- सविकल्पकं निर्विकल्पकञ्चेति।



२८. सन्निकर्षः द्विविधः- लौकिकः अलौकिकश्च

२९. संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेष्यविशेषणभावश्चेति षट् लौकिकाः सन्निकर्षाः।

३०. सामान्यलक्षणः, ज्ञानलक्षणः, योगजश्चेति त्रयः अलौकिकाः सन्निकर्षाः।

३१. घटरूपप्रत्यक्षे संयुक्तसमवायः सन्निकर्षः भवति।

३२. शब्दत्वप्रत्यक्षे समवेतसमवायः सन्निकर्षः भवति।

३३. अभावप्रत्यक्षे विशेष्यविशेषणभावः सन्निकर्षः भवति।

३४. 'कार्यनियतपूर्ववृत्ति कारणम्' इति कारणलक्षणम्।

३५. कारणं त्रिविधम्- समवायि असमवायि निमित्तञ्च।

३६. तन्तवः पटस्य समवायिकारणम्।

३७. तुरीयवेमादिकं पटकार्यस्य निमित्तकारणम्।

३८. असाधारणं कारणं करणम्।

३९. नव्यन्यायमते चक्षुरादिकम् इन्द्रियं प्रत्यक्षप्रमाणम्।

४०. 'फलायोगव्यवच्छिन्नं कारणं करणम्' इति प्राचीनमते करणलक्षणम्।

४१. 'व्यापारवत् कारणं करणम्' इति नव्यमते करणलक्षणम्।

४२. परामर्शजन्यं ज्ञानम् अनुमितिः।

४३. व्याप्तिविशिष्टं पक्षधर्मता ज्ञानं परामर्शः।

४४. प्राचीनमते परामर्शज्ञानम् अनुमानप्रमाणम्।

४५. नव्यमते व्याप्तिस्मृतिः अनुमानप्रमाणम्।

४६. अनुमानं द्विविधम् स्वार्थानुमानं परार्थानुमानञ्च।

४७. मेघोन्नत्या भविष्यति वृष्टिः इति वृष्टेःअनुमानम्।

४८. संज्ञासंज्ञिसम्बन्धज्ञानम् उपमितिः।

४९. प्राचीनमते अतिदेशवाक्यार्थस्मरणम् उपमानप्रमाणम्।

५०. आप्तवाक्यं शब्दप्रमाणम्।

५१. शब्दप्रमाणं द्विविधम्। दृष्टार्थम् अदृष्टार्थञ्च।

५२. 'अस्मात् पदात् अयम् अर्थः बोधव्यः' इति ईश्वरसंकेतः शक्तिः।

५३. वृद्धव्यवहारेण शक्तिग्रहः भवति।

५४. आकाङ्क्षा योग्यता आसत्तिश्चेति शाब्दबोधे कारणत्रयम्।

५५. नव्यमते शब्दप्रमाणं पदज्ञानम्।

५६. पदार्थस्मृतिः शाब्दबोधे व्यापारः।

५७. न्यायमते प्रमेयं द्वादशविधम्।



५८. न्यायमते इच्छा द्वेषः प्रयत्न सुखं दुःखं ज्ञानञ्च आत्मगुणाः।

५९. भोगायतनं शरीरम्।

६०. भोगयोग्याः विषयाः अर्थाः।

६१. युगपत् ज्ञानानाम् अनुत्पत्तिः मनसः लिङ्गम्।

६२. प्रवृत्तिकारणं दोषः।

६३. पुनरुत्पत्तिः प्रेत्यभावः।

६४. दुःखस्य आत्यन्तिकी निवृत्तिः अपवर्गः।

६५. एकस्मिन् धर्मिणि विरुद्धप्रकारकं ज्ञानं संशयः। यथा आत्मा नित्यः अनित्यः वा।

६६. सिद्धान्तः चतुर्विधः सर्वतन्त्रः प्रतितन्त्रः अधिकरणः अभ्युपगमश्च।

६७. सामान्यतः ज्ञातस्य यस्य पदार्थस्य तत्त्वम् अविज्ञातम्, तस्मिन् पदार्थे तत्त्वज्ञानार्थं प्रमाणसम्भवप्रयुक्तः ज्ञानविशेषः तर्कः।

६८. निर्णयः तत्त्वज्ञानं वा प्रमाणानां फलम्।

६९. 'विमृश्य पक्षप्रतिपक्षाभ्याम् अर्थावधारणं निर्णयः' ।

७०. तत्त्वबुभुत्सुकथा वादः।

७१. विजिगीषुकथा जल्पः।

७२. वितण्डायां स्वपक्षस्थापना न तिष्ठति।

७३. जल्पकथायां छलादीनां प्रयोगः भवति।

७४. हेतोः आभासाः दोषाः हेत्वाभासाः। हेतुवत् आभासन्ते ये ते हेत्वाभासाः वा।

७५. हेत्वाभासः पञ्चविधः।

७६. सव्याभिचारः हेत्वाभासः त्रिविधः। साधारणः असाधारणः अनुपसंहारी च।

७७. 'गगनारविन्दं सुरभि अरविन्दत्वात्' इत्यत्र आश्रयासिद्धः हेत्वाभासः विद्यमानः।

७८. 'वह्निः अनुष्णः द्रव्यत्वात्' इत्यत्र बाधः हेत्वाभासः।

७९. छलं त्रिविधम् – वाक्छलम् सामान्यछलम् उपचारछलञ्च।

८०. असदुत्तरं जातिः।

८१. पराजयप्राप्तिहेतुः निग्रहस्थानम्।

८२. द्वाविंशति निग्रहस्थानानि।

८३. विप्रतिपत्तिमूलकानि निग्रहस्थानानि षोडश।

८४. न्यायमते दुःखस्य आत्यन्तिकी निवृत्तिः मोक्षः।

८५. 'तदत्यन्तविमोक्षोऽपवर्गः' इत्यत्र तत्पदस्य अर्थः दुःखमिति।

८६. न्यायमते प्रमाणादीनां तत्त्वज्ञानात् निःश्रेयसलाभः भवति।

८७. मिथ्याज्ञाननाशे दोषनाशः, दोषनाशे प्रवृत्तिनाशः, प्रवृत्तिनाशे जन्मनाशः, जन्मनाशे च



दुःखस्य आत्यन्तिकी निवृत्तिः स्यात्।

८८. नैयायिकाः असत्कार्यवादिनः।

८९. सतः कारणात् असत् कार्यम् उत्पद्यते, उत्पत्तेः पूर्वं कार्यं उपादानकारणे असत् इति असत्कार्यवादस्य तात्पर्यम्।

९०. नैयायिकाः आरम्भवादिनः।

॥ इति दशमः पाठः ॥



# ११

# वैशेषिकदर्शनम्

योगाचारविभूत्या यस्तोषयित्वा महेश्वरम्।

चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः॥ इति। (प्रशस्तपादभाष्यम्)

## प्रस्तावना

षड्विधेषु आस्तिकदर्शनेषु वैशेषिकशास्त्रम् अन्यतमम्। वैशेषिकदर्शनस्य अन्यानि नामान्यपि वर्तन्ते। यथा – कणाददर्शनम्, औलूक्यदर्शनम्, काश्यपीयदर्शनम्। अस्य दर्शनस्य प्रवक्ता महर्षिः कणादः। यः खलु क्वचित् स्थानान्तरं कणभुक्, कणभक्षः, उलूकः, काश्यपः, योगी इत्यादिभिः नामभिः परिचीयते। एतत् वैशेषिकदर्शनं न्यायशास्त्रादपि प्राचीनतमम्। पदार्थविभाजनं तथा परमाणुवादप्रवर्तनं वैशेषिकदर्शनस्य विशेषः। अपि च नव्यन्यायशास्त्रस्य परिपूरकशास्त्रम् एतत् कणादप्रवर्तितं वैशेषिकदर्शनम्। अस्य दर्शनस्य प्रशंसावाचकः प्रवादः अपि पण्डितसमाजे प्रचलति – "काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्" इति।



## उद्देश्यानि

अनेन पाठेन भवान् अधोलिखितान् विषयान् ज्ञास्यति -

- वैशेषिकदर्शनं न्यायदर्शनस्य समानतन्त्रम्
- वैशेषिकनामतात्पर्यम्
- वैशेषिकदर्शनस्य कालः
- कणादप्रणीतस्य ग्रन्थस्य परिचयः
- वैशेषिकदर्शनस्य आचार्यपरम्परा
- वैशेषिकपदार्थतत्त्वम्
- वैशेषिकप्रमाणतत्त्वम्
- परमाणुवादः

## ११.१) न्यायदर्शनस्य समानतन्त्रम्

एतत् दर्शनं न्यायशास्त्रस्य समानतन्त्रमेव। समानपदमत्र सादृश्यार्थकम्। तन्त्रपदञ्च सिद्धान्तवाचि शास्त्रवाचि वा। तदुक्तम् अमरकोषे- 'तन्त्रं प्रधाने सिद्धान्ते सूत्रवापे परिच्छदे' इति। न्यायदर्शनेन सह वैशेषिकदर्शनस्य सिद्धान्तगतं सादृश्यमेव प्रधानम्। यच्च उभयोः वैजात्यं दृश्यते तद्धि



गौणम्। यथा हि न्यायदर्शने प्रमाणतत्त्वं प्रधानं किन्तु वैशेषिकदर्शने प्रमेयतत्त्वं प्रधानम्। न्यायमते षोडशपदार्थाः, वैशेषिकमते च सप्त पदार्थाः। न्यायमते प्रमाणानि चत्वारि, वैशेषिकदर्शने च द्वे प्रमाणे। एतादृशे वैसादृश्येऽपि उभयोः शास्त्रयोः सादृश्यम् अनस्वीकार्यम्। तथा हि वैशेषिकाणां सप्त पदार्थाः न्यायसम्प्रदाये अवान्तरपदार्थरूपेण स्वीकृताः। तथा हि भाष्यम् –

"अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम्, तद्भेदेन चापरिसंख्येयम्। " इति।

न्यायस्य षोडश पदार्थाः वैशेषिकैः प्रकारान्तरेण स्वीकृताः। यथा न्यायस्य संशयपदार्थः वैशेषिकनये गुणान्तर्गतः। वैशेषिकाणां प्रत्यक्षम् अनुमानञ्च प्रमाणद्वयं न्यायस्य प्रत्यक्षानुमानाभ्याम् अभिन्नम्। वैशेषिकाः उपमानं शब्दं चेति प्रमाणद्वयमपि अनुमानान्तर्गतम् इति मन्यन्ते। अपि च मुक्तिविषये उभयोः ऐकमत्यम् अस्ति। उभयत्र मिथ्याज्ञानानां निवृत्तौ दुःखनिवृत्तिरिति स्वीकृतम्। परमाणवः एव पञ्चानां महाभूतानाम् उपादानमिति अपि उभयसम्मतम्। अपि च उभौ सम्प्रदायौ असत्कार्यवादम् तथा आत्मनः बहुत्वं सगुणत्वञ्च स्वीकुरुतः। अतः वैशेषिकदर्शनं न्यायदर्शनस्य समानतन्त्रमिति कथ्यते।

## ११.२) वैशेषिकनामकरणम्

अधिकृत्य कृते ग्रन्थे इति सूत्रेण विशेषशब्दात् परं ठक्-प्रत्ययस्य योगे निष्पन्नः वैशेषिकशब्दः कणादप्रवर्तितशास्त्रस्य वाचकः। विशेषमधिकृत्य कृतः ग्रन्थः इत्यर्थः। स च विशेषपदार्थनिरूपकग्रन्थः। कस्तावत् विशेषः अस्य शास्त्रस्य। तदुच्यते- कणादप्रवर्तिते अस्मिन् शास्त्रे 'विशेषः' इति पदार्थः स्वीकृतः। यः खलु भेदबुद्धेः जनकः। एष विशेषपदार्थः एव वैशेषिकशास्त्रस्य विशेषः। केचित् कथयन्ति यत् परमाणुः कणो वा वैशेषिकदर्शनस्य विशेषः। तथा हि शारीरकभाष्यम् – "न च अकारणेन कार्येण भवितव्यमिति अतः परमाणवः जगतः कारणम् इति कणभुगभिप्रायः।" इति। अतः विशेषपदार्थस्य स्वीकारात् परमाणुवादस्य वा प्रवर्तनात् वा अस्य शास्त्रस्य वैशेषिकमिति अभिधा इति वक्तुं युज्यते।

## ११.३) वैशेषिकदर्शनस्य कालः

वैशेषिकदर्शनम् अतीव प्राचीनं दर्शनम्। अस्य आरम्भकालविषये निश्चिततया किमपि वक्तुं न शक्यते। वेदान्तमीमांसादिषु शास्त्रेषु परमाणुवादादिकं वैशेषिकमतं खण्डितं दृश्यते। वैशेषिकशास्त्रे च न्यायमतं न प्राप्यते। किन्तु न्यायभाष्यादिषु वैशेषिकं मतं सुलभम्। तेन च वैशेषिकदर्शनम् एतेभ्यः दर्शनेभ्यः प्राचीनतरमिति प्रतीयते। सतीशचन्द्रविद्याभूषण-महोदयस्य मते वैशेषिकसूत्राणाम् आनुमानिकः कालः इशवीयपूर्वषष्ठशतकम्।

## ११.४) सूत्रग्रन्थपरिचयः

कणादप्रणीते वैशेषिकसूत्रमिति ग्रन्थे दश अध्यायाः वर्तन्ते। प्रत्येकमपि अध्याये आह्निकद्वयं विद्यते। समग्रस्य ग्रन्थस्य मूलम् उद्देश्यं तावत् तत्त्वज्ञानम्। तत्त्वज्ञानफलञ्च मुक्तिः। तथाच वैशेषिकं सूत्रम्- 'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्।' इति। वैशेषिकमते जडपदार्थतत्त्वज्ञानं विहाय आत्मतत्त्वज्ञानं न भवति। अतः



मुक्तये आत्मतत्त्वज्ञानलाभाय वैशेषिकदर्शने जडपदार्थानामपि विस्तरेण आलोचनं विहितम्। तथा हि अधस्तात् अध्यायक्रमेण वैशेषिकसूत्रग्रन्थस्य विषयसंक्षेपः प्रदीयते –

| अध्यायः | आह्निकम् | विषयाः |
|---|---|---|
| १. | १. | धर्मलक्षणम्, द्रव्यादिपदार्थलक्षणम् |
| | २. | कार्यकारणभावविचारः,सत्तादिजातिवर्णनम् |
| २. | १. | पृथिव्यादिद्रव्यलक्षणम् |
| | २. | कालनिरूपणम्, शब्दनिरूपणम् |
| ३. | १. | आत्मानुमानम्, हेत्वाभासाः |
| | २. | मनोनिरूपणम्, प्रकारान्तरेण आत्मानुमानम्, आत्मनः नित्यता |
| ४. | १. | परमाणुकारणतावादः, रूपादिप्रत्यक्षवर्णना |
| | २. | कर्मविचारः |
| ५. | १. | अनित्यद्रव्यविभागः |
| | २. | भूमिकम्पादीनां हेतुः, अन्धकारनिरूपणम् |
| ६. | १. | वेदस्य ईश्वरकर्तृत्वम् |
| | २. | वैधकर्मफलम्, धर्माधर्महेतुः, पुनर्जन्म, मोक्षोपायः |
| ७. | १. | रूपादीनां नित्यता अनित्यता च, परिमाणविचारः |
| | २. | संख्यादिविचारः, पदपदार्थसम्बन्धविचारः, समवायः |
| ८. | १. | ज्ञानप्रकरणम्, प्रत्यक्षहेतुनिर्देशः |
| | २. | विशिष्टप्रत्यक्षहेतुः |
| ९. | १. | अभावप्रत्यक्षप्रकरणम्, योगजं प्रत्यक्षम् |
| | २. | अनुमानम्, शाब्दबोधस्य अनुमानत्वम्, अविद्या, विद्या |
| १०. | १. | सुखदुःखविचारः |
| | २. | कारणत्रयोपदेशः, वेदप्रामाण्यम्। |



## पाठगतप्रश्नाः

१. वैशेषिकदर्शनस्य प्रवक्ता कः।

२. वैशेषिकदर्शनस्य विशेषत्वं किम्।

३. महर्षेः कणादस्य अपरं नामद्वयं किम्।

४. वैशेषिकदर्शनं कस्य दर्शनस्य समानतन्त्रम्।



५. न्यायवैशेषिकदर्शनयोः एकं सादृश्यं लेख्यम्।

६. न्यायवैशेषिकदर्शनयोः एकं वैशादृश्यं लेख्यम्।

७. वैशेषिकदर्शनस्य वैशेषिकमिति आख्या कथं भवति।

८. वैशेषिकसूत्रस्य उद्भवः कस्मिन् समये जातः।

९. वैशेषिकसूत्रे कति अध्यायाः सन्ति।

१०. वैशेषिकशास्त्रस्य मूलम् उद्देश्यं किम्।

## ११.५) आचार्यपरम्परा

कणादप्रणीतं यत् वैशेषिकदर्शनम्, तस्य कति आचार्याः आसन् एतत् निश्चिततया वक्तुं न शक्यते। केषांश्चित् वैशेषिकाणां ग्रन्थानां नाममात्रं श्रूयते, किन्तु तेषां रचयितारः के इति न ज्ञायते। यथा 'वैशेषिकवाक्यम्' इति वार्तिकम्, 'वैशेषिककटन्दी' चेति ग्रन्थः। यदेव भवतु, अधुना केषाञ्चित् वैशेषिकाचार्याणां नामानि तथा तेषां ग्रन्थानां नामानि कालक्रमेण उपस्थाप्यन्ते –

| क्रमाङ्कः | आचार्याः | ग्रन्थाः | कालः(आनुमानिकः) इशवीयशतकम् |
|---|---|---|---|
| १. | कणादमुनिः | वैशेषिकसूत्रम् | ६ (इशुपूर्वम्) |
| २. | प्रशस्तपादः | पदार्थधर्मसंग्रहः/ प्रशस्तपादभाष्यम् | ३ (इशुपूर्वम्) |
| ३. | व्योमशिवाचार्यः | व्योमवती | ७ (इशूत्तरम्) |
| ४. | श्रीधरभट्टः | न्यायकन्दली(भाष्यटीका) | १०(इशूत्तरम्) |
| ५. | उदयनाचार्यः | किरणावली(भाष्यटीका) | ११(इशूत्तरम्) |
| ६. | बल्लभाचार्यः | न्यायलीलावती | १२(इशूत्तरम्) |
| ७. | शिवादित्याचार्यः | सप्तपदार्थी | १२(इशूत्तरम्) |
| ८. | केशवमिश्रः | तर्कभाषा | १३(इशूत्तरम्) |
| ९. | शङ्करमिश्रः | वैशेषिकसूत्रोपस्कारः | १५(इशूत्तरम्) |
| १०. | रघुनाथशिरोमणिः | पदार्थतत्त्वनिरूपणम् (दीधितिः) | १६(इशूत्तरम्) |
| ११. | प्रगल्भाचार्यः | प्रागल्भा(लीलावती) | १६(इशूत्तरम्) |
| १२. | पद्मनाभमिश्रः | सेतुटीका | १६(इशूत्तरम्) |
| १३. | अन्नंभट्टः | तर्कसंग्रहः | १६(इशूत्तरम्) |
| १४. | विश्वनाथाचार्यः | भाषापरिच्छेदः | १७(इशूत्तरम्) |
| १५. | पञ्चाननतर्करत्नः | परिष्कारः(उपस्कारटीका) | २०(इशूत्तरम्) |



## पाठगतप्रश्नाः

११. प्रशस्तपादेन रचितस्य ग्रन्थस्य नाम किम्।

१२. व्योमवती कस्य रचना।

१३. किरणावली केन विरचिता।

१४. न्यायकन्दलीं कः प्रणीतवान्।

१५. उपस्कारग्रन्थः केन विरचितः।

१६. सेतुटीकायाः टीकाकारः कः।

१७. विश्वनाथाचार्यस्य ग्रन्थस्य नाम किम्।

१८. अन्नंभट्टेन प्रणीतस्य ग्रन्थस्य नाम किम्।

१९. न्यायलीलावती कस्य रचना।

२०. केशवमिश्रः कः।

## ११.६) वैशेषिकमते पदार्थाः

वैशेषिकदर्शने सप्तपदार्थाः स्वीकृताः, अतः ते वैशेषिकाः सप्तपदार्थवादिनः इति कथ्यन्ते। यद्यपि कणादसूत्रे षण्णां पदार्थानाम् उल्लेखः दृश्यते, तत्र अभावस्य उद्देशः नास्ति, तथापि नवमाध्याये प्रागभावादेः स्वरूपम् उक्तम्। ततश्च उदयनाचार्येण अभावः सप्तमपदार्थरूपेण गृहीतः। अपि च एतत् वक्तव्यं यत् अभावपदार्थः भावपदार्थज्ञानाधीनः। तस्मात् अभावस्य पृथगुल्लेखः सूत्रे नास्ति। तदाह न्यायकन्दलीकारः- "अभावस्य पृथगनुपदेशो भावपारतन्त्र्यात्, न त्वभावात्।" इति।

वैशेषिकमते पदार्थाः सप्तैव। ते च पदार्थाः द्रव्यम् गुणः कर्म सामान्यं विशेषः समवायः अभावश्चेति।

तत्र द्रव्याणि नव एव। तानि च पृथिवी आपः तेजः वायुः आकाशं कालः दिग् आत्मा मनः चेति। गुणाः चतुर्विंशतिः सन्ति। ते च रूपम् रसः गन्धः स्पर्शः संख्या परिमाणम् पृथक्त्वम् संयोगः विभागः परत्वम् अपरत्वम् गुरुत्वम् द्रवत्वम् स्नेहः शब्दः बुद्धिः सुखम् दुःखम् इच्छा द्वेषः प्रयत्नः धर्मः अधर्मः संस्कारः इति। कर्माणि पञ्च भवन्ति। तानि च उत्क्षेपणम् अपक्षेपणम् आकुञ्चनम् प्रसारणम् गमनम् इति। सामान्यं द्विविधं भवति। तच्च परम् अपरमिति। विशेषाः अनन्ताः सन्ति। समवायः एकः एव वर्तते। अभावस्य चत्वारः भेदाः सन्ति। ते च प्रागभावः प्रध्वंसाभावः अत्यन्ताभावः अन्योन्याभावः चेति।

## ११.७) द्रव्यम्

सप्तपदार्थेषु द्रव्यं हि गुणकर्मादीनाम् आश्रयत्वेन प्रधानम्। तस्मात् तस्य प्रथमतः उल्लेखः। "क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम्।" इति (१।१। १५)। कर्माश्रयः गुणाश्रयः समवायिकारणं वा द्रव्यम्। अर्थात् यस्मिन् पदार्थे समवायेन गुणः कर्म वा तिष्ठति, यत् खलु भावकार्यमात्रस्य



समवायिकारणं भवति तत् द्रव्यम्। तानि च द्रव्याणि नव– पृथिवी आपः तेजः वायुः आकाशम् कालः दिक् आत्मा मनश्चेति। 'तमः खलु चलं नीलं परापरविभागवत्' इतत्यनेन मीमांसकाः तमसः दशमद्रव्यत्वं कथयन्ति। किन्तु न्यायमते तमः न पृथक् द्रव्यम्, तस्य अभावे एव अन्तर्गतत्वात्। वस्तुतः तमः प्रौढप्रकाशकतेजसः अभावः एव। 'तमः खलु चलम्' इति प्रत्ययस्तु भ्रमः। यस्मिन् द्रव्ये कर्म विद्यते तद् मूर्तम् इत्याख्यायते। अथवा यस्य द्रव्यस्य परिमाणं परिच्छिन्नं भवति तद् द्रव्यं मूर्तम्। मूर्तभिन्नं द्रव्यं विभु। सर्वमूर्तद्रव्येण सह यस्य संयोगः विद्यते तत् सर्वमूर्तद्रव्यसंयोगि विभु द्रव्यम्। आकाशकालदिगात्मानः विभुद्रव्याणि। अन्यत्सर्वं मूर्तमेव।

## ११.७.१) पृथिवी

'गन्धवती पृथिवी' इति। गन्धवत्त्वं पृथिव्याः लक्षणम्। पृथिवीत्वं जातिः गन्धाख्यः विशेषगुणः वा यस्मिन् द्रव्ये समवायेन अस्ति, सा पृथिवी। शरीरम् इन्द्रियं विषयः चेति भेदेन पृथिवी त्रेधा। शरीरं मनुष्यादिजन्तूनाम्। इन्द्रियं घ्राणम्, नासाग्रे वर्तमानं, गन्धग्रहणे साधनभूतम् च भवति। विषयः मृत्पाषाणवृक्षादिः इति। कार्यरूपा पृथिवी अनित्या। किन्तु पृथिव्याः परमाणुः नित्यः। पृथिव्यां रूपं रसः गन्धः स्पर्शः चेति चत्वारः पाकजाः विशेषगुणाः तिष्ठन्ति। पाकः तेजःसंयोगः। अपिच संख्या परिमाणं पृथक्त्वं संयोगः विभागः परत्वम् अपरत्वं गुरुत्वं द्रवत्वं संस्कारश्चेति दश सामान्यगुणाः वर्तन्ते पृथिव्याम्।



## ११.७.२) आपः

'शीतस्पर्शवत्य आपः'। येषु द्रव्येषु शीतस्पर्शः इति गुणः तिष्ठति ताः आपः। अप्त्वसामान्ययुक्ताः वा आपः। शरीरम् इन्द्रियं विषयः चेति भेदेन आपः त्रेधा। शरीरं जलीयं वरुणलोके। इन्द्रियं रसनम्, जिह्वायां वर्तते, रसग्रहणे साधनभूतम् च भवति। विषयः सरित्समुद्रादिः इति। कार्यरूपाः आपः अनित्याः। अपां परमाणुः नित्यः। अप्स्वपि पृथिवीवत् चतुर्दश गुणाः तिष्ठन्ति। पृथिव्यां यत्र गन्धः विशेषः, अत्र तु अप्सु स्नेहः विशेषः इति भेदः।





### ११.७.३) तेजः

'उष्णस्पर्शवत् तेजः'। यस्मिन् द्रव्ये उष्णस्पर्शः इति गुणः तिष्ठति तत् तेजः। तेजस्त्वजातिमत् वा तेजः।

शरीरम् इन्द्रियं विषयः चेति भेदेन तेजः त्रेधा। शरीरं तैजसम् आदित्यलोके। इन्द्रियं चक्षुः, कृष्णताराग्रे वर्तते, रूपग्रहणे साधनं भवति। विषयः भौमदिव्यौदर्याकरजभेदात् चतुर्विधः। भौमं वह्निखद्योतादि, दिव्यं सूर्यविद्युदादि, औदर्यं भुक्तस्य अन्नादेः रसादिरूपेण परिणामहेतुः, आकरजं सुवर्णादि च। कार्यरूपं तेजः अनित्यम्। तैजसः परमाणुः नित्यः।

तेजसि रूपं स्पर्शश्चेति विशेषगुणद्वयं तिष्ठति। संख्या, परिमाणं पृथक्त्वं संयोगः विभागः परत्वम् अपरत्वं द्रवत्वं संस्कारश्चेति नव सामान्यगुणाः च तिष्ठन्ति।

### ११.७.४) वायुः

'अरूपस्पर्शवान् वायुः'। यस्य द्रव्यस्य रूपं नास्ति किन्तु स्पर्शः विद्यते तत् द्रव्यं वायुः। वायुत्वजातिमान् वा वायुः। स च वायुः अनुष्णाशीतस्पर्शादिभिः अनुमेयः। शरीरम् इन्द्रियं विषयः चेति भेदेन वायुः त्रिविधः। वायवीयं शरीरं वायुलोके। इन्द्रियं त्वक्, सर्वशरीरे वर्तते, स्पर्शग्रहणे साधनं च भवति। विषयः वृक्षादिकम्पनहेतुः। शरीरान्तःसञ्चारी वायुः प्राणाख्यः। स च उपाधिभेदात् प्राणः, अपानः, व्यानः, उदानः, समानश्चेति पञ्चविधः। कार्यरूपः वायुः अनित्यः। परमाणुरूपः वायुश्च नित्यः।

वायौ स्पर्शः इति एकः विशेषः गुणः तथा संख्या परिमाणं पृथक्त्वं संयोगः विभागः परत्वम् अपरत्वं वेगः (संस्कारः) चेति अष्टौ सामान्यगुणाः च तिष्ठन्ति।

### ११.७.५) आकाशम्

'शब्दगुणकम् आकाशम्' । यस्मिन् द्रव्ये शब्दः इति विशेषः गुणः समवायेण तिष्ठति तत् द्रव्यम् आकाशम्। तच्च आकाशं नित्यं विभुपरिमाणम् एकञ्च। नित्यं सृष्टिविनाशरहितम्। विभु सर्वमूर्तद्रव्यसंयोगि। परिच्छिन्नपरिमाणवत् क्रियावत् वा द्रव्यं मूर्तम्। यतः आकाशस्य परिमाणस्य इयत्ता नास्ति तस्मात् तत् विभुपरिमाणम्, अमूर्तम्। विभुत्वादेव आकाशं सर्वव्यापि। आकाशस्य भेदे प्रमाणं नास्ति अतः तत् एकम्। आकाशे शब्द इति विशेषः गुणः तथा संख्या परिमाणं पृथक्त्वं संयोगः विभागश्चेति पञ्च सामान्यगुणाः तिष्ठन्ति। शब्दाश्रयत्वेन परिशेषानुमानात् आकाशस्य सिद्धिः भवति।

### ११.७.६) कालः

'अतीतादिव्यवहारहेतुः कालः' इति। लोके अतीतं वर्तमानं भविष्यत् वत्सरं मासं दिनम् इत्यादीनां शब्दानां प्रयोगस्य हेतुः कालः। कालः एकः अपि उपाधिभेदात् अनेकः। स च कालः नित्यः विभुपरिमाणविशिष्टश्च। काले संख्या परिमाणं पृथक्त्वं संयोगः विभागश्चेति पञ्च सामान्यगुणाः तिष्ठन्ति। दिक्कृतयोः परत्वापरत्वयोः विपरीतधर्महेतुत्वेन कालसिद्धिः। कालः जगताम् आधारः कार्यमात्रस्य च निमित्तकारणम्। जन्यमात्रं कालस्य उपाधिः।

### ११.७.७) दिक्

'प्राच्यादिव्यवहारहेतुः दिक्' इति। लोके प्राची प्रतीची अदीची अवाची चेति शब्दानां प्रयोगस्य हेतुः दिक्। सा च दिक् एका अपि सूर्यतद्देशसंयोगोपाधिभेदात् प्राच्यादयः भवन्ति। दिक् उत्पत्तिविनाशरहिता नित्या विभ्वी च। दिशि कालवत् संख्या परिमाणं पृथक्त्वं संयोगः विभागः चेति पञ्च सामान्यगुणाः वर्तन्ते। कालकृतयोः परत्वापरत्वयोः विपरीतधर्महेतुत्वेन दिक्सिद्धिः। अपि च दिक् कालवत् कार्यमात्रस्य निमित्तकारणम्। सर्वमपि मूर्तं दिशः उपाधिः।

### ११.७.८) आत्मा

'ज्ञानाधिकरणम् आत्मा' । ज्ञानाश्रयः आत्मा। ज्ञानानि समवायेन यस्मिन् द्रव्ये तिष्ठन्ति तत् द्रव्यम् आत्मा। स च आत्मा नित्यः विभुश्च। जीवात्मा परमात्मा चेति भेदात् आत्मा द्विविधः। सुखदुःखादीनां वैचित्र्यात् जीवात्मा प्रतिशरीरं भिन्नः। किन्तु परमात्मा ईश्वरः एकः सर्वज्ञश्च। जीवात्मनि संख्यादयः पञ्च सामान्यगुणाः तथा बुद्धिः (अनित्यं ज्ञानम्) सुखं दुःखम् इच्छा द्वेषः प्रयत्नः धर्मः अधर्मः संस्कारश्चेति नव विशेषाः गुणाः तिष्ठन्ति। परमात्मनि तु संख्यादयः पञ्च सामान्यगुणाः तथा बुद्धिः (नित्यं ज्ञानम्) इच्छा प्रयत्नश्चेति विशेषगुणाः तिष्ठन्ति। 'क्षित्यङ्कुरं सकर्तृकं कार्यत्वाद्' इति अनुमानेन पृथिवी सकर्तृका इति सिद्ध्यते। ततश्च कः सः कर्ता इति जिज्ञासायां परिशेषानुमानात् ईश्वरसिद्धिः।

### ११.७.९) मनः

'सुखाद्युपलब्धिसाधनम् इन्द्रियं मनः' । सुखं दुःखं ज्ञानम् इच्छा इत्यादीनाम् उपलब्धेः यत् साधनं तत् इन्द्रियं मनः। चक्षुरादिकानि वहिरिन्द्रियाणि। मनस्तु अन्तरिन्द्रियम्। तच्च प्रतिपुरुषं भिन्नम् अणुपरिमाणं नित्यञ्च। युगपत् ज्ञानद्वयस्य उत्पत्तिः न भवति, तेन च मनसः अणुपरिमाणत्वं सिद्ध्यति। अपिच ज्ञानरूपस्य कार्यस्य उत्पत्तौ आदौ आत्मा मनसा संयुज्यते, ततः मनः इन्द्रियेण (चक्षुरादिज्ञानेन्द्रियेण) संयुज्यते, ततश्च इन्द्रियम् अर्थेन संयुज्यते। तस्मात् परं कस्यापि पुरुषस्य ज्ञानम् उत्पद्यते। एष एव ज्ञानोत्पत्तेः क्रमः। यतः हि सुषुप्तिकाले अणुपरिमाणं मनः पूरीतन्नाडीं प्रविशति। तेन सुषुप्तौ आत्मा मनसा तथा मनः इन्द्रियेण सह न संयुज्यते। तस्माच्च सुषुप्तौ ज्ञानं न उत्पद्यते। मनसः अष्टौ सामान्यगुणाः वर्तन्ते। ते च संख्या परिमाणं पृथक्त्वं संयोगः विभागः परत्वम् अपरत्वं संस्कारश्चेति।



## पाठगतप्रश्नाः

२१. वैशेषिकदर्शने कति पदार्थाः स्वीकृताः।

२२. वैशेषिकदर्शनस्य सप्तपदार्थाः के।

२३. द्रव्यलक्षणं किम्।

२४. भावकार्यमात्रस्य समवायिकारणं किम्।



२५. द्रव्याणि कति। तेषां नामानि लेख्यानि।

२६. पृथिव्याः विशेषः गुणः कः।

२७. पाकशब्दस्य अर्थः कः।

२८. पृथिव्याः सामान्यगुणाः कति।

२९. अप्सु कीदृशः स्पर्शः विद्यमानः।

३०. तेजसि कीदृशः स्पर्शः विद्यमानः।

३१. तेजः कतिविधम्।

३२. आकरजतेजसः उदाहरणं देयम्।

३३. तैजसम् इन्द्रियं किम्।

३४. वायोः लक्षणं किम्।

३५. प्राणाख्यः वायुः कः।

३६. उपाधिभेदात् वायुः कतिविधः।

३७. नित्यः वायुः कः।

३८. आकाशस्य विशेषगुणः कः।

३९. आकाशस्य वैशिष्ट्यं किम्।

४०. आकाशस्य सिद्धिः कथं भवति।

४१. जगताम् आधारः कः।

४२. कालस्य सामान्यगुणाः के।

४३. कालः कार्यमात्रस्य कीदृशं कारणं भवति।

४४. दिशः परिमाणं किम्।

४५. आत्मनः लक्षणं किम्।

४६. आत्मा कतिविधः।

४७. नित्यं ज्ञानं जीवात्मनः गुणः उत परमात्मनः।

४८. जीवात्मनः विशेषाः गुणाः के।

४९. मनसः लक्षणं किम्।

५०. मनसः परिमाणं किदृशम्।

५१. सुषुप्तिकाले मनः कुत्र प्रविशति।

## ११.८) गुणः

'द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः' । यः न द्रव्यं न वा कर्म किन्तु सामान्यवान् स पदार्थः गुणः। गुणत्वजातिमान् वा गुणः। वस्तुतः सामान्यं केवलं द्रव्यगुणकर्मवृत्ति। अतः यः सामान्यवान्



पदार्थः द्रव्यकर्मभ्यां भिन्नः स गुणः भवति। स च गुणः द्रव्याश्रितः असमवायिकारणस्वरूपः। वैशेषिकमते साकल्येण गुणाः चतुर्विंशतिप्रकाराः। ते च – रूपं रसः गन्धः स्पर्शः संख्या परिमाणं पृथक्त्वं संयोगः विभागः परत्वम् अपरत्वं गुरुत्वं द्रवत्वं स्नेहः शब्दः बुद्धिः सुखं दुःखम् इच्छा द्वेषः प्रयत्नः धर्मः अधर्मः संस्कारश्चेति।

## ११.८.१) रूपम्

चक्षुमात्रग्राह्यः विशेषगुणः रूपम्। तद्धि शुक्ल-नील-पीत-रक्त-हरित-कपिश-चित्र-भेदेन सप्तविधम्। रूपं पृथिव्यादिपदार्थत्रयवृत्ति। पृथिव्यां पाकजं रूपं अप्सु तेजसि च अपाकजम्।

## ११.८.२) रसः

रसनेन्द्रियग्राह्यः विशेषगुणः रसः। रसः षड्विधः– मधुरः अम्लः लवणः कटुः कषायः तिक्तः चेति। स पृथिवीजलवृत्तिः। पृथिव्यां पाकजाः षट् रसाः। जले अपाकजः मधुरः एव रसः विद्यते। गुडशर्करादिरसः मधुरः। चिञ्चादिरसः अम्लः। मरीचमर्चिकाशुण्ठ्यादिरसः कटुः। सैन्धवादिलवणरसः लवणः। जम्बूहरीतक्यादिरसः कषायः। निम्ब-कारवेल्लादिरसः तिक्तः।

## ११.८.३) गन्धः

घ्राणग्राह्यः विशेषगुणः गन्धः। स द्विविधः सुरभिः असुरभिश्च। गन्धः पृथिवीमात्रवृत्तिः। जलादिषु यो गन्धानुभवः भवति स पृथिव्याः एव, न तु जलादीनाम्।

## ११.८.४) स्पर्शः

त्वगिन्द्रियग्राह्यः विशेषगुणः स्पर्शः। स च त्रिविधः शीतः उष्णः अनुष्णाशीतश्चेति। स्पर्शः पृथिव्यादिचतुष्टयवृत्तिः। शीतस्पर्शः अप्सु, उष्णस्पर्शः तेजसि, अनुष्णाशीतस्पर्शः पृथिव्यां वायौ च।

## ११.८.५) संख्या

'एकत्वादिव्यवहारहेतुः सामान्यगुणः'। एकः द्वौ इत्यादीनां संख्यावाचकशब्दानां प्रयोगस्य हेतुः संख्या। सर्वेष्वपि द्रव्येषु तिष्ठति, अतः संख्या सामान्यगुणः। संख्या नित्यगता नित्या, अनित्यगता अनित्या। अर्थात् आकाशम् कालः इत्यादीनां नित्यद्रव्याणां संख्या नित्या, अनित्यानां घटादीनां संख्या च अनित्या। सा एकत्वादिपरार्धपर्यन्ता। द्वित्वादिकं सर्वत्र अनित्यमेव।

## ११.८.६) परिमाणम्

मानव्यवहारस्य असाधारणं कारणं परिमाणम्। परिमाणं नवद्रव्यवृत्तिः सामान्यगुणः। तत् चतुर्विधम् – अणुत्वं, महत्त्वं, ह्रस्वत्वं, दीर्घत्वञ्चेति। पृथिव्यादेः परमाणूनां मनसः च अनुत्वपरिमाणम्। महत्त्वपरिमाणञ्च द्विविधम् मध्यममहत्त्वं परममहत्त्वं च। अनित्यद्रव्याणां मध्यममहत्त्वं परिमाणम्, आकाशं



कालः दिक् आत्मा चेति नित्यद्रव्याणां परममहत्त्वं परिमाणम्। ह्रस्वत्वपरिमाणविशिष्टं ह्रस्वम् दीर्घत्वपरिमाणविशिष्टञ्च दीर्घम्।

## ११.८.७) पृथक्त्वम्

'इदमस्मात् पृथक्' इत्यादौ पृथक् इति शब्दस्य प्रयोगस्य असाधारणं कारणं पृथक्त्वम्। एतत् सर्वद्रव्यवृत्ति। अयं सामान्यगुणः।

## ११.८.८) संयोगः

'संयुक्तव्यवहारहेतुः संयोगः'। 'इमौ संयुक्तौ' इत्यादौ संयुक्तशब्दस्य प्रयोगस्य यः हेतुः स संयोगः। संयोगः द्विविधः कर्मजः संयोगजश्च। कर्मजोऽपि द्वेधा- अन्यतरकर्मजः उभयकर्मजश्चेति। क्रियया हस्तपुस्तकयोः संयोगः अन्यतरकर्मजः। तेन संयोगेन जातः कायपुस्तकयोः संयोगः संयोगजः। करमर्दनकाले उभयोः करयोः क्रियया करद्वयसंयोगः उभयकर्मजः। युध्यमानयोः मेषयोः संयोगः उभयकर्मजः। स च संयोगः सर्वद्रव्यवृत्तिः सामान्यगुणः। संयोगः यस्मिन्नधिकरणे वर्तते तस्मिन्नधिकरणे तस्य अत्यन्ताभावः अपि वर्तते। अतः संयोगः अव्याप्यवृत्तिः इति कथ्यते।




## ११.८.९) विभागः

विभक्तव्यवहारहेतुः विभागः। इमौ विभक्तौ इति उपलब्धेः असाधारणं कारणं विभागः। स च संयोगनाशकः सर्वद्रव्यवृत्तिः सामान्यगुणः। विभागः द्वेधा- कर्मजः विभागजश्च। कर्मजोऽपि द्वेधा - अन्यतरकर्मजः उभयकर्मजश्चेति। हस्तक्रियया हस्तपुस्तकविभागः अन्यतरकर्मजः, तेन च कायपुस्तकविभागः विभागजः। स्वक्रिययोः मल्लयोः विभागश्च उभयकर्मजः विभागः।

## ११.८.१०) परत्वम्

## ११.८.११) अपरत्वम्

परम् अपरञ्चेति शब्दयोः व्यवहारस्य असाधारणं कारणं परत्वम् अपरत्वञ्च। एतत् गुणद्वयं पृथिव्यादिचतुष्टये मनसि च विद्यते। परत्वापरत्वे द्विविधे दिक्कृते कालकृते च। दूरस्थे दिक्कृतं ज्येष्ठे च कालकृतं परत्वं भवति। समीपस्थे दिक्कृतं कनिष्ठे कालकृतम् अपरत्वं च तिष्ठति। कालकृते परत्वापरत्वे जन्ये एव वर्तेते। दिक्कृते परत्वापरत्वे मूर्ते एव वर्तेते।




## ११.८.१२) गुरुत्वम्

पृथिव्यादेः आद्यपतनस्य असमवायि कारणं गुरुत्वम्। तद्धि पृथिवीजलवृत्तिः गुणः।

## ११.८.१३) द्रवत्वम्

पृथिव्यादेः आद्यस्यन्दनस्य असमवायिकारणं द्रवत्वम्। तद्धि पृथिव्यप्तेजोवृत्तिः गुणः। द्रवत्वं द्विविधं सांसिद्धिकं नैमित्तिकञ्च। जले सांसिद्धिकं द्रवत्वम्, पृथिव्यां तेजसि च नैमित्तिकम्।

## ११.८.१४) स्नेहः

"चूर्णादिपिण्डीभावहेतुः गुणः स्नेहः"। येन गुणेन चूर्णं पिण्डीभवति स स्नेहः। स च जलमात्रवृत्तिः।

## ११.८.१५) शब्दः

'श्रोत्रग्राह्यः गुणः शब्दः'। स च आकाशस्य विशेषगुणः। शब्दः द्विविधः ध्वन्यात्मकः वर्णात्मकश्च। आद्यः भेर्यादौ, द्वितीयः संस्कृतभाषादिस्वरूपः। उत्पत्तिभेदेन च ध्वन्यात्मकः शब्दः त्रिविधः संयोगजः विभागजः शब्दजश्चेति। भेरीदण्डसंयोगेन जातः शब्दः संयोगजः। अङ्गुलितन्त्रीविभागेन जातः विभागजः। वंशे पाट्यमाने जायमानः शब्दः विभागजः। भेर्यादिदेशम् आरभ्य श्रोत्रपर्यन्तं द्वितीयादिशब्दाः शब्दजाः। वैशेषिकमते शब्दः अनित्यः। एकः उत्पन्नः शब्दः अपरं शब्दम् उत्पाद्य विनश्यति। भेरीदेशे जातः शब्दः वीचीतरङ्गन्यायेन कदम्बकोरकन्यायेन वा शब्दान्तरम् जनयति। स च






शब्दः शब्दान्तरम् इति क्रमेण श्रोत्रदेशे जातः अन्त्यः शब्दः श्रोत्रेण गृह्यते। तेन च शब्दस्य प्रत्यक्षं भवति। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्।

## ११.८.१६) बुद्धिः

सर्वेषां शब्दानां प्रयोगः येन कारणेन भवति तत् कारणं बुद्धिः ज्ञानम्। येन वस्तुनः अर्थप्रकाशः भवति सा बुद्धिः इति। एषा बुद्धिः हि आत्मनः विशेषगुणः। बुद्ध्यादयः संस्कारान्ताः आत्मनः विशेषाः गुणाः। बुद्धिः जीवात्मनः अनित्या तथा परमात्मनः नित्या। बुद्धिः द्विविधा - स्मृतिः अनुभवश्च। बाह्येन्द्रियेण अजन्या भावनाख्यसंस्कारात् जाता बुद्धिः सा स्मृतिः। स्मृतिभिन्ना बुद्धिः अनुभवः। यथार्थायथार्थभेदेन स अनुभवः अपि द्विविधः। तद्वति तत्प्रकारकः अनुभवः यथार्थः। अर्थात् यस्य यः प्रकारः अस्ति तस्मिन् स एव प्रकारः गृहीतः चेत् तज्ज्ञानं यथार्थम्। यथा घटस्य घटत्वं प्रकारः। तस्मिन् घटे घटत्वं प्रकारत्वेन गृहीतं चेत् स यथार्थः अनुभवः। तदभाववति तत्प्रकारकः अनुभवः अयथार्थः। अर्थात् यस्य यः प्रकारः नास्ति तस्मिन् स एव प्रकारः गृहीतः चेत् तज्ज्ञानम् अयथार्थम्। यथा रज्जौ सर्पत्वं नैव भवति। परन्तु रज्जौ सर्पत्वं प्रकारत्वेन गृहीतं चेद् स च अनुभवः अयथार्थः भवति। यथार्थः अनुभवः एव 'प्रमा' इत्युच्यते। अयथार्थानुभवः अप्रमा इत्याख्यायते। वैशेषिकदर्शने प्रत्यक्षम् अनुमितिश्चेति प्रमाद्वयं स्वीकृतम्। अत्र उपमित्यादीनां पृथक् प्रमात्वं न स्वीकृतम्, अनुमितिप्रमायामेव अन्तर्गत्वात्।





## ११.८.१७) सुखम्

प्रीतिः सुखम्। सर्वेषां जीवात्मनाम् अनुकूलत्वेन वेदनीयम्। तच्च जीवात्मनः विशेषः गुणः। या इच्छा इतरेच्छायाः अधीना नास्ति तस्याः विषयः सुखं भवति। मिष्टान्नम् इच्छति चेत् क्रयणाय धनमिच्छति। अत्र मिष्टान्नेच्छाधीना धनेच्छा।

## ११.८.१८) दुःखम्

पीडा दुःखम्। सर्वेषां जीवात्मनां प्रतिकूलत्वेन वेदनीयम्। एतदपि जीवात्मनां विशेषगुणः। यो द्वेषः इतरद्वेशस्य अधीनः नास्ति, तस्य विषयः दुःखम् भवति।

## ११.८.१९) इच्छा

इच्छा कामः। सा जीवात्मनां तथा परमात्मानः विशेषगुणः। जीवस्य अनित्या ईशस्य नित्या।

## ११.८.२०) द्वेषः

क्रोधः द्वेषः। स च जीवात्मनां विशेषगुणः।

## ११.८.२१) प्रयत्नः

प्रयत्नः कृतिः। स आत्मनः विशेषगुणः। प्रयत्नस्य त्रयः प्रकाराः - प्रवृत्तिः निवृत्तिः जीवनयोनिश्चेति। बुद्ध्यादयः प्रयत्नान्ताः षट् गुणाः मानसप्रत्यक्षाः।

## ११.८.२२) धर्मः

## ११.८.२३) अधर्मः

सुखदुःखयोः असाधारणकारणे यथाक्रमं धर्मः अधर्मश्च। सुखहेतुः धर्मः, दुःखहेतुश्च अधर्मः। वेदतदनुकूलशास्त्रविहितकर्मजन्यः धर्मः, वेदादिनिषिद्धकर्मजन्यश्च अधर्मः। धर्माधर्मौ अनुमानगम्यौ (आगमगम्यौ वा) न तु प्रत्यक्षौ। यः भोगार्थं शरीरादिजनकः आत्मविशेषगुणः स धर्मः अधर्मश्चेति।

## ११.८.२४) संस्कारः

संस्कारव्यवहारासाधारणं कारणं संस्कारः। येन कारणेन 'संस्कारः' इति शब्दस्य प्रयोगः भवति तत् कारणं संस्कारः इति गुणः। स त्रिविधः वेगः भावना स्थितिस्थापकश्च।

**वेगः** - वेगः क्रियाहेतुः पृथिव्यादिचतुष्टये तथा मनसि विद्यते। अर्थात् मूर्तद्रव्यवृत्तिः।

**भावना** - अपेक्षाबुद्ध्या यदा अनुभवो भवति सः अनुभवः आत्मनि संस्कारं जनयति। स संस्कारः भावना इति कथ्यते। इयमेव भावना अस्ति चेत् स्मृतिः भवति नान्यथा। भावनाख्यः संस्कारः अनुभवजन्यः स्मृतिहेतुः आत्ममात्रवृत्तिः। अनुभवजन्यः यः भावनाख्यः संस्कारः सः उद्बोधकसहकारेण उद्बुद्धः सन् स्मृतिं जनयति। सहकारिणस्तु संस्कारस्य सदृशदर्शनादयः। तथा हि पूर्वं देवदत्तेन सह



साक्षात्कारः जातः। अयं देवदत्तविषयकः अनुभवः। अयम् अनुभवः अपेक्षाबुद्धिवशात् आत्मनि संस्कारं जनयति। ततः परं जातु देवदत्तसदृशस्य कस्यचित् पुरुषस्य दर्शनात् देवदत्तविषयिणी स्मृतिः जायते। देवदत्तसदृशपुरुषस्य दर्शनम् अत्र उद्बोधकम्।

**स्थितिस्थापकः-** अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः। स च कटादिपृथिवीवृत्तिः। वृक्षशाखादि आकृष्य मुक्तं क्रियते चेत् तत् पुनः पूर्वावस्थां प्रतिगच्छति स्थितिस्थापकगुणवशात्।



## पाठगतप्रश्नाः

५२. गुणलक्षणं किम्।
५३. वैशेषिकमते गुणाः कतिविधाः।
५४. रसः कतिविधः।
५५. स्पर्शः कतिविधः।
५६. गन्धः केन इन्द्रियेण गृह्यते।
५७. परिमाणं कतिविधम्।
५८. संयोगः कतिविधः।
५९. उभयकर्मजस्य विभागस्य एकम् उदाहरणं देयम्।
६०. द्रवत्वं कतिविधम्।
६१. स्नेहः कस्य द्रव्यस्य गुणः।
६२. शब्दः केन न्यायेन शब्दान्तरम् आरभते।
६३. बुद्धिः कतिविधा।
६४. स्मृतिः का।
६५. अनुभवः कतिविधः।
६६. वैशेषिकदर्शने प्रमा कतिविधा।
६७. अनुभवः कः।
६८. प्रयत्नः कतिविधः।
६९. संस्कारः कतिविधः।
७०. वेगाख्यः संस्कारः कुत्र तिष्ठति।

## ११.९) कर्माणि

संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म। संयोगभिन्नं संयोगस्य असमवायिकारणं कर्म कर्मत्वजातिमत् वा कर्म। कर्म द्रव्यमात्रवृत्ति। तत् पञ्चविधम् – उत्क्षेपणम् अपक्षेपणम् आकुञ्चनं प्रसारणं गमनञ्चेति। अत्र एतत्पञ्चविधं कर्म, तदेव क्रिया, न तु कर्तुरीप्सिततमं कर्म। न वा वेदान्तोक्तं नित्यनैमित्तिकादि कर्म।

१. **उत्क्षेपणम्** – द्रव्यस्य ऊर्द्ध्वदेशेन संयोगस्य कारणं यत् कर्म तत् उत्क्षेपणम्।

२. **अपक्षेपणम्** – द्रव्यस्य अधोदेशेन संयोगस्य कारणं यत् कर्म तत् अपक्षेपणम्।

३. **आकुञ्चनम्** – द्रव्यस्य सन्निकृष्टसंयोगस्य कारणं यत् कर्म तत् आकुञ्चनम्।

४. **प्रसारण्म्** –द्रव्यस्य विप्रकृष्टसंयोगस्य कारणं यत् कर्म तत् प्रसारणम्।

५. **गमनम्** –पूर्वोक्तम् उत्क्षेपणादिकं नियतदिग्-देशसंयोगजनकं कर्म। गमनन्तु अनियतदिग्-देशसंयोगजनकं कर्म। अर्थात् उत्क्षेपणादिकं कर्म नियमेन नियतासु ऊर्द्ध्वादिषु दिक्षु स्थितेन देशेन सह द्रव्यस्य संयोगे हेतुः भवति। किन्तु गमने तादृशः नियमः नास्ति। गमनम् अनिर्दिष्टायां दिशि स्थितेन देशेन सह द्रव्यस्य संयोगे हेतुः भवति। अतः भ्रमणादिकम् अन्यत् सर्वं कर्म गमनम्।

## ११.१०) सामान्यम्

'नित्यम् एकम् अनेकानुगतं सामान्यम्'। 'अयं गौः' 'अयं गौः' इति अनुगतप्रत्ययस्य कारणं गोत्वादिधर्मः सामान्यमिति उच्यते। सामान्यं छिन्नासु अपि अच्छिन्नम्। अतः तत् नित्यमिति उच्यते। तच्च भिन्नासु अपि व्यक्तिषु अभिन्नम् एकम्। एकाधिकेषु युगपत् वर्तते तद् अनेकानुगतम्। अनेकसमवेतमित्यर्थः। तच्च सामान्यं स्वाश्रये समवायेन सम्बन्धेन वर्तते। सामान्यं परापरभेदात् द्विविधम्। ययोः सामान्ययोः क्वचिदपि सामानाधिकण्यं भवति तयोरेव परापरविचारः प्रसरति। परम् अधिकदेशवृत्ति यथा सत्ता। अपरं न्यूनदेशवृत्ति यथा द्रव्यत्वादि। अधिकसंख्याकेषु वर्तमानम् अधिकदेशवृत्ति। केचिच्च परापरमिति तृतीयप्रकारं सामान्यं कथयन्ति। यथा द्रव्यत्वादि पृथिवीत्वादेः अधिकदेशवृत्ति, सत्तायाः न्यूनदेशवृत्ति च। अतः एकतः परम् अपरतः अपरम् इति। सामान्ये सामान्यं न तिष्ठति, अनवस्थाप्रसङ्गात्। सामान्यमेव जातिः इत्यपि आख्यायते। द्रव्यगुणकर्माणि त्रीणि व्यक्तिरित्याख्यायते। जातिः व्यक्तौ समवायेन वर्तते।

### ११.१०.१) जातिबाधकाः

बाधकस्य अनुपस्थितौ सति अनुगतः धर्मः जातिः भवति। यत्र तु बाधकः विद्यमानः तत्र अनुगतः धर्मः उपाधिः स्यात्। यथा अभावत्वम्। तथा हि जातिबाधकाः षट्– व्यक्तेरभेदः तुल्यत्वं सङ्करः अनवस्था रूपहानिः असम्बन्धश्च। तथाच कारिका-

व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः।



रूपहानिरसंबन्धो जातिबाधकसंग्रहः।। (किरणावली, उदयनाचार्यः)

## ११.११) विशेषाः

''नित्यद्रव्यवृत्तयः व्यावर्तकाः विशेषाः''। व्यावर्तकाः भेदकाः विशेषाः। सावयवद्रव्येभ्यः सावयवद्रव्याणि अवयवादिभेदेन भिद्यन्ते। यथा घटः घटान्तराद् भिद्यते तदवयवकपालभेदात्। किन्तु निरवयवेभ्यः नित्येभ्यः द्रव्येभ्यः निरवयवं नित्यं द्रव्यं कथं भिद्यते। तत्रोच्यते विशेषपदार्थभेदेन निरवयवं नित्यं द्रव्यं नित्यद्रव्यान्तराद् भिद्यते। विशेषाः नित्यद्रव्यवृत्तयः। पृथिव्यादिद्रव्यचतुष्टयस्य परमाणवः नित्याः। आकाशादिपञ्चकञ्च नित्यम्। अतः पृथिव्यादीनां परमाणुषु आकाशादिपञ्चद्रव्येषु विशेषाः वर्तन्ते। तेन च विशेषाः अनन्ताः। स च विशेषपदार्थः भेदबुद्धिमात्रहेतुः वैशेषिकदर्शनस्य विशेषः। प्रलयकाले पार्थिवाः जलीयाः तैजसाः वायवीयाः परमाणवः पृथिवीत्वादिभेदेन भिद्यन्ते। किन्तु समानजातीयानां पार्थिवादिपरमाणूनां परस्पपराद् भेदकः न कश्चित् धर्मः तिष्ठति। तस्मात् तद्भेदज्ञानार्थं पार्थिवादिपरमाणुषु व्यावर्तकधर्मः विशेषः स्वीक्रियते। शब्दसमवायिकारणतावच्छेदकतया च आकाशे विशेषः स्वीक्रियते। एवञ्च प्रलयकाले गुणानां लोपे दिक्कालयोः भेदज्ञानार्थं तयोरपि विशेषः स्वीकृतः। मुक्तावस्थायाम् आत्मनां भेदज्ञानार्थञ्च आत्मस्वपि विशेषपदार्थः अङ्गीकृतः।

## ११.१२) समवायः

नित्यसम्बन्धः समवायः। यः सम्बन्धः नित्यः स समवायः। स च सम्बन्धः अयुतसिद्धयोः पदार्थयोः विद्यते। यौ मिश्रितौ चेत् सिद्धौ तौ अयुतसिद्धौ। यथा तन्तुपटौ मिलितौ चेत् द्वौ अपि सिद्धौ। यदि न मिलितौ तर्हि तन्तुः सिद्धः, पटस्तु ध्वंसते इति। तदुक्तं "ययोः द्वयोः मध्ये एकम् अविनश्यद् अपराश्रितम् एव अवतिष्ठते तौ अयुतसिद्धौ" इति। अमिश्रणार्थकस्य युधातोः क्तप्रत्यये निष्पन्नः युतशब्दः असम्बद्धस्य वाचकः। युतसिद्धः, असम्बद्धः अपि सिद्धः। असम्बद्धसिद्धः यः न भवति स अयुतसिद्धः। अयुतसिद्धौ च अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती विशेषनित्यद्रव्ये चेते पञ्च। अतः एतयोः अयुतसिद्धयोः सम्बन्धः समवायः। एतेन च समवायस्य आश्रयः ज्ञायते। समवायः एकः अपि उपाधिभेदात् अनेकप्रकारः। यः समवायेन विद्यते स समवेतः कथ्यते। यस्मिन् समवायेन विद्यते स समवायी उदीर्यते।

## ११.१३) संयोगसमवाययोः भेदः

| क्र. | संयोगः | समवायः |
|---|---|---|
| १. | संयोगः युतसिद्धयोरेव भवति। | समवायः अयुतसिद्धयोरेव भवति |
| २. | संयोगः गुणविशेषः | समवायः पदार्थविशेषः, न गुणः |
| ३. | संयोगः अनित्यः बहुप्रकारश्च | समवायः नित्यः एकश्च |
| ४. | संयोगः सर्वदा वृत्तिनियामकः न भवति। | समवायः सर्वदा वृत्तिनियामकः भवति। |



| | | |
|---|---|---|
| | संयोगस्य सम्बन्धिद्वयं सर्वदा आधाराधेयरूपेण न प्रतीयते। | समवायस्य सम्बन्धिद्वयं सर्वदा आधाराधेयरूपेण प्रतीयते। |
| ५. | संयोगः सर्वदा द्रव्ययोर्मध्ये भवति। | समवायः सर्वदा द्रव्ययोः मध्ये न भवति। यथा द्रव्यगुणयोः घटघटरूपयोः सम्बन्धः। |
| ६. | एकं द्रव्यम् एकाधिकेषु द्रव्येषु एककालं संयोगेन भवितुमर्हति। अत्र प्रतिद्रव्यं संयोगः भिन्नः भवति। | समवायस्य एकं प्रतियोगि एकाधिकेषु अनुयोगिषु एककालं समवायेन भवितुमर्हति। अत्र एकस्य बहुभिः सह समवायः एक एव। |
| ७. | संयोगः अव्याप्यवृत्तिः | समवायः व्याप्यवृत्तिः |

## ११.१४) अभावः

वैशेषिकदर्शने पदार्थः द्विविधः भावपदार्थः अभावपदार्थश्च। भावाः द्रव्यादयः षट्। अभावः तावत् 'घटः नास्ति' 'पटः नास्ति' इत्यादिनिषेधज्ञानस्य विषयः। अभावस्य निर्दिष्टं किमपि लक्षणं नास्ति। अभावत्वमिति उपाधिः यस्मिन् वर्तते स अभावः, भावभिन्नः वा अभावः इति वक्तुं शक्यते। अभावः स्वरूपसम्बन्धेन तस्य अधिकरणे तिष्ठति। यस्य अभावः स प्रतियोगी कथ्यते। यथा 'भूतले घटाभावः अस्ति' इत्यत्र भूतले घटाभावः स्वरूपेण तिष्ठति। घटश्च घटाभावस्य प्रतियोगी।

अभावः द्विविधः संसर्गाभावः अन्योन्याभावश्च। संसर्गाभावश्च पुनः त्रिविधः – प्रागभावः ध्वंसाभावः अत्यन्ताभावश्च। अतः साकल्येन अभावाः चत्वारः।




१. **प्रागभावः** – 'अनादिः सान्तः प्रागभावः'। कार्यस्य उत्पत्तेः प्राक् यः अभावः विद्यते स प्रागभावः। यथा कस्यचित् घटस्य उत्पत्तेः पूर्वं तस्य घटस्य अभावः प्रागभावः। तस्य च अभावस्य उत्पत्तिः नास्ति किन्तु अन्तः अस्ति। घटोत्पत्तिपूर्वम् 'इह कपाले घटो भविष्यति' इति या प्रतीतिर्जायते तया प्रतीत्या विषयीक्रियमाणः अभावः प्रागभावो भवति। अयं प्रतियोगिनः जनकः।



२. **ध्वंसाभावः** – "सादिः अनन्तः प्रध्वंसः"। कार्यस्य विनाशात् परं तस्य कार्यस्य यः अभावः तदधिकरणे प्रतीयते स ध्वंसाभावः। यथा दण्डेन घटस्य नाशात् परं तस्य घटस्य अभावः ध्वंसाभावः। ध्वंसाभावस्य उत्पत्तिः अस्ति किन्तु अन्तः नास्ति। अयमभावः 'घटो ध्वस्तः' इति प्रतीत्या विषयीक्रियते। अयमभावः प्रतियोगिजन्यः।

३. **अत्यन्ताभावः** – ''त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकः अत्यन्त्याभावः''। यः अभावः त्रैकालिकः अर्थात् नित्यः सः अत्यन्ताभावः। अतीतं वर्तमानं भविष्यत् चेति कालत्रयम्। त्रिषु कालेषु विद्यमानः अभावः अत्यन्ताभावः। यथा 'वायौ रूपाभावः' इति। अपिच यत्र कुत्रापि भूतलादौ घटादेः अवर्तमानत्वदशायाम् 'इह भूतले घटो नास्ति' इत्याकारिका या प्रतीतिर्जायते तया प्रतीत्या विषयीक्रियमाणोऽभावः अत्यन्ताभावः कथ्यते।

४. **अन्योन्याभावः** – "तादात्म्यसम्बन्धावच्छिन्न-प्रतियोगिताकः अन्योन्याभावः"। तादात्म्यसम्बन्धेन पदार्थः नास्ति चेत् तस्य अभावस्य प्रतियोगिनि विद्यमाना प्रतियोगिता तादात्म्यसम्बन्धेन अवच्छिन्ना भवति। तादात्म्यसम्बन्धः अभेदसम्बन्धः। 'घटः पटः न भवति' इत्यत्र घटे पटः अभेदसम्बन्धेन नास्ति। अतः अयम् अन्योन्याभावः। वस्तुतः कस्यापि पदार्थस्य यः निषेधः (अभावः) सः अन्योन्याभावः। अर्थात् अभावस्य प्रतियोगिता यदि तादात्म्यसम्बन्धावच्छिन्ना भवति तदा तादृशः अभावः अन्योन्याभावः उच्यते। 'घटः पटः न भवति' इत्यत्र घटे तादात्म्येन पटः निषिध्यते। तेन पटाभावीया प्रतियोगिता तादात्म्यसम्बन्धावच्छिन्ना भवति। अतः अयम् अन्योन्याभावः। एष अन्योन्याभावः अपि नित्यः। सामान्यतः घटो न इति रूपेण प्रकट्यते। अन्योन्याभावः भेद इत्यपि समाख्यायते।



## पाठगतप्रश्नाः

७१. कर्मलक्षणं किम्।

७२. कर्म कतिविधम्।

७३. गमनं कीदृशं कर्म।

७४. अपक्षेपणं किम्।

७५. प्रसारणं किम्।

७६. किं तावत् सामान्यलक्षणम्।

७७. सामान्यं केन सम्बन्धेन वर्तते।

७८. सामान्यं कतिविधम्।

७९. सत्ता कीदृशं सामान्यम्।

८०. सामान्ये कथं सामान्यं न स्वीक्रियते।

८१. जातिबाधकाः कतिविधाः।



८२. जातिबाधकानां नामानि लेख्यानि।

८३. आकाशत्वं कथं न जातिः।

८४. भूतत्वं कथं न जातिः।

८५. विशषे विशेषत्वमिति जातिस्वीकारे कः दोषः।

८६. समवाये कथं समवायत्वं जातिः न स्वीक्रियते।

८७. विशेषपदार्थः कः।

८८. विशेषाः कुत्र तिष्ठन्ति।

८९. पार्थिवादिषु परमाणुषु कथं विशेषाः स्वीकृताः।

९०. आकाशे कथं विशेषः स्वीकृतः।

९१. आत्मसु कथं विशेषाः स्वीकृताः।

९२. समवायः कः।

९३. अयुतसिद्धशब्दस्य अर्थः कः

९४. अयुतसिद्धौ पदार्थौ कौ।

९५. संसोगसमवाययोः भेदद्वयं लेख्यम्।

९६. प्रतियोगी कः।

९७. अभावः कतिविधः।

९८. प्रागभावः कः।

९९. ध्वंसाभावः कः।

१००. 'वायौ रूपाभावः' इत्यत्र कीदृशः अभावः।

१०१. 'घटः पटः न भवति' इत्यत्र कीदृशः अभावः।

१०२. अन्योन्याभावः कः।

## ११.१५) प्रमाणतत्त्वम्

वैशेषिकदर्शने प्रमाणं द्विविधम् – प्रत्यक्षम् अनुमानञ्च। वैशेषिकमते 'सर्वेषु पदार्थेषु सन्निकर्षाद् यत् ज्ञानम् उत्पद्यते तत् प्रत्यक्षम्' इति। अक्षम् अक्षं प्रतीत्य यत् ज्ञानं जायते तत् प्रत्यक्षं वा। अक्षाणि इन्द्रियाणि षट् चक्षुः घ्राणं रसनं त्वक् श्रोत्रं मनश्चेति। प्रत्यक्षप्रमाणञ्चात्र इन्द्रियम्। प्रत्यक्षं द्विविधं सर्वज्ञीयासर्वज्ञीयभेदेन। असर्वज्ञीयञ्च प्रत्यक्षं पुनः द्विविधम्- सविकल्पकं निर्विकल्पकञ्च।

लिङ्गदर्शनात् सञ्जायमानं ज्ञानं लैङ्गिकम्। तद्धि लैङ्गिकं ज्ञानम् अनुमितिः। व्याप्तिविशिष्टः पक्षधर्मः लिङ्गम्। लिङ्गं च अनुमापकम्। तदुक्तं भाष्ये –

यदनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते।

तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥ इति।



अत्र 'यद्' पदेन हेतुः लिङ्गं वा बोध्यम्, तत्पदेन च साध्यम्। वैशेषिकमते लिङ्गदर्शनं हि अनुमानप्रमाणम्। तच्च अनुमानं द्विविधम् दृष्टं सामान्यतोदृष्टञ्च। प्रसिद्धसाध्ययोः अत्यन्तजात्यभेदे दृष्टम् अनुमानम्। यथा गवि सास्नामात्रम् उपलभ्य देशान्तरे सास्नामात्रदर्शनात् गवि प्रतिपत्तिः। प्रसिद्धसाध्ययोः अत्यन्तजातिभेदे सामान्यतोदृष्टम् अनुमानम्। यथा कर्षकवणिग्राजपुरुषाणां प्रवृत्तेः फलवत्त्वम् उपलभ्य दृष्टं प्रयोजनम् अनुद्दिश्य प्रवर्तमानानां वर्णश्रमिणामपि फलानुमानम्।

अस्मिन् मते शब्दस्य तथा उपमानस्य पृथक् प्रामाण्यं नास्ति तयोः अनुमाने एव अन्तर्भावसम्भवात्। उक्तञ्च भाषापरिच्छेदे –

शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते।

अनुमानगतार्थत्वादिति वैशेषिकं मतम्॥ इति।

## ११.१६) परमाणुवादः (भूतचतुष्टयस्य उत्पत्तिनाशक्रमः)

वैशेषिकमते पृथिवी आपः तेजः वायुश्चेति चतुर्णां द्रव्याणां परमाणवः नित्याः। तैः परमाणुभिः कार्यरूपाः स्थूलाः पृथिव्यादयः उत्पद्यन्ते। सृष्टेः प्राक् तेषां परमाणवः निष्क्रियाः तिष्ठन्ति। ते चातीन्द्रियाः नित्याः अणुपरिमाणयुक्ताः। ईश्वरस्य ज्ञानात् इच्छा, इच्छातः प्रयत्नः, प्रयत्नात् निष्क्रियेषु परमाणुषु क्रिया जायते। ततश्च परमाणुद्वयस्य संयोगे अनित्यं कार्यरूपम् अणुपरिमाणं द्व्यणुकम् उत्पद्यते। द्व्यणुकत्रयसंयोगे त्र्यणुकम्, चतुर्भिः त्र्यणुकैश्च चतुरणुकं भवति। एवं क्रमेण च स्थूलात् स्थूलतरं पृथिव्यादिकम् उत्पद्यते। तेन च महती पृथिवी महत्यः आपः महत् तेजः महान् वायुश्च जायते। त्र्यणुकादिकं सर्वं महत्परिमाणयुक्तम्। पुनश्च ईश्वरेच्छावशात् परमाणुषु क्रिया जायते। तया क्रियया च परमाणुद्वयसंयोगनाशात् द्व्यणुकनाशः भवति। तेन च त्र्यणुकादिनाशक्रमेण महापृथिव्यादीनां नाशः भवति। प्राचीनमते असमवायिकारणनाशात् (परमाणुद्वयसंयोगनाशात्) द्व्यणुकनाशः तथा समवायिकारणनाशात् (द्व्यणुकद्वयनाशात्) च त्र्यणुकनाशः भवतः। नवीनमते तु सर्वत्र एव असमवायिकारणस्य नाशात् द्व्यणुकादिकार्याणां नाशः इति।

१. अतीन्द्रियाः नित्याः निष्क्रियाः परमाणवः

२. ईश्वरेच्छया परमाणुषु क्रिया

३. परमाणुद्वयस्य संयोगात् कार्यरूपस्य अनित्यस्य द्व्यणुकस्य उत्पत्तिः

४. द्व्यणुकत्रयस्य संयोगात् त्र्यणुकोत्पत्तिः

५. त्र्यणुकचतुष्टयस्य संयोगात् चतुरणुकोत्पत्तिः

६. एवंक्रमेण महापृथिव्यादीनाम् उत्पत्तिः



## पाठगतप्रश्नाः

१०३. वैशेषिकमते प्रमाणं कतिविधम्।

१०४. वैशेषिकमते प्रत्यक्षलक्षणं किम्।

१०५. इन्द्रियाणि कानि।

१०६. लैङ्गिकं ज्ञानं किम्।

१०७. वैशेषिकमते अनुमानप्रमाणं किम्।

१०८. वैशेषिकमते शब्दस्य उपमानस्य च कुत्र अन्तर्भावः।

१०९. सृष्टेः प्राक् निष्क्रियेषु परमाणुषु कथं क्रिया जायते।

११०. द्व्यणुकं किम्।

१११. त्र्यणुकस्य परिमाणं किम्।

११२. एकस्मिन् चतुरणुके कति परमाणवः तिष्ठन्ति।

११३. द्व्यणुकनाशः कथं भवति।



## पाठसारः

कणादप्रणीतं वैशेषिकसूत्रं वैशेषिकदर्शनस्य प्रामाणिकः ग्रन्थः। विशेषपदार्थस्य स्वीकारात् अस्य वैशेषिकमिति अभिधा। वैशेषिकमते पदार्थाः सप्त द्रव्यादयः। नवद्रव्येषु आत्मा अन्यतमः। स च आत्मा द्विविधः जीवात्मा परमात्मा च। परमात्मा सर्वज्ञः ईश्वरः। वैशेषिकदर्शने प्रमाणद्वयं स्वीकृतम्- प्रत्यक्षम् अनुमानञ्च। उपमानशब्दयोः ग्रहणमत्र अनुमाने एव। वैशेषिकदर्शनं न्यायदर्शनस्य समानतन्त्रम्। असत्कार्यवादः मोक्षस्वरूपम् इत्यादिषु सिद्धान्तेषु तयोः दर्शनयोः सादृश्यं दृश्यते। परमाणुवादः वैशेषिकसम्प्रदायस्य अन्यतमः विशेषः सिद्धान्तः।



## पाठान्तप्रश्नाः

१. वैशिषिकदर्शनं कथं न्यायस्य समानतन्त्रम्।

२. वैशेषिकदर्शनस्य तथा नामकरणे कस्य मुख्या भूमिका।

३. वैशेषिकदर्शनस्य सूत्रग्रन्थम् परिचाययत।

४. वैशेषिकमते पदार्थान् उद्दिशत।

५. वैशेषिकमते द्रव्यं परिचाययत।

६. वैशेषिकमते पृथिवीम् परिचाययत।



७. वैशेषिकमते अपः परिचाययत।

८. वैशेषिकमते तेजः परिचाययत।

९. वैशेषिकमते वायुं परिचाययत।

१०. वैशेषिकमते आकाशम् परिचाययत।

११. वैशेषिकमते दिशम् परिचाययत।

१२. वैशेषिकमते आत्मानं परिचाययत।

१३. वैशेषिकमते मनः परिचाययत।

१४. वैशेषिकमते पृथिवीम् परिचाययत।

१५. वैशेषिकमते परिमाणं परिचाययत।

१६. वैशेषिकमते संयोगो विशदनीयः।

१७. वैशेषिकमते शब्दं परिचाययत।

१८. वैशेषिकमते बुद्धिः प्रतिपाद्या।

१९. वैशेषिकमते संस्कारान् परिचाययत।

२०. वैशेषिकमते कर्माणि प्रतिपादयत।

२१. वैशेषिकमते सामान्यं विशदीकर्तव्यम्।

२२. विशेषान् अवलम्ब्य प्रबन्धं लिखत।

२३. वैशेषिकमते समवायस्य परिचयः देयः।

२४. संयोगसमवाययोः भेदः विशदनीयः।

२५. वैशेषिकमते अभावः प्रतिपादनीयः।

२६. वैशेषिकमते स्वीकृतानि प्रमाणानि परिचाययत।

२७. वैशेषिकमते सृष्टिप्रलयक्रमम् उपपादयत।



## पाठगतप्रश्नानामुत्तराणि

१. वैशेषिकदर्शनस्य प्रवक्ता महर्षिः कणादः।

२. विशेषपदार्थः परमाणुवादश्च वैशेषिकदर्शनस्य विशेषत्वम्।

३. महर्षेः कणादस्य अपरं नामद्वयं कणभूक्, कणभक्षश्च इति।

४. वैशेषिकदर्शनं न्यायदर्शनस्य समानतन्त्रम्।

५. उभौ एव असत्कार्यवादिनौ इति न्यायवैशेषिकदर्शनयोः एकं सादृश्यम्।

६. न्यायदर्शने चत्वारि प्रमाणानि वैशेषिकदर्शने द्वे प्रमाणे इति न्यायवैशेषिकदर्शनयोः एकं वैशादृश्यम्।



७. अस्मिन् दर्शने विशेषपदार्थस्य स्वीकारात् वैशेषिकमिति आख्या भवति।

८. वैशेषिकसूत्रस्य उद्भवः जातः इशवीयपूर्वषष्ठशतके।

९. वैशेषिकसूत्रे दश अध्यायाः सन्ति।

१०. तत्त्वज्ञानेन मुक्तिः वैशेषिकशास्त्रस्य मूलम् उद्देश्यम्।

११. प्रशस्तपादेन रचितः ग्रन्थः पदार्थधर्मसंग्रहः।

१२. व्योमवती व्योमशिवाचार्यस्य रचना।

१३. किरणावली उदयनाचार्येण विरचिता।

१४. श्रीधरभट्टः न्यायकन्दलीं प्रणीतवान्।

१५. उपस्कारग्रन्थः शङ्करमिश्रेण विरचितः।

१६. पद्मनाभमिश्रः सेतुटीकायाः टीकाकारः।

१७. विश्वनाथाचार्येण रचितः ग्रन्थः भाषापरिच्छेदः।

१८. अन्नंभट्टेन प्रणीतः ग्रन्थः तर्कसंग्रहः।

१९. बल्लभाचार्यस्य रचना न्यायलीलावती।

२०. केशवमिश्रः तर्कभाषाग्रन्थस्य प्रणेता।

२१. वैशेषिकदर्शने सप्त पदार्थाः स्वीकृताः।

२२. द्रव्यं गुणः कर्म सामान्यं विशेषः समवायः अभावश्चेति वैशेषिकदर्शनस्य सप्त पदार्थाः।

२३. 'क्रियागुणवत् समवायिकारणं द्रव्यम्' इति द्रव्यलक्षणम्।

२४. भावकार्यमात्रस्य समवायिकारणं द्रव्यम्।

२५. नव द्रव्याणि। तानि च पृथिवी, आपः, तेजः, वायुः, आकाशं, कालः, दिक्, आत्मा, मनश्चेति।

२६. पृथिव्याः विशेषः गुणः गन्धः।

२७. पाकशब्दस्य अर्थः तेजःसंयोगः।

२८. पृथिव्याः सामान्यगुणाः संख्यादयः दश।

२९. अप्सु शीतस्पर्शः विद्यमानः।

३०. तेजसि उष्णस्पर्शः विद्यमानः।

३१. तेजः चतुर्विधम्।

३२. आकरजतेजसः उदाहरणं- सुवर्णम्।

३३. चक्षुः तैजसम् इन्द्रियम्।

३४. अरूपस्पर्शवान् वायुः।

३५. शरीरान्तःसञ्चारी वायुः प्राणः।

३६. उपाधिभेदात् वायुः पञ्चविधः।

३७. परमाणुरूपः वायुः नित्यः।



३८. आकाशस्य विशेषगुणः शब्दः।

३९. आकाशं नित्यम् एकं विभु च।

४०. शब्दस्य आश्रयत्वेन परिशेषानुमानात् आकाशस्य सिद्धिः भवति।

४१. कालः जगताम् आधारः।

४२. संख्या परिमाणं पृथक्त्वं संयोगः विभागश्च कालस्य सामान्यगुणाः।

४३. कालः कार्यमात्रस्य निमित्तकारणं भवति।

४४. दिक् विभुपरिमाणम्।

४५. ज्ञानाधिकरणम् आत्मा।

४६. आत्मा द्विविधः जीवात्मा परमात्मा च।

४७. नित्यं ज्ञानं परमात्मनः गुणः।

४८. बुद्धिः सुखं दुःखम् इच्छा द्वेषः प्रयत्नः धर्मः अधर्मः संस्कारश्च जीवात्मनः विशेषाः गुणाः।

४९. सुखाद्युपलब्धिसाधनम् इन्द्रियं मनः।

५०. मनः अणुपरिमाणम्।

५१. सुषुप्तिकाले मनः पूरीतन्नाडीं प्रविशति।

५२. द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः।

५३. वैशेषिकमते चतुर्विंशतिः गुणाः।

५४. रसः षड्विधः। मधुरम् अम्लं लवणं कटुः कषायं तिक्तञ्च।

५५. स्पर्शः त्रिविधः। शीतः उष्णः अनुष्णाशीतश्च।

५६. गन्धः घ्राणेन्द्रियेण गृह्यते।

५७. परिमाणं चतुर्विधम् अणु महत् ह्रस्वं दीर्घञ्च।

५८. संयोगः त्रिविधः- अन्यतरकर्मजः उभयकर्मजः संयोगजश्च।

५९. सक्रिययोः मल्लयोः विभागः उभयकर्मजस्य विभागस्य उदाहरणम्।

६०. द्रवत्वं द्विविधम् सांसिद्धिकं नैमित्तिकञ्च।

६१. स्नेहः जलस्य गुणः।

६२. शब्दः वीचीतरङ्गन्यायेन कदम्बकोरकन्यायेन वा शब्दान्तरम् आरभते।

६३. बुद्धिः द्विविधा स्मृतिः अनुभवश्च।

६४. केवलात् भावनाख्यात् संस्कारात् जातं ज्ञानम् स्मृतिः।

६५. अनुभवः द्विविधः यथार्थः अयथार्थश्च।

६६. वैशेषिकदर्शने प्रमा द्विविधा प्रत्यक्षम् अनुमितिः च।

६७. स्मृतिभिन्नं ज्ञानम् अनुभवः।

६८. प्रयत्नः त्रिविधः- प्रवृत्तिः निवृत्तिः जीवनयोनिश्च।



६९. संस्कारः त्रिविधः- भावना, वेगः, स्थितिस्थापकश्च।

७०. पृथिव्यादिचतुष्टये तथा मनसि वेगाख्यः संस्कारः तिष्ठति।

७१. यत् संयोगभिन्नं किन्तु संयोगस्य असमवायिकारणं तत् कर्म कर्मत्वजातिमत् वा।

७२. कर्म पञ्चविधम्। उत्क्षेपणम्, अपक्षेपणम्, आकुञ्चनं, प्रसारणं, गमनञ्च।

७३. गमनम् अनियतदिग्देशजनकं कर्म। यथा भ्रमणादिकम्।

७४. द्रव्यस्य अधोदेशसंयोगस्य कारणम् अपक्षेपणम्।

७५. द्रव्यस्य विप्रकृष्टसंयोगस्य कारणं प्रसारणम्।

७६. नित्यम् एकम् अनेकानुगतं सामान्यम्।

७७. सामान्यं स्वाश्रयसमवायेन सम्बन्धेन वर्तते।

७८. सामान्यं द्विविधम्- परम् अपरञ्च।

७९. सत्ता परं सामान्यम्।

८०. अनवस्थादोषात् सामान्ये सामान्यं न स्वीक्रियते।

८१. जातिबाधकाः षड्विधाः।

८२. व्यक्ते अभेदः, तुल्यत्वं, संकरः, अनवस्था, रूपहानिः, असम्बन्धश्चेति जातिबाधकाः।

८३. स्वाश्रयस्य आकाशस्य अभिन्नत्वात् आकाशत्वं न जातिः।

८४. संकरः इति जातिबाधकस्य सत्वात् भूतत्वं न जातिः।

८५. विशषे विशेषत्वमिति जातिस्वीकारे स्वतोव्यावर्तकत्वधर्मस्य हानिः स्यात्।

८६. असम्बन्धवशात् समवाये समवायत्वं जातिः न स्वीक्रियते।

८७. नित्यद्रव्यवृत्तयः व्यावर्तकाः विशेषाः।

८८. पृथिव्यादिचतुष्टयस्य परमाणुषु, नित्येषु आकाशादिपञ्चद्रव्येषु च विशेषाः तिष्ठन्ति।

८९. प्रलयकाले समानजातीयानां पार्थिवादीनां परमाणूनां भेदकत्वेन तत्र विशेषाः स्वीकृताः।

९०. शब्दस्य समवायिकारणतायाः अवच्छेदकतया आकाशे विशेषः स्वीकृतः।

९१. मूक्तावस्थायाम् आत्मनां भेदज्ञानार्थं आत्मसु विशेषाः स्वीकृताः।

९२. समवायः नित्यः सम्बन्धः, सः खलु अयुतसिद्धवृत्तिः।

९३. ययोः द्वयोः मध्ये एकम् अविनश्यद् अपराश्रितम् एव अवतिष्ठते तौ अयुतसिद्धौ।

९४. अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती विशेषनित्यद्रव्ये च अयुतसिद्धौ पदार्थौ।

९५. संयोगः अनित्यः गुणविशेषः, समवायः नित्यः पदार्थविशेषः इति संसोगसमवाययोः भेदः।

९६. यस्य अभावः स प्रतियोगी। यथा घटाभावस्य घटः प्रतियोगी।

९७. अभावः द्विविधः संसर्गाभावः अन्योन्याभावश्च। संसर्गाभावश्च त्रिविधः प्रागभावः ध्वंसाभावः अत्यन्ताभावः इति।



९८. उत्पत्तेः प्राक् कार्यस्य यः अभावः विद्यते स प्रागभावः। तस्य उत्पत्तिः नास्ति किन्तु विनाशः अस्ति।

९९. कार्यस्य विनाशात् परं तस्य कार्यस्य यः अभावः तदधिकरणे विद्यते स ध्वंसाभावः। ध्वंसाभावस्य उत्पत्तिः अस्ति किन्तु नाशः नास्ति।

१००. 'वायौ रूपाभावः' इत्यत्र अत्यन्ताभावः।

१०१. 'घटः पटः न भवति' इत्यत्र अन्योन्याभावः।

१०२. तादात्म्यसम्बन्धावच्छिन्नः अभावः अन्योन्याभावः।

१०३. वैशेषिकमते प्रमाणं द्विविधम्- प्रत्यक्षम् अनुमानञ्च।

१०४. वैशेषिकमते सर्वेषु पदार्थेषु चतुष्टयसन्निकर्षाद् अवितथम् अव्यपदेश्यं यत् ज्ञानं उत्पद्यते तत् प्रत्यक्षम्।

१०५. चक्षुः घ्राणं रसनं त्वक् श्रोत्रं मनश्चेति षट् इन्द्रियाणि।

१०६. लिङ्गदर्शनात् सञ्जायमानं ज्ञानं लैङ्गिकम्। लिङ्गञ्च अनुमापकम्।

१०७. वैशेषिकमते लिङ्गदर्शनम् अनुमानप्रमाणम्।

१०८. वैशेषिकमते शब्दस्य उपमानस्य च अनुमानप्रमाणे अन्तर्भावः।

१०९. सृष्टेः प्राक् निष्क्रियेषु परमाणुषु ईश्वरेच्छावशात् क्रिया जायते।

११०. परमाणुद्वयसंयोगेन अनित्यं कार्यरूपम् अणुपरिमाणं द्व्यणुकम् उत्पद्यते॥

१११. त्र्यणुकं महत्परिमाणम्।

११२. एकस्मिन् चतुरणुके चतुर्विंशतिः परमाणवः तिष्ठन्ति।

११३. परमाणुद्वयसंयोगस्य नाशात् द्व्यणुकनाशः भवति।

॥ इति एकादशः पाठः ॥



१२

# साङ्ख्यदर्शनम्

## प्रस्तावना

अस्मिन् जगति सर्वे एव सुखं वाञ्छन्ति, दुःखस्य नाशाय च प्रवर्तन्ते। सुखं सविषयकं निर्विषयकं च भवति। स्वादुभोजनेन जायमानं सुखं सविषयकम्, तत्र भोज्यपदार्थाः विषयाः। सुषुप्तिकाले यत् सुखं जायते तत् निर्विषयकं सुखम्। न हि सुषुप्तौ कश्चिद् विषयः भासते। जाग्रत्काले बाह्याः स्थूलाः घटादयः विषयाः अनुभूयन्ते, स्वप्नकाले च मनसा निर्मिताः गृहघटादयः अनुभूयन्ते। परन्तु सुषुप्तौ बाह्यविषया इन्द्रियाणि मनश्च न सन्ति। अतः तदा आयासाभावात् जीवः सुखमनुभवति। सविषयकं सुखं हि कामः, निर्विषयकं निरतिशयं सुखं हि मोक्षः। सुखलाभार्थं च धनैश्वर्यम् अपेक्षितम्, केचन नियमाश्च अनुसर्तव्याः। धनैश्वर्यं हि अर्थपदेन उच्यते। ये नियमाः मनुष्यजीवने सुखं जनयन्ति ते एव धर्मपदेन उच्यन्ते। एवं पुरुषस्य अर्थः प्रयोजनं तावत् सुखं, तस्य सुखस्य उपायौ हि धर्मार्थौ। अतः धर्मः अर्थः कामः मोक्षः इति चत्वारः पुरुषार्थाः। एतेषु काममोक्षौ मुख्यपुरुषार्थौ, धर्मार्थौ चोपायभूतत्वात् गौणपुरुषार्थौ। प्रत्येकं पुरुषार्थानां प्रतिपादनाय शास्त्राणि प्रणीतानि। अतः मन्वादिप्रणीतं धर्मशास्त्रं, कौटिल्यादिप्रणीतम् अर्थशास्त्रं, वात्स्यायनादिप्रणीतं कामशास्त्रं लोके दृश्यन्ते। भारतीयदर्शननानि हि मोक्षप्रतिपादकानि शास्त्राणि। भारतीयदर्शनानि आस्तिकनास्तिकभेदेन द्विविधानि। न्याय-वैशेषिक-सांख्य-योग-पूर्वमीमांसोत्तरमीमांसादर्शनानि वेदस्य प्रामाण्यं स्वीकुर्वन्ति, अतः एतानि आस्तिकदर्शनानि। एतेषु पुनः न्यायवैशेषिकयोः, सांख्ययोगयोः, पूर्वोत्तरमीमांसयोः सिद्धान्त-प्रतिपाद्य-साम्यं दृश्यते। अतः प्रत्येकयुगलं समानतन्त्रम् इत्युच्यते।

सांख्यमते दुःखस्य आत्यन्तिकी ऐकान्तिकी च निवृत्तिः मोक्षः। दुःखस्य आत्यन्तिकी निवृत्तिर्नाम दुःखस्य नाशानन्तरं पुनः तस्य उत्पत्तिः न भवति, दुःखस्य ऐकान्तिकी निवृत्तिः नाम दुःखस्य नाशः अवश्यमेव भवति इति। दुःखं हि त्रिविधं आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकं चेति। शरीरे वातपित्तश्लेष्माणां वैषम्यकारणात् रोगादीनाम् उत्पत्तिः भवति, रोगेभ्यः दुःखं जायते। कामक्रोधलोभादिकारणात् च मानसिकं दुःखं जायते। शारीरं मानसं च दुःखम् आध्यात्मिकम्, मनुष्य-पशु-स्थावरादिभ्यः जायमानं दुःखम् आधिभौतिकं, यक्ष-राक्षस-ग्रहादिकारणात् यद् दुःखं जायते तद् आधिदैविकम्। उक्तस्य दुःखत्रयस्य आत्यन्तिकी ऐकान्तिकी निवृत्तिः पान-भोजन-मणि-मन्त्रादिभिः न भवति। दुःखस्य सामयिकनाशः एतैः भवति, परन्तु पुनः कालान्तरे दुःखम् उत्पद्यते। वेदेन प्रतिपादितैः यागादिभिः अपि दुःखस्य निवृत्तिः न भवति। यागादिषु पशुवधो भवति, तेन च पापम् उत्पद्यते। यागेन यत्फलम् उत्पद्यते तस्य च नाशो भवति। स्वर्गं गतानाम् अपि पुण्यनाशे स्वर्गात् प्रच्युतिः श्रुतिषु भगवद्गीतासु च श्रूयते। यागेन च यत्फलं जायते तत् निरतिशयं न भवति, यागफलेषु अपि कानिचन



उत्कृष्टानि कानिचन निकृष्टानि। अतः लौकिकोपायैः वैदिककर्मकाण्डेन च यतो दुःखस्य एकान्ततः अत्यन्ततः नाशो न भवति। अतः प्रकृतिपुरुषविवेकज्ञानप्रतिपादकं सांख्यशास्त्रं पुरुषस्य दुःखनिवृत्तये समुपदिश्यते आचार्येण कपिलेन।

अस्मिन् पाठे वयम् आदौ सांख्यदर्शने आचार्यपरम्पराम् आलोचयामः। ततः सांख्यसम्मतपदार्थान् प्रमाणानि च सप्रपञ्चं अवलोकयामः। कार्यकारणविषये प्रसिद्धः सांख्यानां सिद्धान्तः सत्कार्यवादः अपि अत्र आलोचयिष्यते।



## उद्देश्यानि

एतं पाठं पठित्वा भवान् अधोनिर्दिष्टान् विषयान् ज्ञास्यति –

- सांख्यदर्शनालोचनस्य आवश्यकता
- सांख्यदर्शने आचार्यपरम्परा
- सांख्यमते बन्धमोक्षौ
- सांख्यमते प्रकृतिसत्त्वे प्रमाणानि, प्रकृतिस्वरूपञ्च
- प्रकृतिस्वरूपभूतं गुणत्रयम्
- पुरुषसत्त्वे प्रमाणानि, पुरुषस्वरूपं, पुरुषबहुत्वञ्च
- सांख्यसम्मत-पञ्चविंशति-तत्त्वानि, तेषां वर्गीकरणञ्च
- सांख्याभिमतप्रमाणानि
- सत्कार्यवादः

## १२.१) सांख्यपदस्य अर्थः

संख्यायते अनया इति विग्रहे सम् इत्युपसर्गपूर्वकात् व्यक्तायां वाचि विद्यमानात् चक्ष्-धातोः करणे अङ्-प्रत्यये, ततः स्त्रीत्वविवक्षायां टापि संख्याशब्दो निष्पद्यते। संख्याशब्दस्य अर्थो हि सम्यग् विचारः। अमरकोशे उच्यते – "चित्ताभोगा मनस्कारश्चर्चा संख्या विचारणा" इति, "संख्यावान् पण्डितः कविः" इति च। संख्या सम्यग् विचारः अस्ति अस्मिन् इति विग्रहं संख्याशब्दाद् अण् प्रत्यये सांख्यशब्दो निष्पद्यते। ननु सम्यग् विचारः इतरदर्शनेषु अपि सुलभः इति चेदुच्यते सांख्यशब्दोऽयं योगरूढः, शब्देनानेन सम्यग्-विचारयुक्तं कपिलप्रणीतं शास्त्रमेव बोध्यते। सम्यक् ख्यायते प्रकाश्यते वस्तुतत्त्वम् अनया इति संख्या इति विग्रहे निष्पन्नस्य संख्याशब्दस्य सम्यग् ज्ञानम् इत्यर्थोऽपि कल्प्यते श्रीधरस्वामिप्रभृतिभिः प्राचीनाचार्यैः। अतः संख्या सम्यग् ज्ञानं, सा अस्ति यत्र तत् सांख्यम् इत्यर्थोऽपि सम्भवति। अत्र च सम्यग्ज्ञानम् इत्युक्ते प्रकृतिपुरुषविवेकः, विवेक-ख्यातिः, विवेक-बुद्धिः, सत्त्वपुरुषान्यताख्यातिर्वा बोध्यते।

सांख्यदर्शने पञ्चविंशतितत्त्वानि प्रपञ्चितानि। एवं पञ्चविंशतिसंख्यया सह सम्बन्धाद् अस्य शास्त्रस्य सांख्यम् इति नाम इति केचन आमनन्ति। महाभारते उक्तञ्च – संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते। तत्त्वानि च चतुर्विंशत् तेन सांख्यं प्रकीर्तितम्। इति। अस्मिन् पक्षेऽपि संख्याशब्दात् अण्-प्रत्यये

सांख्यशब्दो निष्पद्यते। इतरदर्शनेषु अपि विविधसंख्यकानि तत्त्वानि प्रतिपादितानि, अतः अत्र सांख्यपदं योगरूढं कपिलप्रणीतशास्त्रस्यैव बोधकम् इति वक्तव्यम्।

## १२.२) सांख्यदर्शने आचार्यपरम्परा

महर्षिः कपिलः सांख्यदर्शनस्य प्रवक्ता। कपिलः सांख्यसूत्राणि लिखितवान्। इदानीं यानि सांख्यसूत्राणि लभ्यन्ते तानि न कपिलविरचितानि इति विद्वांसो वदन्ति। कपिलप्रणीतो सूत्रग्रन्थो हि लुप्तः। सांख्यशास्त्रप्रणेतृरूपेण कपिलस्य नाम श्रुतौ, महाभारते, भागवते च लभ्यते। कपिलः तस्य शिष्याय आसुरये, आसुरिश्च तस्य शिष्याय पञ्चशिखाय सांख्यतत्त्वं प्रोवाच। एतेषां ग्रन्था न लभ्यन्ते। ईश्वरकृष्णविरचिता सांख्यसप्ततिः सांख्यकारिका वा इदानीं सुलभा, तत्र सांख्यमतानि कारिकाद्वारा समुपन्यस्तानि। एवं गौडपादस्य सांख्यकारिकाभाष्यम्, विज्ञानभिक्षुकृतं सांख्यप्रवचनभाष्यं सांख्यसारश्च, अनिरुद्धस्य सांख्यप्रवचनसूत्रवृत्तिः, माठराचार्यस्य माठरवृत्तिः, अज्ञातलिखिता युक्तिदीपिका, सीमानन्दस्य सांख्यतत्त्वविवेचनम्, भावागणेशस्य सांख्यतत्त्वयथार्थदीपनम् वाचस्पतिमिश्रस्य सांख्यतत्त्वकौमुदी इत्यादयो ग्रन्था इदानीं समुपलभ्यन्ते।

एतद्विहायापि बहूनां सांख्यशास्त्रकाराणां नामानि स्मृतिभ्यः महाभारतस्य शान्तिपर्वणश्च ज्ञायन्ते। एतेषां सांख्यशास्त्राणि इदानीं लुप्तानि। ते हि – विन्ध्यवासी, वार्षगण्यः, जैगीषव्यः, वोढुः, असितदेवलः, सनकः, सनन्दनः, सनातनः, सनत्कुमारः, भृगुः, शुक्रः, काश्यपः, पराशरः, गर्गः, हारीतः, अगस्त्यः, पुलस्त्यः इत्यादयः।



## पाठगतप्रश्नाः १

१. सांख्यदर्शनस्य समानतन्त्रं दर्शनं किम्।
२. सांख्यदर्शने को नाम मोक्षः।
३. दुःखस्य आत्यन्तिकी ऐकान्तिकी च निवृत्तिर्नाम का।
४. दुःखं कतिविधम्, कानि च तानि।
५. आध्यत्मिकं दुःखं नाम किम्।
६. सांख्यपदस्य का व्युत्पत्तिः।
७. सांख्यपदस्य कोऽर्थः।
८. सांख्यदर्शनस्य प्रवक्ता कः।
९. कपिलस्य शिष्यः कः, तस्य च शिष्यः कः।
१०. सांख्यकारिकाया अपरं नाम किम्।
११. सांख्यप्रवचनभाष्यं केन लिखितम्।
१२. अनिरुद्धकृतस्य ग्रन्थस्य नाम किम्।



## १२.३) सांख्यमते बन्धमोक्षौ

सांख्यमते प्रकृतिः पुरुषश्चेति नित्यं तत्त्वद्वयम् अस्ति। यच्च अनादि विनाशरहितं तत् नित्यम्। पुरुषो हि असङ्गः चेतनो निष्क्रियश्च। पुरुषा हि द्विविधाः बद्धा मुक्ताश्च। प्रकृतिर्हि जडा, सा हि जडस्य जगतः उपादानम्। प्रकृतेः बुद्धितत्त्वम् उत्पद्यते। बुद्धिरपि जडा। प्रकृतेः कार्ये बुद्धौ धर्माधर्माः विद्यन्ते, धर्माधर्मजनितानि सुखदुःखानि अपि बुद्धौ एव वर्तन्ते। एवं दुःखसम्बन्धरूपबन्धः दुःखाभावरूपमोक्षः च बुद्धेः एव सम्भवति। यदा पुरुषो भ्रमवशात् बुद्धितत्त्वेन सह स्वस्य तादात्म्यमनुभवति तदा बुद्धिगतसुखदुःखानि स्वस्मिन् आरोप्य अहं सुखी अहं दुःखी इति चिन्तयति। तदा पुरुष आत्मानं बद्धं मन्यते। न च बुद्धितत्त्वेन सह पुरुषस्य सम्बन्धो वास्तविकः। स्वच्छदर्पणे यथा मुखस्य प्रतिबिम्बं भवति, तथैव स्वच्छायां बुद्धौ चेतनपुरुषस्य प्रतिबिम्बमात्रमेव सम्बन्धो बोध्यः। यदा च पुरुषो बुद्ध्या सह आत्मनो भेदं जानाति तदा बुद्धिः निवर्तते, तदा बुद्धिगतसुखदुःखानि पुरुषो नानुभवति। पुरुषः तदा स्वस्वरूपे प्रतिष्ठितो भवति। पुरुषो नित्यमुक्तः, तस्य स्वस्वरूपे स्थितिः एव मोक्षः। मोक्षे कारणं च बुद्धिपुरुषविवेकज्ञानम्। तदेव सत्त्वपुरुषान्यताख्यातिः सदसत्ख्यातिः विवेकधीः इत्यादिपदैः उच्यते।

## १२.४) प्रकृतिसत्त्वे प्रमाणानि

प्रकरोति इति प्रकृतिः। प्रकृतिरेव अखिलस्य प्रपञ्चस्य कारणम्। सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः इति हि सांख्यसूत्रम्। सत्त्वं रजः तमः इति गुणत्रयविशिष्टा एषा प्रकृतिः कारणरहिता। प्रकृतेः अपि कारणकल्पने, प्रकृतिकारणस्यापि किं कारणम्, तस्य कारणस्य पुनः किं कारणम् इति अनवस्था स्यात्। अतः एषा मूलप्रकृतिः इति कथ्यते, अस्य कारणं नास्ति। मूले मूलाभावाद् अमूलं मूलम् इति सांख्यसूत्रम् अत्र प्रमाणम्। ननु प्रकृतिः अस्ति चेत् कथं तस्य उपलब्धिः न भवति इति चेदुच्यते प्रकृतेः सूक्ष्मत्वात् तस्य प्रत्यक्षं न भवति। यथा सूक्ष्माः परमाणवः प्रत्यक्षगोचरा न भवन्ति तथा। प्रकृतिर्हि गुणत्रयात्मकस्य प्रपञ्चस्य कारणरूपेण सामान्यतोदृष्टेन अनुमानेन सिध्यति। उक्तं च सांख्यकारिकायाम् – सौक्ष्म्यात्तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः इति।

प्रकृतिसिद्धये ईश्वरकृष्णेन सांख्यकारिकायां केचन हेतवः समुपन्यस्ताः। ते हि भेदानां परिमाणात्, समन्वयात्, शक्तितः प्रवृत्तेः, कारणकार्यविभागात्, अविभागात् वैश्वरूप्यस्य चेति। बुद्धितत्त्वादीनि कार्याणि परिमितानि अव्यापीनि च। अतः अस्ति तेषां कारणम् अव्यक्तं, यद् व्यापि भवति। दृश्यमानं सर्वमेव कार्यजातं सुखदुःखमोहात्मकत्वात् सत्त्वरजस्तमोगुणात्मकम्, अतः अस्ति अस्य कार्यजातस्य किमपि सजातीयं कारणमिति सिध्यति। सांख्यमते शक्तिविशिष्टात् कारणादेव कार्यस्य अभिव्यक्तिः भवति। यथा तिलात् तैलम् उत्पद्यते, यतो हि तिले तैलोत्पादनस्य शक्तिः अस्ति। न हि वालुकाभ्यः तैलोत्पत्तिः भवति, वालुकासु तैलोत्पादनशक्तेः अभावात्। महदादिकार्यदर्शनात् अस्ति कार्योत्पादनानुकूलशक्तिविशिष्टं कारणम् अव्यक्तम् इति आपतति। उत्पत्तिकाले सतः एव कार्यस्य कारणसकाशाद् विभागः आविर्भावो भवति। विश्वरूपम् एव वैश्वरूप्यम्। प्रलयकाले च विश्वरूपस्य

(सकलस्य कार्यस्य) कारणे अविभागः (तिरोभावो) भवति। अतः कार्यस्य महदादेः आविर्भाव-तिरोभावदर्शनात् अस्ति तत्कारणम् अव्यक्तम् इत्यनुमितं भवति। उच्यते च ईश्वरकृष्णेन सांख्यकारिकायाम् -

भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च।
कार्यकारणविभागादविभागाद् वैश्वरूप्यस्य।। इति।

## १२.५) प्रकृतिस्वरूपम्

सांख्यदर्शने प्रकृतिर्हि कारणत्वात् अव्यक्तमिति कथ्यते। प्रकृतिकार्याणां बुद्धितत्त्वादीनां प्रकृत्यपेक्षया स्थूलत्वात् व्यक्तम् इति अभिधानम्। सांख्यकारिकायां व्यक्तानाम् अव्यक्तस्य च सादृश्य-वैसादृश्य-निरूपणकाले प्रकृतिस्वरूपम् आलोचितम्। प्रकृतिर्हि नित्या कारणरहिता। स्वस्याः उत्पन्नानि बुद्ध्यादीनि व्याप्य तिष्ठति, अतः प्रकृतिः व्यापिनी। प्रकृतौ परिणामरूपक्रिया वर्तते, परन्तु परिस्पन्दरूपक्रिया न वर्तते। अतः प्रकृतिः क्रियारहिता इति सांख्यवृद्धाः कथयन्ति। सा च प्रकृतिः एका सकलकार्याणाम् आधारभूता च। प्रकृतेः अनुमानं तत्कार्यदर्शनात् सम्भवति, अतः प्रकृतिः अनुमेया। न हि प्रकृतिः कारणान्तरस्य अनुमाने लिङ्गं भवति। न च प्रकृतिः अवयवसंयोगविशिष्टा सावयवा। न हि महदादिभिः प्रकृतेः संयोगः, महदादिभिः सह प्रकृतेः तादात्म्यात्। कार्यकारणयोः न हि संयोगः सम्भवति। न च प्रकृतौ सत्त्व-रजस्तमसां संयोगो वर्तते इति वाच्यम्। संयोगो नाम अप्राप्तपूर्विका प्राप्तिः, तथाहि हस्त-पुस्तकौ भिन्नौ, तयोः संयोगो सम्भवति। प्रकृतौ सत्त्वरजस्तमां सम्बन्धः नित्यः, अतः तेषां परस्परेण अन्वितताया: अभावः नैव सम्भवति, अतः तेषां अनित्यः संयोगोऽपि न शक्यः प्रतिपादयितुम्। तस्माच्च प्रकृतेः सावयवत्वं नास्ति। प्रकृतिश्च कार्यजनने स्वतन्त्रा। उच्यते च तस्मात् सांख्यकारिकायाम्-

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्। इति।

तच्च अव्यक्तं सुखदुःखमोहात्मकम्। सत्त्वगुणात् सुखं, रजोगुणात् दुःखं, तमोगुणात् मोहश्च समुद्भवन्ति। अव्यक्तस्य न हि स्वस्माद् भेदः अस्ति। न हि रामः रामाद् भिद्यते। अव्यक्तात् समुत्पन्नाः महदादयः अपि न अव्यक्तात् भिद्यन्ते। सांख्यमते हि कार्यकारणयोः तादात्म्यम् (अभेदः) अङ्गीक्रियते। तस्मात् कारणस्य अव्यक्तस्य कार्येभ्यः महदादिभ्यो नास्ति भेदः। अतः अव्यक्तम् अविवेकि। अव्यक्तं च ग्राह्यो बाह्यो विषयः, न हि आन्तरं विज्ञानाकारम् इति चिन्तनीयम्। तस्य च अव्यक्तस्य तत्कार्याणां च ज्ञानं बहूनां पुरुषाणां भवति इति सामान्यं (साधारणम्) हि तत्। अव्यक्तं हि अचेतनम् अखिलजगतः कारणञ्च। अतः अव्यक्तं प्रसवधर्मि अपि भवति। अतः सांख्यकारिकायाम् उच्यते ईश्वरकृष्णेन –

त्रिगुणम् अविवेकि विषयः सामान्यम् अचेतनं प्रसवधर्मि।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्। इति।



## १२.६) प्रकृतेः गुणत्रयम्

प्रकृतिः गुणत्रयात्मिका। सत्त्व-रजस्तमसां साम्यावस्था हि प्रकृतिः। सत्त्वं रजः तमश्च अत्र गुणाः इति पूर्वं प्रतिपादितम्। सत्त्वगुणात् सुखं, रजोगुणात् दुःखं, तमोगुणात् मोहश्च समुद्भवन्ति इत्यपि प्रागुक्तम्। उच्यते च सांख्यवृद्धैः –

गुणसाम्यं प्रधानं स्याद् गुणाः सत्त्वं सजस्तमः।
सुखदुःखमोहरूपं दृश्यते हि स्फुटं जगत्। इति।

इदम् अत्र अवधेयं यत् न हि प्रकृतिः एतेषां गुणानाम् आधारः। नैयायिकाः स्वीकुर्वन्ति यद् द्रव्ये समवायसम्बन्धेन गुणाः तिष्ठन्ति। सत्त्वादयः न तादृशाः गुणाः। न हि प्रकृतिरूपे द्रव्ये समवायसम्बन्धेन गुणाः तिष्ठन्ति इति चिन्तनीयम्। न हि ते प्रकृतेर्धर्माः। सत्त्व-रजस्तमांसि प्रकृतेः स्वरूपभूताः, न हि सत्त्व-रजस्तमोव्यतिरेकेण प्रकृतिः अस्ति। तथा च सांख्यसूत्रम् – सत्त्वादीनाम् अतद्धर्मत्वं तद्-रूपत्वात् इति। किञ्च सत्त्वादयो न हि नैयायिकसम्मतगुणवत् भवन्ति। सत्त्वरजस्तमसां संयोगविभागादयः सम्भवन्ति, एतेषु लघुत्व-चलत्व-गुरुत्वादिधर्माः सन्ति। गुणेषु संयोगादिगुणाः लघुत्वादिगुणाः वा नैयायिकाः नाङ्गीकुर्वन्ति। अतः सत्त्व-रजस्तमांसि हि द्रव्याणि। पुरुषस्य बन्धनं कुर्वन्ति इति हेतोः ते गुणा इति कथ्यन्ते, यथा हि गुणैः (रज्जुभिः) हस्तिगवादीनां बन्धनं भवति तद्वत्।

गुणेषु सत्त्वं हि लघु प्रकाशकञ्च। अधोगमनव्यतिरिक्तं ऊर्ध्वगमनं तिर्यग्गमनञ्च लघुताकारणाद् भवति। अतः अन्तःस्थितानि सात्त्विकानि ज्ञानेन्द्रियाणि विषयदेशं गत्वा अपि विषयं प्रकाशयितुं समर्थानि भवन्ति। रजो हि उपष्टम्भकं चलञ्च। रजोगुणो हि अवसन्ने शिथिले निष्क्रिये सत्त्वतमसी स्वस्वकार्ये प्रवर्तयति। उपष्टम्भकं नाम प्रवर्तकम्। रजश्च सक्रियत्वात् चलम्। तमो हि गुरुत्वविशिष्टं आवरकञ्च। रजसः चलत्वे, सत्त्वस्य प्रकाशकत्वे च बाधकं हि तमः। अन्यथा सर्वाणि वस्तूनि सदा सक्रियाणि भवेयुः रजोवशात्, सर्वज्ञाश्च सर्वे भविष्यन्ति सत्त्वगुणवशात्। एते गुणा भिन्नधर्मिणः परिस्परविरोधिनश्च। तथापि एते गुणाः पुरुषस्य भोगार्थम् अपवर्गार्थं च सम्भूय कार्यजातम् उत्पादयन्ति। यथा प्रदीपे वर्तिः तैलं वह्निश्च परस्परं विरुद्धानि, तथापि तानि सम्भूय प्रकाशरूपं कार्यं सम्पादयन्ति तथैव सत्त्वरजस्तमांसि परस्परविरुद्धानि अपि सम्भूय रूपप्रकाशकार्यं कुर्वन्ति। तथाहि उच्यते सांख्यकारिकायाम् –

सत्त्वं लघु प्रकाशकमिष्टम् उपष्टम्भकं चलं च रजः।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः। इति।

एवं गुणत्रयात्मिकायाः प्रकृतेः गुणत्रयात्मकं जगद् उत्पद्यते। सत्त्वरजस्तमांसि परस्परविरुद्धानि, कथम् एकस्मिन् पदार्थे तेषां सम्भवः इति चेदुच्यते, एका एव रमणी तस्य पत्युः सुखकारणं भवति, तस्याः सपत्न्याः दुःखकारणं भवति, यश्च ताम् अभिलषति परन्तु न प्राप्नोति तस्य मोहकारणं भवति। एवम् एकमेव वस्तु गुणत्रयात्मकत्वात् कस्यचित् सुखकारणं, कस्यचिद् दुःखकारणं, कस्यचिद् वा मोहकारणं भवति। एते गुणा हि परस्परम् अभिभूय कार्यमुत्पादयन्ति। यदा च सत्त्वं रजस्तमसी अभिभवति तदा शान्तवृत्तिः, यदा रजः सत्त्वतमसी अभिभवति तदा घोरा वृत्तिः, यदा च तमः सत्त्वरजसी अभिभवति तदा मूढा वृत्तिः उत्पद्यते। एते गुणा हि परस्परमपेक्ष्य कार्यम् उत्पादयन्ति, अतः एते अन्योन्यम्



आश्रयन्ते। सत्त्वं हि प्रवृत्तिं नियमं चाश्रित्य एव प्रकाशकार्यं विधत्ते, रजो हि प्रकाशं नियमं चाश्रित्य प्रवर्तनकार्यं करोति, तमो हि प्रकाशं प्रवृत्तिं चाश्रित्य नियमयति। परिणामो हि द्विविधः सरूपपरिणामः विरूपपरिणामश्चेति। सृष्टिकाले विरूपपरिणामो भवति, तदा गुणाः अन्योन्यम् आश्रित्य कार्यजातमुत्पादयन्ति इति प्रतिपादितम्। प्रलयकाले तु सरूपपरिणामो भवति। सरूपपरिणामे कारणरूपेण तत्त्वान्तरस्य अपेक्षा न वर्तते। सदृशपरिणामस्थले एते गुणाः परस्परसहकारिणः भवन्ति। सत्त्वरजस्तमोगुणा हि अन्योन्यसहचराः, कदापि एतेषां परस्परव्यभिचारो दृष्टः। अत उच्यते –

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः। इति।



## पाठगतप्रश्नाः २

१३. सांख्यमते नित्यं तत्त्वद्वयं किम्।

१४. कदा नित्यमुक्तः पुरुष आत्मानं सुखी दुःखी वेति चिन्तयति।

१५. मोक्षस्य कारणं किम्।

१६. का नाम प्रकृतिः।

१७. कथं प्रकृतिर्न प्रत्यक्षेण गृह्यते।

१८. प्रकृतिसिद्धये ईश्वरकृष्णेन सांख्यकारिकायां के हेतवः समुपन्यस्ताः।

१९. अव्यक्तं किमर्थं व्यापि।

२०. किं लिङ्गं प्रकृतिम् अनुमापयति।

२१. किं सत्त्वरजस्तमांसि प्रकृतौ आधाराधेयभावेन तिष्ठन्ति।

२२. सत्त्वगुणस्य किं तावद् वैशिष्ट्यम्।

२३. रजोगुणस्य किं तावद् वैशिष्ट्यम्।

२४. तमोगुणस्य किं वैशिष्ट्यम्।

२५. परस्परविरुद्धानाम् अपि सम्भूय एककार्यकारित्वे किमुदाहरणम्।

## १२.७) पुरुषसत्त्वे प्रमाणं

प्रकृतेः अस्तित्वं प्रति यथा प्रमाणानि प्रदर्शितानि सांख्यदार्शनिकैः तथा पुरुषस्य सिद्धये अपि ते हेतून् उपस्थापितवन्तः। प्रकृतेः तत्कार्येभ्यश्च भिन्नः पुरुषो वर्तते, यतो हि प्रकृतिः तत्कार्याणि च सुखदुःखमोहात्मकत्वात् संघातरूपाः। जगति दृश्यमानां सर्वेऽपि संघाताः परार्थमेव वर्तन्ते। यथा शय्या आसनम् इत्यादयः संघाताः शरीरप्रयोजनं साधयन्ति। तथैव प्रकृतिः तत्कार्याणि च भिन्नं किञ्चित् परम् अचेतनभिन्नम् अनुमापयन्ति। न चायं परः संघातरूपः, तथा कथ्यते चेत् तस्य संघातस्य पुनः



अपरार्थता, अपरस्यापि संघातत्वे तस्यापि परार्थता इत्येवम् अनवस्था स्यात्। अतः अस्ति संघातव्यतिरिक्तं गुणत्रयहीनं चेतनं प्रकृतिभ्यो विविक्तं किञ्चित् पुरुषाख्यं तत्त्वम्। प्रकृतिर्हि जडा। तस्य अधिष्ठानरूपेण अपि पुरुषस्य सिद्धिः भवति। पुरुषसम्बन्धात् एव प्रकृतिः सृजति। प्रकृतेः परिणामं प्रति पुरुषस्य सम्बन्धमात्रम् अपेक्षितं, न हि पुरुषस्य तत्र कर्तृत्वमस्ति। प्रकृतेरारभ्य सर्वेषामेव कार्याणां सुखदुःखमोहात्मकत्वात् सुखदुःखमोहानां भोक्तृरूपेण चेतनः पुरुषः अङ्गीकरणीयः। शास्त्राणि कैवल्यार्थमेव प्रवृत्तानि, शास्त्रकाराः महर्षयो हि कैवल्यार्थमेव प्रवर्तन्ते। कैवल्यं नाम दुःखत्रयाभावः। न हि प्रकृतेः तत्कार्याणां वा कैवल्यं सम्भवति, तेषां सुखदुःखमोहस्वरूपत्वात्। अतः कैवल्यं तद्व्यतिरिक्तस्य पुरुषस्य एव सम्भवतीति पुरुषः अङ्गीकरणीय एव। उक्तं चातः सांख्यकारिकायां –

संघातपरार्थत्वात् त्रिगुणादिविपर्ययाद् अधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात्, कैवल्यार्थं प्रवृत्तेश्च।। इति।

## १२.८) पुरुषस्वरूपम्

पुरुषो हि नित्यः उत्पत्तिरहितः। पुरुषे न गुणत्रयं वर्तते। अतोऽयं त्रिगुणः असंहतश्च। पुरुषो हि चेतनः। तस्मात् प्रकृतितत्कार्येभ्यश्च अस्य अस्ति महान् भेदः। पुरुषो हि विषयी, प्रकृत्यादिविषयं पुरुषः साक्षात्करोति। प्रतिसंघातं पुरुषः भिन्नः, अतः पुरुषः सामान्य इति वक्तुं न शक्यते। पुरुषात् न किञ्चिद् उत्पद्यते। अतो नायं प्रसवधर्मी। पुरुषो हि निष्क्रियः स्वतन्त्रश्च। पुरुषो हि चेतनः अविषयश्च, अतः पुरुषो हि द्रष्टा साक्षी च। गुणत्रयरहितत्वात् अस्मिन् दुःखत्रयाभावात् कैवल्यं सिध्यति। किञ्च पुरुषः स्वरूपतः सुखी दुःखी वा न भवति। अतः अस्य उदासीनत्वं माध्यस्थ्यं वा सिध्यति। पुरुषश्च विवेकित्वात् अप्रसवधर्मित्वाच्च अकर्ता। उच्यते च –

तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वम् अकर्तृभावश्च।। इति।

## १२.९) पुरुषबहुत्वम्

सांख्यमते पुरुषो हि नाना। केचन पुरुषाः सन्ति बद्धाः केचन च मुक्ताः। ननु कथं एक एव चेतनः पुरुषो नाङ्गीक्रियते --अद्वैतवेदान्तादिवत् इति चेदुच्यते, एक एव पुरुषश्चेत् एकस्मिन् पुरुषे उत्पन्ने देहधारिणां सर्वेषामुत्पत्तिः स्यात्, एकस्मिन् पुरुषे मृते च देहधारिणां सर्वेषां मरणं स्यात्। एवम् एकस्मिन् पुरुषे अन्धे सति सर्वेषाम् अन्धता स्यात्। न तथा भवति। अतः प्रतिशरीरं पुरुषो भिन्न इति अङ्गीकरणीयम्। जन्म-मरण-इन्द्रियाणाम् एवंविधव्यवस्थायाः दर्शनात् पुरुषबहुत्वं स्वीक्रियते। एवम् एक एव पुरुषश्चेत् एकस्मिन् शरीरे प्रयतमाने सर्वाणि एव शरीराणि प्रयतेरन्। न हि तथा युगपत् प्रवृत्तिः शरीराणां दृष्टा। अतो युगपत्प्रवृत्तेः अभाववशात् अपि प्रतिशरीरं पुरुषभेदः अङ्गीकरणीयः। देहधारिषु अपि अस्ति मिथो भेदः। केषुचित् ऋषिषु योगिषु वा सत्त्वगुणस्याधिक्यं दृश्यते, मनुष्येषु मर्त्यवासिषु दृश्यते रजोगुणस्य आधिक्यं, तिर्यग्योनिषु गवाश्वादिषु तमोगुणस्याधिक्यं दृश्यते। अतः गुणानां प्रतिशरीरं



विपर्ययदर्शनात् प्रतिशरीरं पुरुषभेदः अपि कल्पनीयः। अतः पुरुषबहुत्वसिध्यर्थं सांख्यकारिकायामुच्यते ईश्वरकृष्णेन –

जननमरणकरणानां प्रतिनियमाद् अयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव।। इति।

## १२.१०) सांख्यसम्मतानि पञ्चविंशतितत्त्वानि

सांख्यदर्शने पञ्चविंशतिः तत्त्वानि स्वीकृतानि। तानि हि पुरुषः, प्रकृतिः, महत्तत्त्वम्, अहङ्कारः, शब्द-स्पर्श-रूप-रस-गन्ध इति पञ्चतन्मात्राणि, आकाश-वायु-तेजो-जल-पृथिवीति पञ्चमहाभूतानि, श्रोत्र-त्वक्-चक्षु-रसन-घ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि वाक्-पाणि-पाद-पायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि मनश्चेति।

## १२.११) जगतः सृष्टिक्रमः

त्रिगुणात्मिका प्रकृतिर्हि भोग्या। भोगेनैव प्रकृतिः सार्थकतां गच्छति। परन्तु प्रकृतिः स्वयं स्वस्याः भोगं कर्तुं न शक्नोति। अतः प्रकृतिः भोक्तारं पुरुषम् अपेक्षते। पुरुषश्च स्वस्य कैवल्यार्थं प्रकृतिम् अपेक्षते। प्रकृतिपुरुषविवेकज्ञानेन सत्त्वपुरुषान्यताख्यात्या एव मोक्षः। ज्ञानं च बुद्धितत्त्वस्य महत्तत्त्वस्य वा परिणामः। निरन्तर-श्रवण-मनन-निदिध्यासनैः महतत्त्वस्य एव परिणामविशेषो हि तत्त्वज्ञानं विवेकख्यातिपदवाच्यम्। अतः महतत्त्वरूपेण परिणतायाः प्रकृतेः अपेक्षा अपि पुरुषस्य अस्ति। पुरुषो न केवलं मोक्षाय, भोगाय अपि स प्रकृतिम् अपेक्षते। प्रकृतिः यदा पुरुषस्य सविधे आत्मानं भोग्यरूपेण उपस्थापयति तदा पुरुषस्य भोगो भवति। पुरुषाः बहवः, अतः प्रकृतिपुरुषसंयोगा अपि बहवः। केचन संयोगा भोगाय कल्पन्ते, केचन पुनः मोक्षाय। एवं प्रकृतिपुरुषयोः परस्परसापेक्षता, परस्परम् उपकार्योपकारकभावो वा वर्तते। एवं परस्परप्रयोजनवशात् प्रकृतिपुरुषयोः संयोगो भवति, तत्कारणाच्च सृष्टिः भवति। गुणत्रयसाम्यावस्था हि प्रकृतिः इत्युक्तम्। यदा पुरुषसंयोगवशात् प्रकृतौ गुणानां वैषम्यं जायते तदा महदादिक्रमेण जगदुत्पद्यते। अत्र उदाहरणरूपेण पङ्ग्वन्धन्यायः उक्तः। अरण्ये पङ्गुः अन्धश्च परिजनैः परित्यक्तौ। पङ्गुः गमने असमर्थतावशात् अरण्यम् अत्येतुं न अशक्नोत्, अन्धश्च मार्गं द्रष्टुम् असमर्थः सन् अरण्यपारं गन्तुं न अशक्नोत्। यदा च अन्धः पङ्गुं स्वस्कन्धे नीत्वा अग्रे चलितः, पङ्गुश्च स्कन्धस्थितः मार्गं निर्दिष्टवान् तदा तौ अरण्यमतीत्य ग्रामं प्राप्तुं समर्थौ जातौ। एवं प्रकृतिपुरुषौ पङ्ग्वन्धवत् परस्परसाहाय्येन स्वस्वोद्देश्यसाधने समर्थौ भवतः। उच्यते च ईश्वरकृष्णेन सांख्यकारिकायाम् –

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः। इति।

प्रकृतिपुरुषसंयोगवशात् आदौ प्रकृतेः महत्तत्त्वम् उत्पद्यते। महत्तत्त्वं बुद्धिः इत्यनर्थान्तरम्। महत्तत्त्वात् अहङ्कार उत्पद्यते। सात्त्विकाद् (सत्त्वगुणप्रधानात्) अहङ्कारात् चक्षुः-श्रोत्र-घ्राण-रसन-त्वगाख्यानि पञ्च ज्ञानेन्द्रियाणि वाक्-पाणि-पाद-पायूपस्थाख्यानि कर्मेन्द्रियाणि उभयात्मकं मनः च



उत्पद्यन्ते। तामसाद् अहङ्कारात् शब्द-स्पर्श-रूप-रस-गन्धाख्यानि पञ्च तन्मात्राणि उत्पद्यन्ते। पञ्चभ्यः तन्मात्रेभ्यः पुनः पञ्चमहाभूतानि उत्पद्यन्ते। तथाहि शब्दतन्मात्रात् शब्दगुणविशिष्टम् आकाशम्, शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद् शब्द-स्पर्शगुणविशिष्टो वायुः, शब्द-स्पर्शतन्मात्रसहिताद् रूपतन्मात्रात् शब्द-स्पर्श-रूपगुणविशिष्टं तेजः, शब्द-स्पर्श-रूपतन्मात्रसहितात् रसतन्मात्राद् शब्द-स्पर्श-रूप-रसगुणविशिष्टा आपः, शब्द-स्पर्श-रूप-रस-तन्मात्रसहिताद् गन्धतन्मात्रात् शब्द-स्पर्श-रूप-रस-गन्ध-गुणविशिष्टा पृथिवी जायते। अत उच्यते –

प्रकृतेर्महांस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः।<br>
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि। इति।

## १२.१२) पञ्चविंशतितत्त्वानां वैशिष्ट्यदृष्ट्या विभागः

पञ्चविंशत्यां तत्त्वेषु प्रकृतिः, प्रकृतिविकृतिः, विकृतिः, अनुभयः इति कोटिचतुष्टयं भवति। तेषु तत्त्वेषु मूलप्रकृतिः प्रकृतिरेव। न तस्य किञ्चित् कारणमस्ति। महत्तत्त्वम् अहङ्कारः पञ्च तन्मात्राणि इति सप्त तत्त्वानि हि प्रकृतिविकृतयः। एतेषां कारणम् अस्ति, एतेभ्यः कार्याणि अपि उत्पद्यन्ते। यथा महत्तत्त्वस्य मूलप्रकृतिः कारणं भवति, महत्तत्त्वात् अहङ्कारस्य चोत्पत्तिः भवति। अतः महत्तत्त्वं अहङ्कारस्य प्रकृतिः मूलप्रकृतेश्च विकृतिः भवति। एवं अहङ्कारं पञ्चतन्मात्रेषु अपि बोध्यम्। एकादशेन्द्रियाणि पञ्चमहाभूतानि च विकृतिरेव। एतेषां कारणमस्ति, परन्तु एतेभ्यः कार्याणि न उत्पद्यन्ते। पुरुषस्तु उदासीनः। न हि तस्य किञ्चित् कारणम् अस्ति, न वा तस्मात् किञ्चिद् उत्पद्यते। अतः पुरुषः न प्रकृतिः न विकृतः। स हि न उभयरूपः, अतः अनुभयरूपः। अतः उच्यते –

मूलप्रकृतिरविकृतिः महदादयः प्रकृतिविकृतयः सप्त।<br>
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः।



## पाठगतप्रश्नाः ३

२६. पुरुषस्य परार्थं प्रवृत्तिः किमर्थं न।

२७. प्रपञ्चं प्रति किं पुरुषस्य कर्तृत्वम् अस्ति।

२८. कुतः पुरुषः साक्षी।

२९. पुरुषबहुत्वे हेतवः के।

३०. पञ्चमहाभूतानि कानि।

३१. पञ्च ज्ञानेन्द्रियाणि कानि।

३२. पञ्च कर्मेन्द्रियाणि कानि।

३३. प्रकृतेः सृष्टिः कथं भवति।

३४. प्रकृतेः किम् उत्पद्यते।



३५. महत्तत्त्वात् किमुत्पद्यते।

३६. पञ्च तन्मात्राणि कस्मादुत्पद्यन्ते।

३७. प्रकृतिविकृत्यनुभयरूपं सांख्यतत्त्वं किम्।

३८. पञ्च ज्ञानेन्द्रियाणि कस्माद् उत्पद्यन्ते।

## १२.१३) सत्कार्यवादः

महदादिकार्येभ्यः एव तेषां कारणस्य प्रकृतेः अनुमानं भवति इति पूर्वं प्रतिपादितम्। केषाञ्चन मते कार्येभ्यः कारणमात्रस्य अनुमानं भवति, न हि कारणविशेषस्य अनुमानं भवति। अस्यार्थो हि – घटः उत्पद्यते चेत् अस्ति तस्य कारणम् इति ज्ञातुं शक्यते, परन्तु तस्य किं तावत् कारणम् इति ज्ञातुं न शक्यते इति। तथाहि शून्यवादिनो बौद्धा हि असतः (शून्यात्) एव कार्यस्य उत्पत्तिं कथयन्ति। अतः तेषां मते कार्यस्य कारणस्य च सजातीयत्वं नास्ति। अतः कार्यात् कारणविशेषस्य अनुमानं कर्तुं न शक्यते। अद्वैतवेदान्तिनो हि एकस्य सतः चेतनस्य ब्रह्मणः विवर्तो हि अयं प्रपञ्चः इति कथयन्ति। एतेषां मतेऽपि अचेतनस्य जगतः तद्विजातीयं चेतनं ब्रह्म एव कारणमिति। अतः अत्रापि कार्यात् तत्सजातीयं कारणम् अनुमातुं न शक्यते। सांख्यमते तावत् कार्यादेव तत्सजातीयस्य कारणविशेषस्य अनुमानं सम्भवति। यतो हि एते कारणात् तत्सजातीयस्य एव कार्यस्य उत्पत्तिं स्वीकुर्वन्ति।

कार्यकारणभावविचारकाले भारतीयदार्शनिकाः स्वेषां मतानि उपस्थापितवन्तः। तथाहि नैयायिका हि असत्कार्यवादिनः, तेषां मते कार्यं कारणव्यापारात् पूर्वम् कारणे विद्यमानं न तिष्ठति। कारणव्यापारात् पूर्वम् अविद्यमानम् (असत्) एव कार्यं कारणव्यापारेण उत्पन्नं भवति। असत्कार्यवादस्य आरम्भवाद इति अपरं नाम। अद्वैतवेदान्तिनो हि विवर्तवादिनः। तेषां मते कार्यरूपः अखिलः प्रपञ्चः कारणे ब्रह्मणि आरोपितः, तस्माच्च मिथ्या। यथा भ्रमकारणात् शुक्तौ दृष्टं रजतम् मिथ्या, तद्वत्। ब्रह्मणः विवर्तभूतः अयं प्रपञ्चः। एते हि सत्कारणवादिनः। सांख्यानां कार्यकारणसम्बद्धवादः सत्कार्यवाद इत्युच्यते। एतन्मते कार्यं कारणव्यापारात् पूर्वं कारणे सत् (विद्यमानं तिष्ठति) इति। कारणे पूर्वम् अनभिव्यक्ततया विद्यमानस्य एव कार्यस्य कारणव्यापारेण अभिव्यक्तिः भवति। यथा हि तिले पेषणादिकारणव्यापारात् प्रागेव तैलं वर्तते। तैलं कारणव्यापारात् पूर्वम् तिले अभिव्यक्तरूपेण न तिष्ठति। पेषणादि-व्यापारेण तैलम् अभिव्यक्तं भवति। एवं मृत्तिकायामपि चक्रभ्रमणादिकार्यव्यापारात् प्रागेव घटः वर्तते, चक्रभ्रमणादिकारणव्यापारेण पूर्वं मृत्तिकायाम् अनभिव्यक्तरूपेण स्थितस्य घटस्य अभिव्यक्तिः भवति। अतः कारणसजातीयमेव कार्यम् उत्पद्यते। तस्माच्च कार्यात् कारणानुमानं सुतरां सम्भवति। तेन च सुखदुःखमोहात्मकं प्रपञ्चं वीक्ष्य तत्सजातीयं कारणं त्रिगुणात्मकं प्रधानम् (प्रकृतिः) अनुमीयते।

सत्कार्यम् उपपादयितुं पञ्च हेतवः सांख्यकारिकायाम् उपन्यस्ताः। तथाहि (कारणव्यापारात् पूर्वं) कार्यं (कारणे) सत्, असदकरणाद्, उपादानग्रहणात्, सर्वसम्भवाभावात्, शक्तस्य शक्यकरणात्, कारणभावाच्च। सांख्याः कथयन्ति यत् कारणव्यापारात् पूर्वं कारणे कार्यम् असत् चेत् न हि तत् कदापि कर्तुम् (उत्पादयितुं) शक्यते। सिकतासु कारणव्यापात् पूर्वं तैलं न वर्तते, अतो न हि कथञ्चिदपि



सिकताभ्यः तैलम् उत्पद्यते। अतः असदकरणात् कार्यं कारणव्यापारात् पूर्वं कारणे सत्। उपादानेन कारणेन सह ग्रहणात् सम्बन्धवशात् अपि कार्यं सत्। कारणेन सह सम्बन्धयुक्तम् एव कार्यं कारणव्यापारात् परम् उत्पद्यते। यदि कारणव्यापारात् प्राक् कार्य-कारणयोः सम्बन्धः कल्प्यते तर्हि तदा कार्यम् अस्ति विद्यमानम् इति सिध्यति। सम्बन्धिद्वयस्य अभावे न हि सम्बन्धः सम्भवति। अतः उपादानेन सह सम्बन्धयुक्तस्य कार्यस्य एव उत्पत्तेः कारणव्यापारात् पूर्वं कार्यं सत्। न हि सर्वस्मात् कारणात् सर्वस्यापि कार्यस्य उत्पत्तिः भवति। न हि तन्तुभ्यो घटः, न वा मृत्तिकाभ्यो पट उत्पद्यते। अतः कारणव्यापारात् पूर्वमेव कारणस्य कार्येण सह सम्बन्धोऽस्ति। अन्यथा यस्मात् कस्माच्चित् कारणात् यस्य कस्यचित् कार्यस्य उत्पत्तिः भवेत्। अतः सर्वसम्भवाभावात् कारणव्यापारात् पूर्वं कारणे कार्यं सत्। शक्तेन (शक्तिविशिष्टेन) कारणेन एव कार्यम् उत्पाद्यते। तथाहि मृत्तिकायां घटोत्पादनशक्तिः अस्ति, अतो मृत्तिकाया घट उत्पद्यते। मृत्तिकायां पटोत्पादनशक्तिः नास्ति, अतो मृत्तिकायाः पटो नोत्पद्यते। कार्योत्पत्त्यनुकूल-शक्तिविशिष्टे कारणे विद्यमाना सा शक्तिः सर्वकार्यविषयिणी चेत् सर्वं वस्तु सर्वस्मादेव सम्भवेत्। मृत्तिकाया अपि पटोत्पत्तिः स्यात्। न तथा भवति। यदि सा शक्तिः विशिष्टकार्यविषयिणी इति स्वीक्रियते तदा प्रश्नो भवति यत् कारणव्यापारात् पूर्वं कार्यस्य अभावस्वीकारे कथं शक्तेः विशिष्टकार्येण सम्बन्धः प्रतिपादयितुं शक्यते इति। न हि वस्तुनः अभावे सम्बन्धः सम्भवति। कारणव्यापारात् पूर्वं कार्यस्य अभावे कारणे अविद्यमानकार्यविषयिणी शक्तिः अङ्गीकर्तुं न शक्यते। अतः कार्यविषयक-शक्ति-विशिष्टस्य एव कारणस्य कार्योत्पादनात्, कारणव्यापारात् पूर्वमेव कार्यमस्ति इति अङ्गीकरणीयम्। किञ्च कार्यस्य कारणाभिन्नत्वात् कारणं सत् चेत् तदभिन्नं कार्यं कथमसद् भवेत्। अतः कार्यस्य कारणभावाद् अपि कार्यं सत्। उच्यते च सांख्यकारिकायाम् –

> असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
> शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम्॥ इति।

## १२.१४) सांख्याभिमतप्रमाणानि

सांख्ये त्रीणि प्रमाणानि अङ्गीकृतानि – प्रत्यक्षम् अनुमानम् आगमश्च। प्रमाणं नाम प्रमायाः करणम्। करणं नाम कारणविशेषः, यस्य व्यापाराद् अनन्तरं कार्यस्य उत्पत्तिः भवति। कुठारस्य उद्यमनादिव्यापारात् परमेव वृक्षच्छेदनरूपस्य फलस्य उत्पत्तिः भवति, अतः कुठारः करणम्। काष्ठच्छेदक-वृक्षादयस्तु कारणमात्रम्। सांख्यमते प्रमा नाम पौरुषेयः बोधः। चैतन्यप्रतिबिम्बिता बुद्धिवृत्तिः, बुद्धिवृत्तिप्रतिबिम्बितं चैतन्यं वा प्रमाशब्दस्य अर्थः। प्रमाणं च विषयाकारा चित्तवृत्तिः। तथाहि, घटप्रत्यक्षकाले यदा चक्षुरिन्द्रियं घटेन सम्बध्नाति तदा बुद्धिः चक्षुर्द्वारा घटेन सम्बन्धं लभते, घटाकारेण च परिणमते। एषा घटाकारा चित्तवृत्तिः एव प्रमाणम्। यदा च स्वच्छायां चित्तवृत्तौ पुरुषः प्रतिबिम्बते तदा घटाकारा चित्तवृत्तिः पुरुषप्रतिबिम्बविशिष्टा भवति। सा एव पुरुषप्रतिबिम्बविशिष्टा घटाकारा चित्तवृत्तिरेव घटविषयिणी प्रमा। तस्याः स्वरूपं च - घटम् अहं जानामि इति। सांख्यमते प्रमाणम् प्रमा उभयमपि ज्ञानात्मकं भवति। घटाकारा चित्तवृत्तिः हि घटज्ञानं, तद् घटज्ञानं तु प्रमाणम्। घटज्ञानेन सह यदा पुरुषस्य सम्बन्धः तदा घटमहं जानामि इति अहम्पदोक्तेन पुरुषेण सह सम्बद्धं ज्ञानं



हि प्रमा भवति। अत उच्यते वाचस्पतिमिश्रेण सांख्यतत्त्वकौमुद्यां प्रमाविषये – "बोधश्च पौरुषेयः फलं प्रमा, तत्साधनं प्रमाणम्" इति। वाचस्पतिमिश्रेण प्रमाणस्य लक्षणमुक्तं – "असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः" इति। वृक्षः कपिसंयोगवान् न वा इत्यादौ सन्देहे अतिव्याप्तिवारणाय असन्दिग्धेति। अविपरीतपदस्य अबाधितत्वम् अर्थः। भ्रमज्ञाने अतिव्याप्तिवारणाय पदमिदम् उपात्तम्। शुक्तिरजतादिभ्रमेषु रजतादिविषयाः उत्तरज्ञानेन बाधिता भवन्ति। अतस्तेषां बाधितत्वं, न अबाधितत्वम्। अनधिगतपदं स्मृतौ अतिव्याप्तिवारणाय प्रदत्तम्। घटप्रत्यक्षकाले एव घटः अधिगतो भवति, अधिगतविषयस्य संस्कारात् अधिगतविषये स्मृतिर्भवति। अतः न संशयस्य भ्रमस्य स्मृतेश्च न प्रमाणत्वम्। प्रमाणानि अधः संक्षेपेण आलोच्यन्ते।

पृथिवीसुखादिविषयैः सह इन्द्रियसम्बन्धे सति त्रिगुणात्मिकायां बुद्धौ तमोगुणस्य अभिभवो भवति, सत्त्वगुणस्य च समुद्रेको भवति। तदा इन्द्रिय-सन्निकृष्ट-विषयाकारा अन्तःकरणवृत्तिः उत्पद्यते। सा एव अध्यवसायः ज्ञानम् इति वा उच्यते। एषा इन्द्रिय-सन्निकृष्ट-विषयाकारा चित्तवृत्तिः एव प्रत्यक्षप्रमाणम्। पुरुषप्रतिबिम्बविशिष्टा एषा चित्तवृत्तिरेव प्रमा भवति।

लिङ्गं नाम हेतुः। लिङ्गि नाम लिङ्गसम्बन्धि साध्यम्। किञ्च लिङ्गिपदेन पक्षस्यापि ग्रहणं भवति। तदा लिङ्गम् अस्मिन् अस्ति इति लिङ्गी इत्यर्थो भवति। तथाहि धूम-वह्न्योः सहचारः प्रत्यक्षं सर्वेषाम्। धूमः व्याप्तिविशिष्टः व्याप्यः, वह्निश्च व्यापकः। धूमवह्न्योः व्याप्तिः धूमे वर्तते। एवं धूमवह्न्योः यदि इदं ज्ञानं व्याप्यव्यापकरूपम्, किञ्च धूमः पर्वते अस्ति इति वह्निविशिष्टस्य पर्वतस्य ज्ञानम्, एतज्ज्ञानद्वयात् परं यद् ज्ञानम् चित्तवृत्तिर्वा उत्पद्यते पर्वतो वह्निमान् इति तदनुमानम्। ततः तस्मिन् ज्ञाने पुरुषप्रतिबिम्बे सति बह्निमन्तं पर्वतम् अहम् अनुमिनोमि इति पुरुषसम्बन्धि यज्ज्ञानं सा हि अनुमितिः। तच्च अनुमानं त्रिविधं पूर्ववत्, शेषवत् सामान्यतोदृष्टं चेति।

आप्तवाक्यश्रवणात् परं यद्वाक्यार्थज्ञानं जायते तद्धि आगमप्रमाणम्। आप्तश्च यथार्थवक्ता, स च भ्रम-प्रमाद-विप्रलिप्सा-करणापाटवरूपदोषरहितः। तथाहि "साक्षी चेता केवलो निर्गुणश्च" इत्यादिवाक्यात् निर्गुणाभिन्न-केवलाभिन्न-चेत्रभिन्न-साक्षि-सत्तारूपस्य वाक्यार्थस्य यज्ज्ञानं, वाक्यार्थाकारा चित्तवृत्तिर्वा, सा हि आगमप्रमाणम्। यदा च अस्यां चित्तवृत्तौ पुरुषस्य प्रतिबिम्बं पतति तदा पुरुषप्रतिबिम्बविशिष्टा सा चित्तवृत्तिः प्रमा भवति। एवं त्रीणि एव प्रमाणानि सांख्यैः स्वीक्रियन्ते।



## पाठगतप्रश्नाः ४

३९. शून्यवादिनः कस्मात् कार्योत्पत्तिं प्रतिपादयन्ति।

४०. अद्वैतवेदान्तिनां मते प्रपञ्चः कस्माद् उत्पद्यते।

४१. आरम्भवादिनः के।

४२. सांख्यानां कार्यकारणविषयको वादः कः।

४३. सत्कार्यवादस्य कः सारः।



४४. सांख्यकारिकायां सत्कार्यम् उपपादयितुं कति युक्तयः समुपन्यस्ताः, काश्च ताः।

४५. सांख्यमते कति प्रमाणानि अङ्गीकृतानि।

४६. सांख्यमते प्रमाणं नाम किम्।

४७. सांख्यमते का प्रमा।

४८. कः आप्तः।



## पाठसारः

सांख्यदर्शनं हि आस्तिकदर्शनम्, सांख्यसूत्रकारः कपिलः अस्य दर्शनस्य प्रवक्ता। आसुरि-पञ्चशिखादयः केचन प्राचीनाः सांख्याचार्या आसन्, परन्तु तेषां ग्रन्था इदानीं न लभ्यन्ते। ईश्वरकृष्णस्य सांख्यकारिका एव इदानीं सांख्यदर्शनस्य आकरग्रन्थरूपेण स्वीक्रियते। सांख्या हि द्वैतवादिनः। एतेषां मते मूलं तत्त्वद्वयमस्ति प्रकृतिः पुरुषश्च। प्रकृतिः गुणत्रयात्मिका जडा अखिलजगतः उपादानं निमित्तं च। पुरुषो हि चेतनः अकर्ता उदासीनः। पुरुषाश्च बहवः। पुरुषसम्बन्धवशात् गुणत्रयात्मिकायाः प्रकृतेः बुद्धितत्त्वम्, बुद्धितत्त्वाद् अहंकारः, सात्त्विकाहंकारात् एकादश इन्द्रियाणि, तामसाद् अहंकारात् पञ्च तन्मात्राणि, पञ्च तन्मात्रेभ्यश्च पञ्च महाभूतानि उत्पद्यन्ते। एवं प्रकृतिः, पुरुषः, बुद्धिः, अहंकारः, एकादशेन्द्रियाणि, पञ्च तन्मात्राणि, पञ्च महाभूतानि इति पञ्चविंशतिः तत्त्वानि पदार्था वा सांख्ये स्वीकृतानि। एतेषु मूलप्रकृतिर्हि प्रकृतिरूपा कारणरूपा वा। बुद्धिः, अहंकारः, पञ्च तन्मात्राणि हि प्रकृतिविकृतयः। एकादशेन्द्रियाणि पञ्चमहाभूतानि च केवलं विकृतयः। पुरुषश्च अनुभयरूपः।

यदा पुरुषः बुद्धितत्त्वेन सह आत्मानम् अभिन्नं मन्यते, तदा बुद्धिगतं सुखदुःखादिकम् आत्मनः एवेति मन्वानः सुखी दुःखी च सन् बद्धो भवति। यदा च पुरुषस्य बुद्धितत्त्वेन सह स्वस्य भेदस्य ज्ञानं भवति अर्थात् सत्त्व-पुरुषान्यताख्यातिः भवति तदा बुद्धेः अवसानं भवति। पुरुषश्च स्वरूपे प्रतिष्ठितः सन् मुक्तः भवति। येषां च तादृशं प्रकृतिपुरुषभेदज्ञानं न भवति ते बद्धा एव सन्तः प्रकृत्या उत्पादितानां विषयाणां भोगं कुर्वन्ति। अतः पुरुषस्य मुक्त्यर्थं भोगार्थं च प्रकृतेः अपेक्षा अस्ति, पुरुषस्य भोगावर्गरूपप्रयोजनं साधयितुं प्रकृतेः अपि पुरुषापेक्षा वर्तते। अतः प्रकृतिपुरुषौ पङ्ग्वन्धवत् परस्परसाहाय्येन प्रपञ्चसृष्टिरूपं कार्यं करोति। सृष्टौ पुरुषस्य अवदानं तावत् प्रकृत्या सह तस्य सम्बन्धमात्रं प्रकृतौ तत्प्रतिबिम्बमात्रं वा, पुरुषस्य निष्क्रियत्वात् साक्षित्वाच्च।

सांख्या हि सुखदुःखमोहात्मकं प्रपञ्चरूपकार्यं दृष्ट्वा तत्सजातीयस्य त्रिगुणात्मकस्य प्रकृतितत्त्वस्य अनुमानं कुर्वन्ति। गुणत्रयं च सत्त्वं रजः तमश्चेति। कार्यस्य कारणसजातीयत्वं प्रदर्शयितुं सांख्याः सत्कार्यवादम् अङ्गीकुर्वन्ति। सांख्यमते कार्यं कारणव्यापारात् पूर्वं कारणे अनभिव्यक्ततया विद्यमानं तिष्ठति, कारणव्यापारेण कार्यस्य अभिव्यक्तिमात्रं भवति। एवं लयकाले कार्यम् उपादाने अनभिव्यक्तरूपेण तिष्ठति। तथाहि घटः मृत्तिकायां चक्रभ्रमण-मृत्तिकास्थापन-कुम्भकारकर्तृकघटरूपदानादिव्यापारात् पूर्वमेव अनभिव्यक्ततया विद्यमानं तिष्ठति। चक्रभ्रमणादिव्यापारेण



मृत्तिकायाः घटस्य अभिव्यक्तिः भवति। कदाचित् दण्डेन घटस्य नाशे घटः स्वकारणे मृत्तिकायां पुनः अनभिव्यक्तरूपेण तिष्ठति।

सांख्याचार्याः प्रत्यक्षम् अनुमानम् आगमः इति प्रमाणत्रयमङ्गीकुर्वन्ति। एतेषां मते इन्द्रियेण घटस्य सम्बन्धे सति या घटाकारा चित्तवृत्तिः सा हि प्रमाणम्। अतो नैयायिका यं व्यवसायज्ञानम्, प्रमा इति वा कथयन्ति तद्धि सांख्यमते प्रमाणम्, न प्रमा। घटाकारचित्तवृत्तौ यदा पुरुषप्रतिबिम्बं भवति तदा पुरुषसम्बन्धि यज्ज्ञानं भवति घटमहं जानामि इति सा हि प्रमा। एषा च नैयायिकैः अनुव्यवसाय इति कथ्यते। एवम् इन्द्रियसन्निकृष्ट-विषयाकारा चित्तवृत्तिः प्रत्यक्षप्रमाणम्। ततश्च विषयमहं प्रत्यक्षीकरोमि इति पुरुषसम्बन्धि ज्ञानं प्रमा। व्याप्यव्यापकज्ञान-पक्षज्ञानपूर्वकं च यज्ज्ञानं तत् अनुमानप्रमाणम्। ततो जायमानः अनुमिनोमि इति अनुव्यवसायो हि अनुमितिः। आप्तवाक्याद् यद् वाक्यार्थज्ञानं भवति तद्धि आगमप्रमाणम्। तद्विषयकं पौरुषेयं ज्ञानं हि आगमप्रमा।



## पाठान्तप्रश्नाः

१. किं तावद् आधिभौतिकं दुःखम्।
२. किं नाम आधिदैविकं दुःखम्।
३. वाचस्पतिमिश्रलिखितस्य सांख्यग्रन्थस्य नाम किम्।
४. माठराचार्येण को ग्रन्थः रचितः।
५. महाभारतोल्लिखितानां केषाञ्चित् सांख्याचार्याणां नाम लिखत।
६. पङ्ग्वन्धन्यायः कः।
७. पुरुषस्य सत्त्वे के हेतवः।
८. कानि तावत् पञ्च तन्मात्राणि।
९. पृथिव्यां के गुणाः सन्ति।
१०. वायौ के गुणाः सन्ति।
११. तेजसि के गुणाः सन्ति।
१२. कि नाम करणम्।
१३. लिङ्गपदस्य कोऽर्थः।
१४. लिङ्गिपदस्य कोऽर्थः।
१५. सांख्यनये किं तावत् प्रत्यक्षप्रमाणम्।



## पाठगतप्रश्नानामुत्तराणि

**उत्तराणि-१**



१. योगदर्शनं सांख्यदर्शनस्य समानतन्त्रं दर्शनम्।

२. दुःखस्य आत्यन्तिकी ऐकान्तिकी च निवृत्तिः मोक्षः।

३. दुःखस्य आत्यन्तिकी निवृत्तिर्नाम दुःखस्य नाशानन्तरं पुनः तस्य उत्पत्तिः न भवति, दुःखस्य ऐकान्तिकी निवृत्तिः नाम दुःखस्य नाशः अवश्यमेव भवति इति।

४. दुःखं त्रिविधम् आध्यात्मिकम् आधिदैविकम् आधिभौतिकं च।

५. वातपित्तश्लेष्मणां वैषम्याद् जायमानेभ्यः रोगादिभ्यः उत्पन्नं शारीरिकं कामादिजन्यं च मानसं दुःखम् आध्यात्मिकम्।

६. संख्यायते अनया इति विग्रहे सम् इत्युपसर्गपूर्वकात् व्यक्तायां वाचि विद्यमानात् चक्ष्-धातोः करणे अङ्-प्रत्यये, ततः स्त्रीत्वविवक्षाया टापि संख्याशब्दो निष्पद्यते। संख्या अस्ति अस्मिन् इति संख्याशब्दाद् अण्-प्रत्यये सांख्यम् इति। अथवा संख्याया इदम् इति विग्रहं संख्याशब्दात् अण्-प्रत्यये सांख्यम् इति।

७. संख्यासम्बन्धि सांख्यम्, सम्यग्विचारः सम्यग् ज्ञानं वा अस्मिन् इति सांख्यम्।

८. महर्षिः कपिलः

९. कपिलस्य शिष्यः आसुरिः, आसुरेः शिष्यः पञ्चशिखः।

१०. सांख्यसप्ततिः इति।

११. विज्ञानभिक्षुणा।

१२. सांख्यप्रवचनसूत्रवृत्तिः इति।

**उत्तराणि-२**

१३. प्रकृतिः पुरुषश्चेति सांख्यमते नित्यं तत्त्वद्वयम्।

१४. यदा पुरुषो भ्रमवशात् बुद्धितत्त्वेन सह स्वस्य तादात्म्यमनुभवति तदा बुद्धिगतसुखदुःखानि स्वस्मिन् आरोप्य अहं सुखी अहं दुःखी इति चिन्तयति।

१५. सत्त्वपुरुषान्यताख्यातिरेव पुरुषस्य दुःखध्वंसरूपस्य मोक्षस्य कारणम्।

१६. सत्त्वरजसां साम्यावस्था हि प्रकृतिः।

१७. सूक्ष्मत्वात्।

१८. भेदानां परिमाणात्, समन्वयात्, शक्तितः प्रवृत्तेः, कारणकार्यविभागात्, अविभागात् वैश्वरूप्यस्य चेति।

१९. अव्यक्तं हि स्वस्माद् उत्पन्नानि बुद्ध्यादीनि व्याप्य तिष्ठति, अतः अव्यक्तं व्यापि।

२०. प्रकृतेः कार्याणि एव प्रकृतेः अनुमाने लिङ्गम्।

२१. न, सत्त्वरजस्तमांसि प्रकृतौ तादात्म्येन तिष्ठति। तेषां गुणानां प्रकृतिस्वरूपत्वात्।

२२. सत्त्वगुणो हि लघुः प्रकाशकश्च।

२३. रजोगुणो हि उपष्टम्भकः चलश्च।



२४. तमोगुणो हि गुरुः आवरणकर्ता च।

२५. प्रदीप अत्रोदाहरणम्।

**उत्तराणि- ३**

२६. पुरुषस्य संघाताभावात्, संघातस्य एव परार्थत्वात्।

२७. न, प्रपञ्चोत्पत्तौ पुरुषस्य सम्बन्धमात्रम् अपेक्षितम्।

२८. चेतनत्वातद् अविषयत्वाच्च पुरुषः साक्षी।

२९. जननमरणानां प्रतिनियमात्, अयुगपत्प्रवृत्तेः, त्रैगुण्यविपर्ययाच्च।

३०. आकाशं वायुः तेजः जलं पृथिवी इति पञ्च महाभूतानि।

३१. पञ्च ज्ञानेन्द्रियाणि तावत् श्रोत्रं त्वक् चक्षुः रसनं घ्राणं चेति।

३२. वाक्-पाणि-पाद-पायूपस्थानि पञ्च कर्मेन्द्रियाणि।

३३. पुरुषसंयोगवशात् यदा प्रकृतौ गुणानां वैषम्यं जायते तदा प्रकृतेः महदादिक्रमेण प्रपञ्चस्य सृष्टिर्भवति।

३४. प्रकृतेः महत्तत्त्वम् उत्पद्यते। बुद्धिः सत्त्वं वेति तस्य पर्यायशब्दाः।

३५. महत्तत्त्वात् अहङ्कार उत्पद्यते।

३६. तामसाद् अहङ्काराद् उत्पद्यन्ते।

३७. पुरुषः

३८. सात्त्विकादहंकारात् पञ्च ज्ञानेन्द्रियाणि उत्पद्यन्ते।

**उत्तराणि- ४**

३९. असत एव कार्योत्पत्तिं प्रतिपादयन्ति।

४०. चेतनाद् ब्रह्मण उत्पद्यते।

४१. नैयायिका हि आरम्भवादिनः।

४२. सत्कार्यवादो हि सांख्यानां कार्यकारणविषयको वादः।

४३. कार्यं कारणव्यापारात् पूर्वं कारणे सत् (विद्यमानं तिष्ठति) इति।

४४. पञ्च। ते हि - असदकरणाद्, उपादानग्रहणात्, सर्वसम्भवाभावात्, शक्तस्य शक्यकरणात्, कारणभावाच्चेति।

४५. सांख्यमते त्रीणि प्रमाणानि – प्रत्यक्षम्, अनुमानम्, आगमश्चेति।

४६. प्रमायाः करणं प्रमाणम्। तच्च असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः।

४७. प्रमा हि पौरुषेयः बोधः प्रमाणजन्यः।

४८. आप्तस्तु भ्रम-प्रमाद-विप्रलिप्सा-करणापाटवरहितः यथार्थवक्ता।

---

॥ इति द्वादशः पाठः ॥

---

१३

# योगदर्शनम्

## प्रस्तावना

भारतीयदर्शनानि हि मोक्षशास्त्ररूपेण प्रसिद्धानि। एतेषु दर्शनेषु कानिचन वेदस्य प्रामाण्यं स्वीकुर्वन्ति, तानि हि आस्तिकदर्शनानि। यानि वेदस्य प्रामाण्यं न अभ्युपगच्छन्ति तानि नास्तिकदर्शनानि। चार्वाकदर्शनं, बौद्धदर्शनं, जैनदर्शनं इति त्रीणि नास्तिकदर्शनानि प्रसिद्धानि। आस्तिकदर्शनानि च षट् – सांख्यदर्शनं, योगदर्शनं, न्यायदर्शनं, वैशेषिकदर्शनं, पूर्वमीमांसादर्शनम् उत्तरमीमांसादर्शनं चेति। सांख्य-योगदर्शनयोः सिद्धान्तसाम्यदर्शनात् एतयोः समानतन्त्रता शास्त्रेषु प्रतिपाद्यते।

सांख्यदर्शने पञ्चविंशतितत्त्वानि स्वीकृतानि, योगदर्शने ईश्वररूपः पुरुषविशेषः अङ्गीकृतः। अतः तत्त्वानि षड्विंशतिः सञ्जातानि। सांख्यदर्शने अहङ्कारतत्त्वात् पञ्चतन्मात्राणाम् उत्पत्तिः प्रतिपादिता, योगदर्शने तु बुद्धितत्त्वात् पञ्चतन्मात्राणाम् उत्पत्तिः प्रतिपाद्यते। सांख्यदर्शने तत्त्वस्य श्रवण-मनन-निदिध्यासनेषु अधिकगुरुत्वं प्रदर्श्यते, योगदर्शने तु अष्टाङ्गयोगादिसाधनोपायेषु अधिकगुरुत्वं प्रकाशितम्। एवं कानिचन पार्थक्यानि व्यतिरिच्य सांख्य-योगदर्शनयोः सर्वेषु सिद्धान्तेषु एव सामञ्जस्यं वर्तते। भारतीयदर्शनेषु चार्वाकदर्शनं व्यतिरिच्य सर्वाणि एव दर्शनानि योगदर्शनेन प्रभावितानि। एतेषु सर्वेषु योगप्रोक्तसाधनोपायानाम् अनुसरणं दृश्यते। अतः सर्वेषु दर्शनप्रस्थानेषु योगदर्शनम् एव प्राचीनतमम् इति केचन प्रतिपादयन्ति। एतादृशस्य योगशास्त्रस्य अध्ययनं विना इतरदर्शनानां हृदयं नैव अवगन्तुं शक्यते। उपनिषत्स्वपि योगस्य गुरुत्वम् असकृत् प्रतिपादितम्। उच्यते च मोक्षधर्मे – 'नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम्' इति। अतः अस्मिन् पाठे योगदर्शनस्य मूलतत्त्वानि आलोच्यन्ते।



## उद्देश्यानि

पाठमेतं पठित्वा भवान् अधोलिखितान् विषयान् ज्ञास्यति-

- योगदर्शनस्य परिचयः
- योगदर्शनस्य आचार्यपरम्परा
- योगपदार्थः
- समाधिस्वरूपम्
- पञ्च चित्तवृत्तयः



- योगस्य अष्टाङ्गानि
- ईश्वरस्वरूपम्

## १३.१) योगदर्शनस्य आचार्यपरम्परा

योगदर्शनं हि सुप्राचीनम्। उपनिषत्सु योगविषये उक्तयः दृश्यन्ते। तथाहि – "यच्छेद् वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि। ज्ञानमात्मनि महति तद्यच्छेच्छान्त आत्मनि। " (कठ. १.३.१३) "तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्। अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ। " (कठ. २.३.११) "त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्य। ब्रह्मोडूपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयानकानि। " (श्वेताश्वतर. २.८) इत्यादिषु श्रुतिषु योगविषये सुगभीरम् आलोचनम् आलोक्यते। अस्य योगस्य प्रोक्ता हि हिरण्यगर्भः। उच्यते च याज्ञवल्क्येन – "हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः" इति। एवं कठ-श्वेताश्वतरादिप्राचीनोपनिषत्सु शाण्डिल्योपनिषत् योगराजोपनिषत् हंसोपनिषत् नादबिन्दूपनिषत् ध्यानविन्दूवनिषत् योगकुण्डल्युपनिषद् इत्यादिषु अर्वाचीनोपनिषत्स्वपि योगः आलोचितः। परन्तु पृथग्-दर्शनरूपेण योगस्य उपस्थापनं पतञ्जलिना एव स्वरचितैः योगसूत्रैः विहितम्।

पतञ्जलिप्रणीतानि योगसूत्राणि आदाय एव योगदर्शनस्य प्रपञ्चः इदानीं दृश्यते। अयं पतञ्जलिः व्याकरणमहाभाष्यकारात् पतञ्जलेः न भिन्न इति सम्प्रदायः। तथाहि परम्परावचनं –

"योगेन चित्तस्य पदेन वाचां
मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत्तं प्रवरं मुनीनां
पतञ्जलिं प्राञ्जलिरानतोऽस्मि। " इति।

मतमेतत् अङ्गीकृत्य पतञ्जलिः इशवीयपूर्वतृतीय-द्वितीयशताब्द्यां भुवम् अलञ्चकार इति वक्तुं शक्यते। ज्याकोवि-गार्वे-प्रमुखानां पाश्चात्त्यदार्शनिकानां मते तु योगसूत्रं पञ्चम-ख्रीष्टाब्दे रचितम्। परन्तु मतमेतद् दुर्बलं तत्तद्बुद्ध्यनुसारि वैयक्तिकं च।

योगसूत्राणां भाष्यं व्यासदेवेन कृतं व्यासभाष्यनाम्ना योगभाष्यनाम्ना च प्रसिद्धम्। व्यासभाष्योपरि वाचस्पतिमिश्रस्य तत्त्ववैशारदी टीका विज्ञानभिक्षोश्च योगवार्तिकं प्रसिद्धे। एतद्विहायापि भोजराजस्य योगवृत्तिः, रामानन्दसरस्वतीनां योगमणिप्रभा, राघवनन्दस्य पातञ्जलरहस्यं, अनन्तस्य योगचन्द्रिका, उदयशङ्करस्य योगवृत्तिसंग्रहः, उमापतित्रिपाठिनः योगसूत्रवृत्तिः, गणेशदीक्षितस्य पातञ्जलवृत्तिः, ज्ञानानन्दस्य योगसूत्रविवृतिः – इत्यादयः ग्रन्थाः योगदर्शने प्रसिद्धाः।

पतञ्जलिप्रणीतस्य योगशास्त्रस्य अपरं नाम सांख्यप्रवचनम्। योगसूत्रग्रन्थे हि पादचतुष्टयं विद्यते। ते हि – समाधिपादः साधनपादः विभूतिपादः कैवल्यपादश्चेति। पञ्चोन-द्विशतसूत्रसमन्वितोऽयं (१९५) ग्रन्थः। पाठेऽस्मिन् पातञ्जलयोगसूत्राणि व्यासभाष्यं च आधारीकृत्य विषया आलोचयिष्यन्ते।





## पाठगतप्रश्नाः १

१. योगशास्त्रस्य समानतन्त्रं दर्शनं किम्।

२. सांख्यदर्शनात् योगदर्शनस्य विलक्षणत्वं केषु स्थलेषु।

३. योगस्य प्रथमः प्रवक्ता कः।

४. योगसूत्राणां कः रचयिता।

५. कासाञ्चन योगोपनिषदां नाम लिखत।

६. योगसूत्राणामुपरि भाष्यं केन रचितम्।

७. योगशास्त्रस्य अपरं नाम किम्।

८. योगसूत्रग्रन्थे कति पादाः सन्ति, तेषां नामानि लिखत।

## १३.२) योगशब्दार्थः

युज समाधौ इति समाध्यर्थकाद् युज्-धातोः घञ्-प्रत्यये योगशब्दो निष्पद्यते। अत्र घञ्-प्रत्ययः भावे करणे च विधीयते। युज्यते अनेन इति योगः इति करणव्युत्पत्त्या निष्पन्नेन योगशब्देन सम्प्रज्ञातसमाधेः बोधो भवति, योजनं योगः इति भावव्युत्पत्त्या निष्पन्नस्य योगशब्दस्य असम्प्रज्ञातसमाधिः अर्थः। भावे घञ्-प्रत्ययविधानसूत्रं तावत् भावे इति, करणे घञ्-प्रत्ययविधानस्य सूत्रं तावत् करणाधिकरणयोश्च इति। युजिर् योगे इत्यत्र युज्-धातुः सम्बन्धसामान्यस्य वाचकः। अतस्तस्य नात्र ग्रहणम्।

योगशास्त्रे केवलं समाधिविषये आलोचनं न प्रवर्तते, योगसाधनानां योगफलानां अभ्यासवैराग्यादीनां चालोचनं दृश्यते। परन्तु योगशास्त्रमिति कथनेनैव तानि अपि गतार्थानि भवन्ति। यथा राजासौ गच्छति इत्युक्ते सपरिवारस्य सेनामन्त्रिसहितस्य एव राज्ञः गमनं बुध्यते तथैव योगशास्त्रम् इत्युक्ते योगसम्बन्धिनाम् इतरेषामपि विषयानां सुतरां ग्रहणं भवति। अतो युजिर् योगे इति सम्बन्ध-सामान्य-बोधकात् युज्-धातोः योगशब्दस्य निष्पत्तिमङ्गीकृत्य समाधिसम्बद्धविषयाणां सूचनं तु गौरवाय एव। उच्यते च व्यासेन योगपदार्थः – 'योगः समाधिः'। अत्र च योगः सम्प्रज्ञातसमाधेः असम्प्रज्ञातसमाधेश्च बोधको भवति।

## १३.३) समाधिस्वरूपम्, तद्भेदाश्च

योगः समाधिः इति पर्यायौ। योगस्य स्वरूपविषये उच्यते पतञ्जलिना – 'योगश्चित्तवृत्तिनिरोधः' इति। चित्तवृत्तीनां निरोध एव योगः। चित्तवृत्तयश्च पञ्च – प्रमाणं विपर्ययः विकल्पः निद्रा स्मृतिश्चेति। एतासां चित्तवृत्तीनाम् आलोचनम् अग्रे करिष्यते। एतासां चित्तवृत्तीनां निरोधः चित्तस्य सर्वासु भूमिषु एव भवति। चित्तभूमयश्च पञ्च – क्षिप्तं मूढं विक्षिप्तम् एकाग्रं निरुद्धं चेति।



क्षिप्त-मूढ-विक्षिप्ताख्यासु चित्तभूमिषु यः चित्तवृत्तिनिरोधो भवति न हि स योग इत्युच्यते। तत्र चित्तवृत्तिनिरोधः गौणः कादाचित्कः, विक्षेप एव मुख्यः। एकाग्रभूमौ हि सम्प्रज्ञातः समाधिर्भवति, निरुद्धभूमौ च असम्प्रज्ञातसमाधिः भवति। अतः एकाग्रभूमौ निरुद्धभूमौ च चित्तवृत्तीनां निरोध एव योगः। चित्तभूमीनां स्वरूपम् अध आलोच्यते।

चित्तस्य भूमिर्नाम चित्तस्य स्वाभाविकी अवस्था। यस्यां भूमौ यस्याम् अवस्थायां वा चित्तम् अत्यन्तम् अस्थिरं तिष्ठति, अतीन्द्रियविषयाणां चिन्तनार्थं धैर्यं धीशक्तिर्वा चित्तस्य यस्यां भूमौ न तिष्ठति सा हि क्षिप्तभूमिः। कदाचित् प्रबलहिंसादिप्रवृत्तीनां हेतोः अस्याम् अवस्थायाम् अपि चित्तं समाहितं भवति। यथा महाभारते जयद्रथस्य पाण्डवद्वेषवशात् शिवे चित्तसमाधानम् अभवत्। यस्याम् अवस्थायां चित्तम् कस्मिंश्चित् इन्द्रियविषये मुग्धं सत् तत्त्वचिन्तने असमर्थं भवति सा हि मूढभूमिः। क्षिप्तापेक्षया अस्यां भूमौ इन्द्रियभोग्यविषयेषु सरलतया चित्तं समाहितं भवति। स्त्री-धनादिलाभार्थं जनानां चित्तसमाधानं प्रसिद्धम् एव। एवं मूढावस्थायामपि कदाचित् चित्तसमाधानं भवति। यस्यां भूमौ चित्तं कदाचित् स्थिरं भवति कदाचिद्वा चञ्चलं तिष्ठति सा हि विक्षिप्तभूमिः। साधकानाम् एषा भूमिः भवति। सामयिकस्य स्थैर्यस्य कारणात् अस्याम् अवस्थायां श्रवणमननादिद्वारा वस्तुनः स्वरूपावधारणं सुकरं भवति। मेधा-सद्वृत्तिप्रभृतीनां न्यूनाधिक्यात् विक्षिप्तचित्तानां मनुष्या अपि बहुविधा भवन्ति। विक्षिप्तचित्तेऽपि समाधिः भवति परन्तु न स दीर्घकालस्थायी। एकम् एव अग्रम् अवलम्बनं यस्य चित्तस्य तद् एकाग्रं चित्तम्। यस्यां भूमौ चित्तस्य एकस्या वृत्तेः निवृत्तेः अनन्तरं तदनुरूपा एव वृत्तिरुदेति, एवम् अनुरूपवृत्तीनां प्रवाहः निरवच्छिन्नः तिष्ठति सा हि एकाग्रभूमिः। एकाग्रभूमौ सम्प्रज्ञातसमाधिः भवति। अन्तिमा चित्तभूमिर्हि निरुद्धभूमिः। यस्यां भूमौ सर्वासां चित्तवृत्तीनां निरोधो भवति संस्कारमात्रम् च अवशिष्यते सा हि निरोधभूमिः। निरोधभूमौ चित्ते विलीने सति कैवल्यं भवति। निरुद्धभूमौ हि असम्प्रज्ञातसमाधिः निर्बीजसमाधिर्वा भवति। क्षिप्त-मूढ-विक्षिप्तभूमिषु चित्तवृत्तिनिरोधस्य स्थायित्वाभावात् न हि तेषां चित्तवृत्तिनिरोधानां योगपदेन कथनं भवति।

**चित्तवृत्तिनिरोधरूपः योगः द्विविधः** – सम्प्रज्ञातः असम्प्रज्ञातश्चेति। यत्र हि ध्येयस्य यथार्थस्वरूपं प्रत्यक्षीक्रियते स सम्प्रज्ञातः समाधिः। अस्यां समाधौ ध्येयभिन्नचित्तवृत्तीनां निरोधो भवति, ध्येयाकारा एव वृत्तिर्भवति। सम्प्रज्ञातसमाधौ हि ज्ञातृ-ज्ञान-ज्ञेयरूपा त्रिपुटी तिष्ठति। योगः चित्तवृत्तिनिरोधः इत्यत्र सर्वासां चित्तवृत्तीनां निरोधः न उक्तः, अतो योगलक्षणं सम्प्रज्ञातयोगे अपि गच्छति। सम्प्रज्ञातसमाधिः – वितर्कानुगतः विचारानुगतः आनन्दानुगतः अस्मितानुगतश्चेति चतुर्विधः। इन्द्रियग्राह्येषु स्थूलविषयेषु विराट्-पुरुष-चतुर्भुजादिस्थूलमूर्तिविषये च वृत्तिधारा भवति चेद् वितर्कानुगतः सम्प्रज्ञातसमाधिः भवति। स्थूलस्य कारणभूतेषु सूक्ष्मविषयेषु यदा वृत्तिधारा भवति तदा विचारानुगतः सम्प्रज्ञातसमाधिः भवति। स्थूलात् कार्यात् विचारद्वारा एव सूक्ष्मस्य कारणस्य ज्ञानं जायते इति हेतोः सूक्ष्मविषयकः सम्प्रज्ञातसमाधिः विचारानुगतो भवति। सात्त्विकाहंकाराद् उत्पन्नानि इन्द्रियाणि। इन्द्रियविषयकचित्तवृत्तौ सत्यां आनन्दानुगतः सम्प्रज्ञातसमाधिः भवति। तथाहि प्राणायामादिद्वारा शरीरं सुस्थिरं भवति चेत् शरीरे सुखमयो बोधः भवति, तादृशं सुखमात्रम् अवलम्ब्य ध्याने सति सानन्दः सम्प्रज्ञातः समाधिर्भवति। इन्द्रियाणाम् अस्मितापेक्षया स्थूलत्वम्, इन्द्रियाणाम् अस्मिताकार्यत्वात्।



अस्मितायाः ग्रहीतुर्वा विषये समाधिः अस्मितानुगतः सम्प्रज्ञातः समाधिः। एते चतुर्विधाः अपि समाधयः सालम्बनाः। एतेषु पुनः वितर्कानुगतः विचारानुगतश्च ग्राह्यविषयकौ, आनन्दानुगतः ग्रहणविषयकः, अस्मितानुगतो ग्रहीतृविषयकश्च।

सर्ववृत्तीनां निरोधे सति असम्प्रज्ञातसमाधिः भवति। असम्प्रज्ञातसमाधौ हि निरोधसंस्कारवशात् व्युत्थानसंस्कारेण वृत्तयो नोत्पद्यन्ते, अतः असम्प्रज्ञातसमाधिः संस्कारशेषः इत्युच्यते। अयञ्च समाधिः आलम्बनरहितः परवैराग्येण साध्यः। निरालम्बनत्वात् निर्विषयत्वात् च कर्मबीजस्य अभाववशात् अयं निर्बीजसमाधिः इत्यपि कथितो भवति। असम्प्रज्ञातसमाधिः द्विविधः भवप्रत्ययः उपायप्रत्ययश्चेति। अनयोः उपायप्रत्यय उत्कृष्टः, भवप्रत्ययस्तु निकृष्टः। विदेहानां देवानां, प्रकृतिलीनानां च समाधिः भवप्रत्ययः अविद्यामूलकः। योगिनां हि श्रद्धाद्युपायजन्यः। चतुर्विंशतेः जडतत्त्वानां उपासकाः हि विदेहाः प्रकृतिलीनाश्च भवन्ति। तथाहि मूलप्रकृतेः अव्यक्तस्य प्रकृतिविकृतीनां महत्तत्त्वस्य अहङ्कारस्य शब्द-स्पर्श-रूप-रस-गन्धाख्यानां सूक्ष्माणां पञ्चतन्मात्राणां च उपासकाः असम्प्रज्ञातसमाधौ सति प्रकृतिलीनाः भवन्ति। केवलविकृतीनां एकादशेन्द्रियाणां पञ्चस्थूलभूतानां च उपासकाः असम्प्रज्ञातसमाधौ सति विदेहाः भवन्ति। एतेषां समाधीनाम् अज्ञानमूलकत्वात् ऊर्ध्वलोकात् पुनः मोक्षलाभाय साधकानां पुनरावृत्तिः भवति। उच्यते च वायुपुराणे –

> दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।
> भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः।
> बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः।
> पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः।
> निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यते। इति।

इन्द्रियोपासकानां मुक्तिकालो हि दशमन्वन्तराणि, सूक्ष्मभूतोपासकानां शतमन्वन्तराणि, अहङ्कारोपासकानां सहस्रमन्वन्तराणि, बुद्ध्युपासकानां दशसहस्रमन्वन्तराणि, प्रकृत्युपासकानां च लक्षमन्वन्तराणि। निर्गुणपुरुषप्राप्तौ तु न पुनः प्रत्यावृत्तिः भवति। उपायप्रत्ययः असम्प्रज्ञातसमाधिस्तु योगिनां श्रद्धा-वीर्य-स्मृति-समाधि-प्रज्ञापूर्वकं भवति। उपायप्रत्ययः असम्प्रज्ञातसमाधिरेव कैवल्यजनको भवति।



## पाठगतप्रश्नाः २

९. योगशब्दस्य का व्युत्पत्तिः।

१०. योगशब्दस्य व्युत्पत्तिगतः अर्थः कः।

११. योगस्वरूपप्रत्यायकं पातञ्जलं सूत्रं किम्।

१२. चित्तवृत्तयः कति, काश्च ताः।

१३. चित्तभूमयः कति, काश्च ताः।



१४. एकाग्रभूमौ निरुद्धभूमौ च कीदृशः समाधिः भवति।

१५. का निरुद्धभुमिः।

१६. समाधिः कतिविधः, के च ते।

१७. कः सम्प्रज्ञातसमाधिः।

१८. सम्प्रज्ञातसमाधिः कतिविधः, के च ते।

१९. वितर्कानुगतः सम्प्रज्ञातसमाधिः कः।

२०. आनन्दानुगतः सम्प्रज्ञातसमाधिः कः।

२१. असम्प्रज्ञातसमाधिः कः।

२२. असम्प्रज्ञातसमाधिः कतिविधः, के च ते।

२३. को भवप्रत्ययसमाधिः।

२४. क उपायप्रत्ययः असम्प्रज्ञातसमाधिः।

## १३.४) चित्तवृत्तयः

चित्तवृत्तीनां निरोधे सति समाधिः भवति। चित्तवृत्तयो नाम चित्तस्य परिणामविशेषाः। यथा मृत्परिणामभूताः घटादयः तथा चित्तस्य अवस्थाविशेषा हि एताः चित्तवृत्तयः। योगशास्त्रे पञ्च चित्तवृत्तयः आलोचिताः। यदा ता मोक्षसहायिका भवन्ति तदा ता अक्लिष्टा इति, यदा च मोक्षविरोधिन्यो भवन्ति तदा क्लिष्टा इत्युच्यन्ते। पञ्च चित्तवृत्तयो हि – प्रमाणं, विपर्ययः, विकल्पः, निद्रा स्मृतिश्चेति। अतः योगसूत्रे पतञ्जलिना सूत्रितम् – 'वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः' (योगसूत्रम् – १.५) इति 'प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः' (योगसूत्रम् – १.६) इति च। एताः चित्तवृत्तयो हि ज्ञानात्मकाः। एतासां चित्तवृत्तीनाम् आलोचनम् अधो विधीयते।

प्रमायाः करणं हि प्रमाणम्। पुरुषप्रतिबिम्बसहिता असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः हि प्रमा। प्रमाणं हि असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः। सांख्यवद् योगमतेऽपि प्रमा प्रमाणम् उभयमपि ज्ञानात्मकं भवति। अतः घटप्रत्यक्षकाले यदा चक्षुरिन्द्रियं घटेन सम्बध्नाति तदा बुद्धिः चक्षुर्द्वारा घटेन सम्बन्धं लभते, घटाकारेण च परिणमते। एषा घटाकारा चित्तवृत्तिः एव प्रमाणम्। यदा च स्वच्छायां चित्तवृत्तौ पुरुषः प्रतिबिम्बते तदा घटाकारा चित्तवृत्तिः पुरुषप्रतिबिम्बविशिष्टा भवति। सा एव पुरुषप्रतिबिम्बविशिष्टा घटाकारा चित्तवृत्तिरेव घटविषयिणी प्रमा। तस्य स्वरूपं च - घटम् अहं जानामि इति। घटाकारा चित्तवृत्तिः हि घटज्ञानं, तद् घटज्ञानं तु प्रमाणम्। घटज्ञानेन सह यदा पुरुषस्य सम्बन्धः तदा घटमहं जानामि इति अहम्पदोक्तेन पुरुषेण सह सम्बद्धं ज्ञानं हि प्रमा भवति। वाचस्पतिमिश्रेण प्रमाणस्य लक्षणमुक्तं – "असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः" इति। वृक्षः कपिसंयोगवान् न वा इत्यादौ सन्देहे अतिव्याप्तिवारणाय असन्दिग्धेति। अविपरीतपदस्य अबाधितत्वम् अर्थः। भ्रमज्ञाने अतिव्याप्तिवारणाय पदमिदम् उपात्तम्। शुक्तिरजतादिभ्रमेषु रजतादिविषयाः उत्तरज्ञानेन बाधिता भवन्ति।



अतस्तेषां बाधितत्वं, न अबाधितत्वम्। अनधिगतपदं स्मृतौ अतिव्याप्तिवारणाय प्रदत्तम्। घटप्रत्यक्षकाले एव घटः अधिगतो भवति, अधिगतविषयस्य संस्कारात् अधिगतविषये स्मृतिर्भवति। अतः संशयस्य भ्रमस्य स्मृतेश्च न प्रमाणत्वम्। तच्च प्रमाणं त्रिविधं प्रत्यक्षम् अनुमानम् आगमश्चेति। सूत्रितं च पतञ्जलिना – प्रत्यक्षानुमानागमाः प्रमाणानि (योगसूत्रम् १.७) इति। तथाहि इन्द्रियसन्निकृष्टे वस्तुनि चित्तसम्बन्धवशात् या विशेषावधारणप्रधाना चित्तवृत्तिः जायते तत् प्रत्यक्षप्रमाणम्। यथा चक्षुरिन्द्रियसन्निकृष्टे घटे चित्तसम्बन्धवशात् या घटव्यक्त्यवधारणप्रधाना चित्तवृत्तिः जायते सा घटाकारचित्तवृत्तिः हि प्रत्यक्षप्रमाणम्। वह्न्यादीनां तुल्यजातीयेषु पर्वतादिपक्षसदृशेषु महानसादिषु सपक्षेषु विद्यमानो भिन्नजातीयेषु जलह्रदादिषु अवर्तमानः यः धूमवह्न्योः अविनाभावः सम्बन्धः तद्विषयिणी सामान्यावधारणप्रधाना वृत्तिः अनुमानम् इत्युच्यते। अतः पर्वतो वह्निमान् इति ज्ञानम् हि अनुमानं भवति। आप्तवाक्यात् तदर्थविषयिणी या वृत्तिरुत्पद्यते सा हि आगमप्रमाणम्। अतो वाक्यार्थविषयिणी वृत्तिरेवात्र आगमप्रमाणम् इति तात्पर्यम्।

बाधितविषयिणी चित्तवृत्तिरेव विपर्ययः। विपर्ययो नाम मिथ्याज्ञानम्, अस्मिन् ज्ञाने यः विषयो भवति स प्रमाणरूपेण उत्तरज्ञानेन बाधितो भवति। यथा रज्जौ भ्रमवशात् सर्पाकारा वृत्तिरेव विपर्ययवृत्तिः। सूत्रितं च – विपर्ययो मिथ्याज्ञानम् अतद्रूपप्रतिष्ठम् इति। शब्दज्ञानम् अनुसृत्य समुत्पन्नायां यस्यां चित्तवृत्तौ विषयो न तिष्ठति सा वस्तुशून्या चित्तवृत्तिरेव विकल्प इति कथ्यते। यथा शशशृङ्गादिशब्दम् आकर्ण्य तदाकारा वृत्तिर्जायते, परन्तु शशशृङ्गाख्यं वस्तु एव नास्ति। एषा एव चित्तवृत्तिः विकल्प इत्युच्यते। तथाहि योगसूत्रे - शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः इति। चित्तस्य यस्यामवस्थायां बहिरिन्द्रियजन्य-जाग्रद्वृत्तिः मनोजन्य-स्वप्नवृत्तिश्च न तिष्ठतः, तदा अभावप्रत्यय एव चित्तस्य आलम्बनं भवति। एवम् अभावप्रत्ययविषयिणी या चित्तवृत्तिः सा हि निद्रा। सूत्रितं च – अभावप्रत्ययालम्बना वृत्तिर्निद्रा इति। प्रमाणविपर्ययादिद्वारा अधिगतः पदार्थ एव विषयः यस्याः चित्तवृत्तेः सा हि स्मृतिः। संस्कारं द्वारीकृत्य अनुभवः स्मृतेः जनको भवति। तथा च योगसूत्रम् - अनुभूतविषयासम्प्रमोषः स्मृतिः इति। अभ्यासेन वैराग्येण च एतासां चित्तवृत्तीनां निरोधो भवति।



## पाठगतप्रश्नाः ३

२५. कदा चित्तवृत्तयः क्लिष्टा अक्लिष्टा वा भवन्ति।

२६. किं नाम प्रमाणम्।

२७. योगमते कति प्रमाणानि, कानि च तानि।

२८. का नाम प्रमा।

२९. किं नाम प्रत्यक्षप्रमाणम्।

३०. घटप्रत्यक्षस्थले प्रत्यक्षप्रमायाः किं रूपम्।

३१. को नाम विपर्ययः।



३२. विकल्पो नाम कः।

३३. निद्रा नाम का।

३४. का नाम स्मृतिः।

## १३.५) योगस्य अष्टाङ्गानि

सांख्यवद् योगमतेऽपि प्रकृतिः पुरुषश्चेति नित्यं तत्त्वद्वयम् अस्ति। प्रकृतेः बुद्धितत्त्वम् उत्पद्यते। पुरुषो हि असङ्गः चेतनो निष्क्रियश्च। जडायां बुद्धौ सुखदुःखादयः वर्तन्ते, सुखदुःखादीनाम् अभावोऽपि बुद्धेः एव भवति। यदा पुरुषः अविद्यावशाद् बुद्धितत्त्वेन सह तादात्म्यम् अनुभवति तदा बुद्धिगतानि सुखदुःखानि उपभुञ्जानः बद्धो भवति, यदा च पुरुषो बुद्ध्या सह स्वस्य भेदं जानाति तदा बुद्धिगतसुखदुःखानि नानुभवति। पुरुषः तदा स्वस्वरूपे प्रतिष्ठितो भवति, मुक्तश्च सञ्जायते। पुरुषो नित्यमुक्तः, तस्य स्वस्वरूपे स्थितिः एव मोक्षः। मोक्षे कारणं च बुद्धिपुरुषविवेकज्ञानम्। तदेव सत्त्वपुरुषान्यताख्यातिः सदसत्ख्यातिः विवेकधीः इत्यादिपदैः उच्यते। अस्याः विवेकख्यातेः साधनरूपेण अष्टाङ्गयोगस्य निरूपणं विधीयते योगशास्त्रे। तानि अष्टौ अङ्गानि तावत् – यमः नियमः आसनं प्राणायामः प्रत्याहारः धारणा ध्यानं समाधिश्चेति। एतेषां निरूपणम् अधो विधीयते।

**यमः** – अहिंसा-सत्यास्तेय-ब्रह्मचर्यापरिग्रहा यमाः इति पातञ्जलं सूत्रम्। अहिंसा नाम भूतानां प्राणहरणाद् विरतिः। सत्यं नाम यथार्था वाक् यथार्थं मनो वा। तथाहि प्रत्यक्षेण अनुमित्या आगमेन वा यज्ज्ञानं जायते तदनुसारमेव प्रयुक्तं भूतहितकरं वाक्यं सत्यं भवति। मनसोऽपि अभिप्रायः अयमेव स्यात् यद् यः अर्थः ज्ञातः, स एव अर्थः अपरस्य बुद्धौ भासेत इति। स्वस्य अभिप्रायान्तरवशात् अपरार्थबोधकं वाक्यं न सत्यं भवति। तस्मात् मनसः अपि अर्थानुयायित्वम् अभिप्रेत्य सत्यत्वम् उक्तम्। अतः अश्वत्थामा हत इति युधिष्ठिरवाक्यमपि सत्यं न भवति। भूतानाम् अहितकरं वाक्यमपि सत्यपदवाच्यं न भवति। स्तेयं हि अशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणम्। न स्तेयम् अस्तेयम्। मनसि वाक्ये कर्मणि वा परद्रव्ये स्पृहाभावः एव अस्तेयम्। चौर्याद् विरतिः एव अस्तेयम्। उपस्थस्य अन्येषामिन्द्रियाणां च संयमनं ब्रह्मचर्यम्। अष्टाङ्गमैथुनत्यागो वा ब्रह्मचर्यम्। उच्यते च दक्षमुनिना –

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
संकल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च।।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्। इति।

भोग्यविषयाणां असंग्रहः एव अपरिग्रहः। प्राणधारणार्थम् उपयुक्तं द्रव्यमात्रं संग्रहेद् योगी। भोग्यविषयाणां अर्जने रक्षणे क्षये च दुःखमेव जायते। अतो भोग्यविषयसंग्रहाद् विरतिः एव अपरिग्रहः। जाति-देश-काल-नियमान्तरादिभिः अनवच्छिन्ना यमाः महाव्रतम् इत्युच्यते।

**नियमः** - नियमविषये पातञ्जलं योगसूत्रं हि - 'शौच-सन्तोष-तपः-स्वाध्यायेश्वरप्रणिधानानि नियमाः' इति। शौचं द्विविधं बाह्यम् आभ्यन्तरञ्च। मृज्जलादिद्वारा शरीरप्रक्षालनं हि बाह्यं शौचम्।



आभ्यन्तरञ्च द्वेषासूयादीनां चित्तमलानां दूरीकरणम्। सन्तोषो नाम जीवनधारणाय यदुपकरणं लब्धमस्ति ततः अधिकस्य अनाकाङ्क्षा। सन्तोषो हि सुखमूलम्। उच्यते च 'सन्तोषादनुत्तमसुखलाभः' इति। तपो नाम शुभाशुभे सुखदुःखे शीतग्रीष्मे चेत्यादीनां द्वन्द्वानां सहनम्। कृच्छ्र-चान्द्रायणादिव्रतानि च तपःपदेन उच्यन्ते। उपनिषद्-गीता-प्रभृतीनां मोक्षशास्त्राणाम् अध्ययनम् ओंकारजपो वा स्वाध्यायः। परमगुरौ ईश्वरे सर्वेषां कर्मणां समर्पणं हि ईश्वरप्रणिधानम्।




**आसनम्** – यस्यां स्थितौ हि स्थिरतया सुखेन च दीर्घकालं स्थितिः सम्भवति तत् आसनं भवति। उच्यते च – 'स्थिरसुखम् आसनम्' इति। पद्मासनं वीरासनं स्वस्तिकासनं दण्डासनम् इत्यादीनि आसनस्य उदाहरणानि।

**प्राणायामः** – प्राणवायोः श्वासप्रश्वासयोः वा संयमनमेव प्राणायामः। सूत्रितं च – 'श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः' इति। तथाहि बाह्यस्य वायोः अन्तः ग्रहणं श्वासः, प्रश्वासश्च अन्तःस्थस्य वायोः बहिः निःसारणम्। तयोः गतिविच्छेदो नाम तयोः अभावः।

**प्रत्याहारः** – यदा चित्तम् एकाग्रं सत् शब्दादिविषयेभ्यः प्रतिनिवृत्तं भवति तदा इन्द्रियाणि अपि स्थिराणि भवन्ति, अयं स्वाभाविक इन्द्रियनिरोध एव प्रत्याहार इत्युच्यते। तथा च सूत्रम् – 'स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहार' इति।

**धारणा** - विषयान्तरात् प्रतिनिवृत्तस्य चित्तस्य नाभिचक्रादिदेशेषु देवतामूर्तिविशेषेषु लग्नता एव धारणा। सूत्रितं च – 'देशबन्धश्चित्तस्य धारणा' इति।



**ध्यानम्** – यत्र चित्तं स्थिरीकृतं भवति तत्र चित्तवृत्तेः एकतानता एव ध्यानम्। एवं प्रत्ययान्तरेण अनन्तरितः सदृशः प्रत्ययप्रवाहः एव ध्यानम्। सूत्रं च – 'तत्र प्रत्ययैकतानता ध्यानम्' इति।

**समाधिः** – ध्यानावस्था यदा परिपक्वा भवति, यदा च ध्यान-ध्यात्रोः प्रतिभासो न भवति ज्ञेयमात्रम् एव प्रतिभासते सा स्थितिः समाधिः इत्युच्यते। सूत्रितं च – 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति। अयं समाधिश्च योगाङ्गम्, सम्प्रज्ञातासम्प्रज्ञातसमाध्योः साधनभूतः अयम्। धारणा-ध्यान-समाधयः सम्प्रज्ञातसमाधेः अन्तरङ्गसाधनानि, असम्प्रज्ञातसमाधेश्च बहिरङ्गसाधनानि। विज्ञानभिक्षोः मते अस्मिन् योगाङ्गभूते समाधौ यत्र विषये चित्तम् एकाग्रं भवति तस्य विषयस्य एव प्रकाशो भवति, तस्य विषयस्य सर्वेषां धर्माणां साक्षात्कारो न भवति। सम्प्रज्ञातसमाधौ हि ध्येयस्य अशेषविशेषाणां साक्षात्कारो भवति। ततः परवैराग्योत्पत्तौ क्रमेण असम्प्रज्ञातसमाधिः सम्भवति।

## १३.६) ईश्वरस्वरूपम्

योगदर्शनं ईश्वरम् अङ्गीकुर्वत् सांख्यदर्शनाद् विलक्षणं भवति। योगदर्शने अतः ईश्वरम् अङ्गीकृत्य तत्त्वानि षड्विंशतिः भवन्ति। परवैराग्यप्राप्तेः अनन्तरं श्रद्धावीर्यादिपूर्वकम् असम्प्रज्ञातसमाधिः भवति। सा च समाधिः ईश्वरप्रणिधानेनापि सिध्यति। प्रणिधानं नाम भक्तिः। उच्यते च योगवार्त्तिके विज्ञानभिक्षुणा –

"कामतोऽकामतो वापि यत् करोमि शुभाशुभम्।
तत् सर्वं त्वयि सन्न्यस्तं त्वत्प्रयुक्तः करोम्यहम्।" इति।

ईश्वरप्रणिधानेन ईश्वराभिमुखीनता भवति। तेन च ईश्वरानुग्रहात् अन्तरायाणां दूरीकरणं समाधिलाभश्च सम्भवति।

ईश्वरः कः इति प्रश्ने सति उच्यते पतञ्जलिना – "क्लेश-कर्म-विपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इति। ईश्वरो हि पुरुषविशेषः, स च नित्यमुक्तः। बद्धः पुरुषो विवेकख्यातिप्राप्तेः अनन्तरं मुक्तः सन् ईश्वरो न भवति, ईश्वरस्य न कदापि बन्धः। ईश्वरस्य अविद्यास्मितादयः क्लेशाः न भवन्ति। धर्माधर्मादिरूपाणि कर्माणि, तेषां च फलानि जन्मायुर्भोगादयः न हि ईश्वरस्य भवन्ति। भोगानुकूलः संस्कारः आशयोऽपि न भवति ईश्वरस्य। एतादृशस्य ईश्वरस्य अनुग्रहेण बद्धपुरुषाणां समाधिः, समाधेश्च सकलदुःखानाम् आत्यन्तिकैकान्तिकध्वंसरूपो मोक्षः सिध्यति।

ईश्वरः सर्वज्ञः, तस्मिन् सर्वातिशायि ज्ञानं वर्तते। ईश्वरः कालेन च अनवच्छिन्नः। अतः कल्पादौ उत्पन्ना ब्रह्मादयः कालेन अवच्छिन्नाः। ईश्वरो हि तेषां ब्रह्मादीनां गुरुः। तस्य ईश्वरस्य वाचकः शब्दो भवति ओंकारः। प्रणवस्य जपेन प्रणवार्थस्य ईश्वरस्य च चिन्तनेन योगिचित्तम् एकाग्रं भवति। एवं प्रणवस्य जपात् प्रणवार्थस्य ईश्वरस्य च चिन्तनात् बद्धपुरुषस्य स्वरूपसाक्षात्कारः अन्तरायाभावश्च भवतः। योगान्तरायाश्च नव – व्याधिः स्त्यानं संशयः प्रमादः आलस्यं विरतिः भ्रान्तिदर्शनम् अलब्धभूमित्वम् अनवस्थितत्वं चेति। यद्यपि योगमते ईश्वरो न जगत्स्रष्टा तथापि उपास्यरूपेण मोक्षफलोपियोगिनः समाधेः प्रदातृरूपेण च तस्य वर्णनम् असकृद् योगशास्त्रे समुपनिबद्धम् इति शम्।





## पाठगतप्रश्नाः ४

३५. योगस्य अष्टाङ्गानि कानि।

३६. को नाम यमः।

३७. का नाम अहिंसा।

३८. अपरिग्रहो नाम कः।

३९. को नियमः।

४०. किं तावदासनम्।

४१. प्राणायामो नाम कः।

४२. कः प्रत्याहारः।

४३. का धारणा।

४४. ध्यानस्वरूपं लिखत।

४५. क ईश्वरः।

४६. क्लेशाः के।

४७. ईश्वरप्रणिधानं नाम किम्।



## पाठसारः

भारतीयास्तिकदर्शनेषु योगदर्शनम् अन्यतमम्। सांख्यदर्शनं योगदर्शनं च समानतन्त्रम्। योगदर्शनं सुप्राचीनम्। उपनिषत्सु अपि योगस्य उल्लेखो दरीदृश्यते। हिरण्यगर्भो हि योगस्य प्रथमो वक्ता। योगसूत्ररचनमाध्यमेन पतञ्जलिः दर्शनरूपेण अस्योपस्थापनम् अकरोत्। योगसूत्रस्योपरि व्यासस्य भाष्यं प्रसिद्धम्। पतञ्जलिप्रणीतस्य योगशास्त्रस्य अपरं नाम सांख्यप्रवचनम् इति।

योगपदस्य अर्थो हि समाधिः। समाधिपदेनात्र सम्प्रज्ञातासम्प्रज्ञातयोः बोधः। समाध्यर्थकयुज्धातोः करणे भावे च घञ्-प्रत्यये योगशब्दो सिध्यति। पतञ्जलिना सूत्रितं – योगश्चित्तवृत्तिनिरोध इति। चित्तवृत्तयश्च पञ्च – प्रमाणं विपर्ययः विकल्पः निद्रा स्मृतिश्चेति। एतासां चित्तवृत्तीनां निरोधः चित्तस्य सर्वासु भूमिषु भवति, परन्तु न हि ते सर्वे निरोधाः समाधिपदवाच्या भवन्ति। क्षिप्तं मूढं विक्षिप्तम् एकाग्रं निरुद्धम् चेति पञ्च चित्तभूमयः। एकाग्रभूमौ हि सम्प्रज्ञातसमाधिः भवति, निरुद्धभूमौ च असम्प्रज्ञातसमाधिः भवति।

यस्यां समाधौ ध्येयस्य यथार्थस्वरूपं प्रत्यक्षीक्रियते स हि सम्प्रज्ञातसमाधिः। अस्यां समाधौ ध्येयभिन्नवृत्तीनां निरोधो भवति, ध्येयाकारा एव वृत्तिर्भवति। सम्प्रज्ञातसमाधौ हि ज्ञातृ-ज्ञान-ज्ञेयरूपायाः



त्रिपुटेः बोधो भवति। स च सम्प्रज्ञातसमाधिः वितर्कानुगतः विचारानुगतः आनन्दानुगत अस्मितानुगतश्चेति चतुर्विधः। एते चतुर्विधा अपि समाधयः सालम्बनाः। एतेषु वितर्कानुगतः स्थूलविषयम् अवलम्बते, विचारानुगतश्च सूक्ष्मविषयम्। अतो हि एतौ ग्राह्यविषयकौ। आनन्दानुगतः इन्द्रियविषयकः, अतोऽयं ग्रहणविषयकः इति कथितः। अस्मितानुगतश्च ग्रहीतृविषयकः। सर्ववृत्तीनां निरोधे हि असम्प्रज्ञातसमाधिः भवति। अयं समाधिः आलम्बनरहितः परवैराग्येण साध्यः। निरालम्बनत्वात् निर्विषयत्वात् च कर्मबीजाभाववशात् समाधिरयं निर्बीजसमाधिः इत्यपि कथ्यते। असम्प्रज्ञातसमाधिः द्विविधः भवप्रत्यय उपायप्रत्ययश्चेति। देवानां प्रकृतिलीनानां च समाधिः भवप्रत्ययः, स च अविद्यामूलकः, अतो निकृष्टः उपायप्रत्ययात्। योगिनां श्रद्धाद्युपायजन्यः असम्प्रज्ञातसमाधिः उपायप्रत्ययनाम्ना व्यपदिश्यते।

सांख्यदर्शनवद् योगदर्शनेऽपि प्रकृतिपुरुषविवेकज्ञानादेव दुःखध्वंसरूपा मुक्तिः स्वीक्रियते। तां च सत्त्वपुरुषान्यताख्यातिं प्रकृतिपुरुषविवेकज्ञानं वा लब्धुम् अष्टाङ्गानाम् आचरणम् अपेक्षितम्। तानि च अङ्गानि तावत् – यमः नियमः आसनं प्राणायामः प्रत्याहारः धारणा ध्यानं समाधिश्चेति।

योगदर्शने ईश्वरः स्वीकृतः। स च ईश्वरः पुरुषविशेषः, तस्मिन् च क्लेश-कर्म-विपाकाशयसंस्पर्शो नास्ति। सूत्रितं च 'क्लेश-कर्म-विपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति। ईश्वरस्य प्रणिधानेन ईश्वरप्रसादे सति तत्कृपया समाधिलाभः, ततो मुक्तिश्च सम्भवति। तस्य ईश्वरस्य वाचको हि ओंकारः। ओंकारस्य जपेन ओंकारवाच्यस्य पुरुषस्य चानुचिन्तनेन बद्धपुरुषस्य स्वरूपसाक्षात्कारः योगान्तरायाभावश्च भवतः। तत्त्वलाभाय ये उपाया योगशास्त्रे उपदिष्टास्ते न्याय-वेदान्तादिदर्शनेषु अपि स्वीकृताः। अतो योगदर्शनस्य सर्वप्राचीनत्वं गुरुत्वं च सम्यक्तया ज्ञातुं शक्यते।



## पाठान्तप्रश्नाः

१. किं नाम सत्यम्।

२. योगवृत्तिः केन रचिता।

३. कः अस्मितानुगतः समाधिः।

४. कः विचारानुगतः सम्प्रज्ञातसमाधिः।

५. का नाम धारणा।

६. किं नाम ब्रह्मचर्यम्।

७. चित्तस्य विक्षिप्तभूमिः नाम का।

८. का नाम चित्तस्य मूढभूमिः।

९. सम्प्रज्ञातसमाधिः कस्यां चित्तभूमौ भवति।

१०. किं तावत् अनुमानं प्रमाणम्।

११. योगमते आगमप्रमाणं नाम किम्।



१२. चित्तवृत्तीनां निरोधः कथं भवति।

१३. अष्टाङ्गमैथुनानि कानि।

१४. किं तावत् महाव्रतम्।

१५. शौचं कतिविधम्।

१६. सन्तोषो नाम कः।

१७. किं तपः।

१८. कः स्वाध्यायः।

१९. ईश्वरप्रणिधानं नाम किम्।

२०. वितर्कानुगत-विचारानुगतौ किंविषयकौ।



## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि-१

१. सांख्यदर्शनम्।

२. योगदर्शने ईश्वरः अङ्गीक्रियते, बुद्धितत्त्वात् च पञ्च तन्मात्राणाम् उत्पत्तिः अङ्गीक्रियते।

३. हिरण्यगर्भः।

४. पतञ्जलिः।

५. शाण्डिल्योपनिषत्, योगराजोपनिषत्, हंसोपनिषत्, नादबिन्दूपनिषत्, ध्यानबिन्दूपनिषत् योगकुण्डल्युपनिषत् इत्यादयः।

६. व्यासेन रचितं, तच्च व्यासभाष्यनाम्ना प्रसिद्धम्।

७. सांख्यप्रवचनम्।

८. योगदर्शने समाधिपादः, साधनपादः, विभूतिपादः, कैवल्यपादश्चेति चत्वारः पादाः सन्ति।

### उत्तराणि-२

९. युज समाधौ इति युज्-धातोः करणे अधिकरणे च घञ्-प्रत्यये योगशब्दो निष्पद्यते।

१०. करणे घञा निष्पन्नस्य योगशब्दस्य सम्प्रज्ञातसमाधिः अर्थः, भावे घञा निष्पन्नस्य योगशब्दस्य असम्प्रज्ञातसमाधिः अर्थः।

११. योगश्चित्तवृत्तिनिरोधः इति।

१२. चित्तवृत्तयः पञ्च। ताश्च प्रमाणं विपर्ययः विकल्पः निद्रा स्मृतिश्चेति।

१३. चित्तभूमयः पञ्च – क्षिप्तं मूढं विक्षिप्तम् एकाग्रं निरुद्धं चेति।

१४. एकाग्रभूमौ सविकल्पसमाधिः, निरुद्धभूमौ च निर्विकल्पसमाधिः भवति।

१५. यस्यां भूमौ सर्वासां चित्तवृत्तीनां निरोधो भवति, संस्कारमात्रं चावशिष्यते सा हि निरोधभूमिः।



१६. समाधिः द्विविधः सम्प्रज्ञातः असम्प्रज्ञातश्चेति।

१७. यत्र समाधौ ध्येयस्य यथार्थस्वरूपं प्रत्यक्षीक्रियते ध्येयभिन्नचित्तवृत्तीनां च निरोधो भवति स हि सम्प्रज्ञातसमाधिः।

१८. सम्प्रज्ञातसमाधिः द्विविधः – वितर्कानुगतः, विचारानुगतः, आनन्दानुगतः अस्मितानुगतश्चेति।

१९. इन्द्रियग्राह्येषु स्थूलविषयेषु विराट्-पुरुष-चतुर्भुजादिस्थूलमूर्तिविषये समाधिः हि वितर्कानुगतः सम्प्रज्ञातसमाधिः।

२०. इन्द्रियविषये सम्प्रज्ञातसमाधिर्हि आनन्दानुगतः सम्प्रज्ञातसमाधिः।

२१. यत्र समाधौ निरोधसंस्कारवशात् व्युत्थानसंस्कारेण वृत्तयो नोत्पद्यन्ते सः संस्कारशेषः समाधिः हि असम्प्रज्ञातसमाधिः। अयं निर्बीजसमाधिरित्यपि कथितो भवति।

२२. असम्प्रज्ञातसमाधिः द्विविधः भवप्रत्ययः उपायप्रत्ययश्चेति।

२३. अव्यक्तादिचतुर्विंशतिजडतत्त्वविषयकः असम्प्रज्ञातसमाधिस्तु भवप्रत्ययः।

२४. श्रद्धाद्युपायवशात् यः असम्प्रज्ञातसमाधिर्भवति स उपायप्रत्ययः, स च मोक्षजनको भवति।

**उत्तराणि-३**

२५. यदा पञ्च चित्तवृत्तयो पुरुषस्य मोक्षसहायका भवन्ति तदा ता अक्लिष्टा, यदा च मोक्षविरोधिन्यः भवन्ति तदा ताः क्लिष्टा इत्युच्यन्ते।

२६. प्रमाणं नाम असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः।

२७. योगमते प्रत्यक्षम् अनुमानम् आगमश्चेति त्रीणि प्रमाणानि।

२८. प्रमाणजन्यः पौरुषेयो बोधो हि प्रमा।

२९. इन्द्रियसन्निकृष्टे विषये चित्तसम्बन्धवशात् या विषयव्यक्तेः अवधारणप्रधाना चित्तवृत्तिः जायते सा विषयाकारचित्तवृत्तिर्हि प्रत्यक्षप्रमाणम्।

३०. घटमहं जानामि इति।

३१. बाधितविषयिणी चित्तवृत्तिरेव विपर्ययः। सूत्रितं च – विपर्ययो मिथ्याज्ञानम् अतद्रूपप्रतिष्ठम् इति।

३२. शब्दज्ञानमनुसृत्य समुत्पन्नायां यस्यां चित्तवृत्तौ विषयो न तिष्ठति सा वस्तुशून्या चित्तवृत्तिरेव विकल्प इति कथ्यते। सूत्रितं च – शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति।

३३. अभावप्रत्ययालम्बना चित्तवृत्तिर्हि निद्रा।

३४. अनुभूतविषयस्यैव संस्कारजन्या चित्तवृत्तिः स्मृतिः इति कथ्यते। सूत्रितं च – अनुभूतविषयासम्प्रमोषः स्मृतिः इति।

**उत्तराणि-४**

३५. यमः नियमः आसनं प्राणायामः प्रत्याहारः धारणा ध्यानं समाधिश्चेति अष्टौ योगाङ्गानि।

३६. अहिंसा-सत्यास्तेय-ब्रह्मचर्यापरिग्रहा यमपदेन व्यपदिश्यन्ते।

३७. भूतानां प्राणहरणाद् विरतिर्हि अहिंसा।



३८. प्राणधारणोपयोगिद्रव्यातिरिक्तानां भोग्यविषयाणां संग्रहाभावः एव अपरिग्रहः।

३९. शौच-सन्तोष-स्वाध्यायेश्वरप्रणिधानानि नियमाः।

४०. यस्यां स्थितौ हि स्थिरतया सुखेन च दीर्घकालं स्थितिः सम्भवति तत् आसनम्। सूत्रितं च – स्थिरसुखम् आसनम् इति।

४१. प्राणवायोः श्वासप्रश्वासयोः वा संयमनमेव प्राणायामः। सूत्रितं च – श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः इति।

४२. यदा चित्तम् एकाग्रं सत् शब्दादिविषयेभ्यः प्रतिनिवृत्तं भवति तदा इन्द्रियाणि अपि स्थिराणि भवन्ति, अयं स्वाभाविक इन्द्रियनिरोध एव प्रत्याहार इत्युच्यते।

४३. विषयान्तरात् प्रतिनिवृत्तस्य चित्तस्य नाभिचक्रादिदेशेषु देवतामूर्तिविशेषेषु लग्नता एव धारणा।

४४. एकस्मिन् विषये प्रत्ययान्तरेण अनन्तरितः सदृशः प्रत्ययप्रवाहो हि ध्यानम्। सूत्रितं च – तत्र प्रत्ययैकतानता ध्यानम् इति।

४५. क्लेशकर्मविपाकाशयरहितः पुरुषविशेषो हि ईश्वरः।

४६. अविद्या-अस्मिता-राग-द्वेषाभिनिवेशाः पञ्च क्लेशाः।

४७. ईश्वरे भक्तिरेव ईश्वरप्रणिधाननाम्ना कथ्यते।

॥ इति त्रयोदशः पाठः ॥



१४

# मीमांसादर्शनम्

## प्रस्तावना-

भारतीयशास्त्रीयपरम्परायाम् बहूनि दर्शनानि आबहोः कालात् प्रसिद्धानि। तेषु मुख्यतः भागद्वयं विद्यते- आस्तिकदर्शनानि, नास्तिकदर्शनानि च। अत्र आस्तिकपदेन न ईश्वरस्य स्वीकारः अभिप्रेयते। यानि दर्शनानि वेदस्य प्रामाण्यम् अङ्गीकुर्वन्ति तानि आस्तिकदर्शनानि, यानि च दर्शनानि वेदस्य प्रामाण्यं न स्वीकुर्वन्ति तानि नास्तिकदर्शनानि इति उच्यन्ते। सांख्यं-योग-न्याय-वैशेषिक-पूर्वमीमांसोत्तरमीमांसाख्यानि षड् भारतीयानि आस्तिकदर्शनानि प्रसिद्धानि।

षट्सु भारतीयदर्शनेषु साक्षात् वेदम् आश्रित्य ये दर्शने प्रवृत्ते ते हि पूर्वमीमांसादर्शनम् उत्तरमीमांसादर्शनं च। मीमांसाशब्दस्य अर्थः पूजितविचारः। उत्तरमीमांसादर्शनं वेदान्तदर्शननाम्ना, पूर्वमीमांसादर्शनं च मीमांसादर्शननाम्ना प्रसिद्धिं गतम्। एतयोः मध्ये मीमांसादर्शनं कर्मकाण्डात्मकस्य वेदभागस्य विचाराय प्रवृत्तम्। अर्थात् वेदस्य कर्मकाण्डे विहितानां विषयाणां यत्र चर्चा भवति, यत्र च वेदविहितेषु विषयेषु संशये सति समाधानं लभ्यते तदेव पूर्वमीमांसादर्शनम्। धर्मजिज्ञासा एव तत्र मुख्यः विषयः। उत्तरमीमांसादर्शनं हि वेदान्तदर्शनत्वेन प्रसिद्धम्। तत्र ज्ञानकाण्डीयविषयाणाम् अर्थात् उपनिषत्प्रतिपादितविषयाणां विस्तरेण विचारो लभ्यते। ब्रह्मजिज्ञासा एव तत्र मुख्यः विषयः। अस्मिन् पाठे मीमांसादर्शनं नाम पूर्वमीमांसादर्शनम् इति ज्ञेयम्।

भारतीयदर्शनेषु वेदस्य मुख्यत्वात् तस्य किं दर्शनम् इति ज्ञानाय मीमांसादर्शनम् अवश्यं पठनीयम्। इदानीन्तने काले वैदिकानां यागयज्ञादीनां प्रचलनं तथा न अवलोक्यते। तस्मात् अस्मिन् दर्शनविषये अनेके अज्ञाः एव सन्ति। अपि च, अन्यदर्शनेषु आलोचितानां बहूनां विषयाणां सम्यक् ज्ञानाय मीमांसादर्शनमतम् अवश्यं ज्ञेयम्। किञ्च वेदान्तदर्शनम् अपि सम्यक् तदा एव अवबोध्यते यदा पूर्वमीमांसादर्शनं सम्यक् ज्ञातं स्यात्, यतो हि ते दर्शने समानतन्त्रे। तस्मात् मीमांसादर्शनम् अवश्यम् अध्येयम्।



## उद्देश्यानि

पाठस्यास्याध्ययनेन-

- पूर्वमीमांसकानां दर्शनविषये संक्षेपेण परिचयः लभ्यते।
- मीमांसकानां ग्रन्थविषये संक्षेपेण परिचयः लभ्यते।
- मीमांसकानां मते प्रमाणानि ज्ञायन्ते।



- नैयायिकस्वीकृतात् उपमानात् मीमांसकस्वीकृतस्य उपमानस्य भेदः ज्ञायते।
- प्रामाण्यविषये परिचयः लभ्यते।
- अभिहितान्वयवादविषये अन्विताभिधानविषये परिचयः लभ्यते।
- मीमांसास्वीकृतानां पदार्थानां परिचयः लभ्यते।
- वेदलक्षणविषये ज्ञानं भविष्यति।
- धर्मलक्षणविषये परिचयः लभ्यते।
- मीमांसकानां मते कः मोक्षः इति ज्ञायते।

## १४.१) मीमांसादर्शनस्य आचार्याः ग्रन्थाः च

प्रत्येकं भारतीयदर्शनानि ऋषिप्रणीतानि। मीमांसादर्शनस्य ऋषिः महर्षिः जैमिनिः। तस्य कालः प्रायः क्रिस्तपूर्वाब्दचतुर्थशताब्दी। तेन विरचितः द्वादशलक्षणीनाम्ना ग्रन्थः पूर्वमीमांसादर्शनस्य मुख्यः ग्रन्थः। अस्मिन् ग्रन्थे द्वादश अध्यायाः, ६० पादाः, २७४४ सूत्राणि च विलसन्ति। मीमांसादर्शनोपरि सङ्कर्षणकाण्डनाम्ना चतुरध्यायात्मकः ग्रन्थः तेन व्यरचि इति केचन वदन्ति। मीमांसासूत्रोपरि बहवः भाष्यग्रन्थाः रचिताः। तेषु शबरस्वामिनः शाबरभाष्यमेव सर्वप्राचीनमिति मन्यते। शबरस्वामिनः परवर्तिनि काले टीकाकारत्रयस्य नामानुसारेण मीमांसादर्शनस्य त्रयः सम्प्रदायाः समुद्भूताः। ते त्रयः टीकाकाराः हि- प्रभाकरमिश्रः, कुमारिलभट्टः, मुरारिमिश्रः चेति। प्रभाकरमिश्रस्य मतम् अनुसृत्य यः सम्प्रदायः स प्राभाकरसम्प्रदायः, कुमारिलभट्टस्य मतम् अनुसृत्य यः सम्प्रदायः स भाट्टसम्प्रदायः, एतत्सम्प्रदायद्वयमेव अधिकतया प्रसिद्धम्। एतौ सम्प्रदायौ विहाय मुरारेः तृतीयः पन्थाः इति मुरारिमिश्रस्यापि मिश्रसम्प्रदायः प्रसिद्धः आसीत्। परन्तु मिश्रसम्प्रदायस्य ग्रन्थाः इदानीं न उपलभ्यन्ते। प्राभाकरमतं गुरुमतम् इति नाम्ना प्रसिद्धम्। प्रभाकरमिश्रस्य शाबरभाष्योपरि बृहती लघ्वी चेति टीकाग्रन्थद्वयं विद्यते। प्राभाकरमतानुसारी शालिकनाथः प्रभाकरकृतायाः लघ्वीटीकायाः उपरि दीपशिखा इति, बृहतीटीकायाः उपरि च ऋजुविमला इति ग्रन्थद्वयं रचितवान्। शालिकनाथः प्राभाकरमतानुसारेण प्रकरणपञ्चिका इति प्रकरणग्रन्थम् अरचयत्। कुमारिलभट्टः शाबरभाष्यम् अवलम्ब्य श्लोकवार्तिकः तन्त्रवार्तिकः टुप्टीका चेति ग्रन्थत्रयं रचयामास। कुमारिलभट्टस्य शिष्यः मण्डनमिश्रः मीमांसानुक्रमणिका, विधिविवेकः, भावनाविवेकः, विभ्रमविवेकः इति ग्रन्थान् लिखितवान्। भाट्टमतानुसारेण लिखिताः पार्थसारथिमिश्रस्य शास्त्रदीपिका, गागाभट्टस्य भाट्टचिन्तामणिः, नारायणभट्टस्य मानमेयोदयः इत्यादिग्रन्थाः प्रसिद्धाः।

मीमांसकानाम् त्रयः सम्प्रदायाः सन्ति - भाट्टसम्प्रदायः, प्रभाकरसम्प्रदायः, मिश्रसम्प्रदायः चेति।



## १४.२) मीमांसादर्शने प्रमाणानि

दर्शनानां विचार्यविषयेषु अन्यतमानि भवन्ति प्रमाणानि। मीमांसादर्शनेऽपि प्रमाणानि आलोचितानि। दर्शने अस्मिन् षट् प्रमाणानि अङ्गीक्रियन्ते- प्रत्यक्षम् अनुमानम् उपमानं शब्दः अर्थापत्तिः अनुपलब्धिः चेति।

### १४.२.१) प्रत्यक्षम्

इन्द्रियसन्निकर्षजं प्रमाणं प्रत्यक्षमिति मानमेयोदये उच्यते। अत्र इन्द्रियसन्निकर्षम् इत्यनेन इन्द्रियार्थसन्निकर्षजम् इति बोद्धव्यम्। इन्द्रियेण सह यदा विषयस्य सन्निकर्षः भवति तदा प्रत्यक्षप्रमाणेन विषयस्य प्रत्यक्षं ज्ञानम् उत्पद्यते। तच्च प्रत्यक्षं ज्ञानं द्विविधं - सविकल्पकं निर्विकल्पकं चेति। इन्द्रियेण सह विषयस्य सन्निकर्षात् अव्यवहितं परम् एव विषयस्य यत् अस्पष्टं ज्ञानं जायते तत् निर्विकल्पं ज्ञानम् इति उच्यते। अस्मिन् ज्ञाने विषयस्य अस्पष्टतया ज्ञानं भवति इति कारणात् एतत् सम्मुग्धज्ञानम् अस्पष्टज्ञानम् वा इति कथ्यते। तथाहि कुमारिलभट्टेन श्लोकवार्तिके उच्यते - “अस्ति हि आलोचनं ज्ञानं प्रथमं निर्विकल्पम्” इति। यथा घटदर्शने घटत्ववर्जितस्य घटमात्रस्य यत् ज्ञानं तत् निर्विकल्पकं ज्ञानम्। निर्विकल्पस्य प्रत्यक्षस्य अनन्तरं विशेषरूपेण वस्तुनः यत् ज्ञानं भवति तत् सविकल्पकं ज्ञानम् इत्युच्यते। निर्विकल्पं ज्ञानं न स्वीक्रियते चेत् सविकल्पं ज्ञानं न स्वीकर्तुं शक्यते। सविकल्पज्ञानस्य उपपत्तये एव निर्विकल्पं ज्ञानं स्वीकर्तव्यम्। सविकल्पे प्रत्यक्षे विषयस्य सुस्पष्टतया ज्ञानं भवति इति कारणात् सविकल्पकं प्रत्यक्षं व्यक्तज्ञानं स्पष्टज्ञानं वा इति कथ्यते। सविकल्पकज्ञाने विशिष्टस्य विषयस्य ज्ञानं भवति, यथा घटज्ञाने सति घटत्वविशिष्टस्य घटस्य ज्ञानं भवति।

### १४.२.२) अनुमानम्

न्यायदर्शने यत् अनुमानप्रमाणं स्वीक्रियते मीमांसकानाम् अनुमानप्रमाणम् अपि तादृशम् एव। अनुमानविषये ज्ञानात् प्राक् व्याप्तिविषये किञ्चित् ज्ञेयम् अन्यथा अनुमानप्रमाणं ज्ञातुं नैव शक्यते। का नाम व्याप्तिः इति चेत् एकेन वस्तुना सह अन्यस्य वस्तुनः साहचर्येण अवस्थितिः व्याप्तिः इति उच्यते। तथाहि - यत्र यत्र धूमः तिष्टति, तत्र तत्र वह्निः तिष्ठति इति धूमवह्न्योः व्याप्तिः। अत्र व्याप्यः धूमः, व्यापकः वह्निः। अतः धूमवह्न्योः व्याप्यव्यापकः सम्बन्धः विद्यते। अयं व्याप्यव्यापकसम्बन्धः भूयोदर्शनात् निश्चीयते। महानसादिषु पुनः पुनः धूमवह्न्योः साहचर्यं दृश्यते। इत्थं साहचर्यस्य दर्शनात् तयोः व्याप्तिः निश्चिता भवति। यदा व्याप्तिः निश्चिता भवति तदा पर्वतादिषु केवलं धूमं दृष्ट्वा यत्र यत्र धूमः तत्र तत्र वह्निः इति व्याप्तिम् अनुस्मरन् कश्चित् अनुमानं करोति यत् यस्मात् पर्वते धूमः अस्ति तस्मात् पर्वते अग्निः निश्चयेन विद्यते अर्थात् पर्वतो वह्निमान् इति। पर्वतो वह्निमान् इति ज्ञानं येन प्रमाणेन जायते तत् अनुमानम्। तथाहि उच्यते - व्याप्यदर्शनाद् असन्निकृष्टार्थज्ञानम् अनुमानम् इति। अस्यार्थः - येन प्रमाणेन व्याप्तिविशिष्टस्य पदार्थस्य ज्ञानात् इन्द्रियासन्निकृष्टस्य विषयस्य ज्ञानम् उत्पद्यते तत् अनुमानप्रमाणम् इति उच्यते। पर्वते धूमः प्रत्यक्षप्रमाणेन गृह्यते, परन्तु अग्निः इन्द्रियस्य असन्निकृष्टत्वात् न प्रत्यक्षेण ग्रहीतुम् शक्यते। तत्तु अनुमानेन गृह्यते। अनुमानशरीरं हि - पर्वतः धूमवान् वह्निमत्त्वात् इति।



व्याप्तिः हि द्विविधा - अन्वयव्याप्तिः व्यतिरेकव्याप्तिश्च। साधनस्य सद्भावे साध्यस्य सद्भावः अन्वयव्याप्तिः इति उच्यते। साध्यस्य अभावे साधनस्य अभावः व्यतिरेकव्याप्तिः इति उच्यते।

मीमांसकाः भिन्नदृष्ट्या अनुमानं बहुधा विभजन्ते। तथाहि अनुमानं त्रिविधम् - अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति। पुनश्च अनुमानं द्विविधम् - वीतम् अवीतं चेति। वीतं पुनः द्विविधम्- दृष्टम्, सामान्यतो दृष्टम् चेति। स्वार्थानुमान-परार्थानुमानभेदेन पुनः अनुमानं द्विविधम्।

प्रभाकरमते धूमेन सह वह्नेः सम्बन्धः एकवारं निश्चितः भवति चेदेव व्याप्तेः निश्चयः भवति। भूयोदर्शनं केवलम् उपाधेः आशङ्कानिवृत्त्यर्थम्। मानमेयोदयकारमते व्याप्तिः हि एकः स्वाभाविकः सम्बन्धः। स्वाभाविकः इत्यस्य अर्थः उपाधिरहितः। तेन व्याप्तिः एकः उपाधिरहितः सम्बन्धः इति ज्ञायते।

अनुमानशरीरविषये नैयायिकाः यथा प्रतिज्ञा हेतुः उदाहरणम् उपनयः निगमनम् इति पञ्चावयवं न्यायं स्वीकुर्वन्ति, मीमांसकः तथा न अङ्गीकुर्वन्ति। तेषां मते अवयवत्रयस्य स्वीकारे सति कार्यसिद्धेः पञ्चावयवस्वीकारेण नास्ति प्रयोजनम्। तस्मात् मीमांसकाः आदिमम् अवयवत्रयम्, अथवा अन्तिमम् अवयवत्रयम् स्वीकुर्वन्ति।

### १४.२.३) शब्दः

अनुमानप्रमाणात् अनन्तरं शब्दप्रमाणम् अङ्गीकुर्वन्ति मीमांसकाः। मीमांसकानां मते शब्दप्रमाणं सर्वप्रमाणापेक्षया गुरुत्वपूर्णम्। आप्तवाक्यं हि शब्दः। कस्यचित् वाक्यस्य अन्तर्गतानां पदानाम् अर्थबोधात् अनन्तरं प्रत्यक्षेण अज्ञातस्य अर्थस्य ज्ञानं भवति, तत् शाब्दं ज्ञानम् इति उच्यते। तथाहि उच्यते -

तत्र तावत् पदैर्ज्ञातैः पदार्थस्मरणे कृते।<br>
असन्निकृष्टवाक्यार्थज्ञानं शाब्दमितीर्यते। इति।

शाब्दज्ञाने पदार्थज्ञानं हि करणं, वाक्यार्थस्य अवबोधस्तु फलम्। शब्दप्रमाणं द्विविधम् - पौरुषेयम् अपौरुषेयं चेति। मीमांसकानां मते आप्तवाक्यं पौरुषेयं, वेदवाक्यं तु अपौरुषेयम्। प्रभाकरमते वैदिकं वाक्यमात्रं प्रमाणम्। पुरुषवाक्ये तु दोषाः भवन्ति एव, तस्मात् न पौरुषेयवाक्यानि प्रमाणपदवीं भजन्ते। तथाहि उच्यते -

अपौरुषेये वेदे तु पुरुषस्पर्शसङ्गतः।<br>
कलङ्को न विशङ्क्येत तत् कुतो व्यभिचारिता। इति।

अस्यार्थः - पुरुषदोषाः अपौरुषेये वेदे न शङ्कितुं शक्याः, तस्मात् अपौरुषेयस्य वेदस्य एव प्रामाण्यम्, व्यभिचाराणाम् अभावात्।

शाब्दज्ञानं पुनः द्विविधम् - सिद्धार्थवाक्यं विधायकवाक्यं चेति। यदा कस्माच्चित् वाक्यात् सिद्धस्य अर्थस्य ज्ञानं भवति तदा तत् सिद्धार्थं वाक्यम् इति उच्यते। यथा - अयं तव पुत्रः इति वाक्यं सिद्धार्थवाक्यम्। अस्मिन् वाक्ये सिद्धस्य अर्थस्य प्रतिपादनं विद्यते, न तु इदं कर्तव्यम् इति



क्रियानुष्ठानस्य। यदा कस्माच्चित् वाक्यात् क्रियानुष्ठानस्य निर्देशः लभ्यते तदा तद् विधायकं वाक्यम् इति उच्यते। यथा - स्वर्गकामो यजेत इति वाक्यं विधायकं वाक्यम्। अस्मिन् वाक्ये निर्देशः लभ्यते यत् - यः स्वर्गं कामयते स यागं कुर्यात् इति। तस्मात् इदं विधायकं वाक्यम्।

## १४.२.४) उपमानम्

मीमांसादर्शने उपमानं स्वतन्त्रं प्रमाणम् इति स्वीकृतम्। सादृश्यज्ञानम् उपमितिः, तस्य करणम् उपमानम्। अर्थात् सादृश्यज्ञानम् येन प्रमाणेन निश्चितं भवति तत् उपमानम् इति उच्यते। तथाहि कश्चित् गोनामकं प्राणिनं जानाति, परन्तु गवयनामकं प्राणिनं न जानाति। गवयः कीदृशः इति ज्ञानाय स उपदिष्टः यत् - गोसदृशः गवयः इति। तदा स अरण्ये गोसदृशं प्राणिनं दृष्ट्वा गोसदृशः गवयः इति उपदेशं स्मरन् अरण्यदृष्टे प्राणिनि पूर्वज्ञातगोसादृश्यं च पश्यन् पूर्वदृष्टे गवि गवयसादृश्यं निश्चिनोति। एवं पूर्वदृष्टः गौः एतद्गवयसदृशः इति पूर्वदृष्टे गवि गवयसादृश्यस्य ज्ञानम् उपमितिः इति उच्यते। उपमितेः करणम् उपमानं प्रमाणम् इति कारणात् गवये गोसादृश्यस्य दर्शनम् उपमानं प्रमाणम्। गवि च गवयसादृश्यस्य निश्चितं ज्ञानम् उपमितिः, अर्थात् उपमानस्य फलम्। तस्मात् उच्यते मानमेयोदये -

गवयस्थितसादृश्यदर्शनं करणं भवेत्।
फलं गोगतसादृश्यज्ञानमित्यवगम्यताम्। इति।

न्यायदर्शने अपि उपमानं स्वतन्त्रप्रमाणत्वेन स्वीक्रियते। परन्तु नैयायिकानाम् उपमानात् मीमांसकानाम् उपमाने अस्ति भेदः। तथाहि - न्यायदर्शनमते मीमांसादर्शनमते च गवये गोसादृश्यस्य दर्शनम् उपमानम्, परन्तु उपमानात् अनन्तरं 'पूर्वदृष्टः गौः एतद्गवयसदृशः' इति पूर्वदृष्टे गवि गवयसादृश्यस्य ज्ञानम् उपमितिः इति मीमांसादर्शनस्य मतम्। नैयायिकमते तु उपमानात् अनन्तरं 'गवयत्वविशिष्टः पशुः गवयपदवाच्यः' इति ज्ञानम् उपमितिः।

## १४.२.५) अर्थापत्तिः

मीमांसादर्शने अद्वैतवेदान्तदर्शने च अर्थापत्तिः स्वतन्त्रतया प्रमाणत्वेन अङ्गीक्रियते। अर्थापत्तिशब्देन अर्थापत्तिप्रमा अर्थापत्तिप्रमाणं च अवगम्यते। अर्थापत्तिशब्दस्य व्युत्पत्तिः अर्थस्य आपत्तिः इति स्वीक्रियते चेत् अर्थापत्तिशब्दः यथार्थज्ञानं बोधयति, अर्थस्य आपत्तिः यस्मात् इति व्युत्पत्तिः स्वीक्रियते चेत् अर्थापत्तिशब्दः प्रमाणं बोधयति। मानमेयोदये उच्यते - ‘अन्यथानुपपत्त्या यदुपपादककल्पनम् तदर्थापत्तिः इत्येवं लक्षणं भाष्यभाषितम्’ इति। अस्यार्थः - यदा किञ्चित् अन्यरूपेण न उपपद्यते, तदा तस्य व्याख्यानाय यद् उपपादकं कल्प्यते तत् अर्थापत्तिप्रमाणेन इति वेदितव्यम्। 'उपपाद्यज्ञानेन उपपादककल्पनम् अर्थापत्तिः' इति अर्थापत्तेः लक्षणं कृतं वेदान्तपरिभाषाकारेण लौगाक्षिभास्करेण। अत्र उपपाद्यज्ञानं करणम्, उपपादककल्पनं फलम्। तथाहि - स्थूलः देवदत्तः दिवा न भुङ्क्ते इति वाक्यात् दिवि अभुञ्जानस्य देवदत्तस्य स्थूलत्वं न उपपद्यते इति कारणात् तस्य स्थूलत्वस्य उपपत्तये रात्रिभोजनम् कल्प्यते। एतत् रात्रिभोजनज्ञानम् न प्रत्यक्षेण नापि अनुमानेन ग्रहीतुं शक्यते इति कारणात् अर्थापत्तिप्रमाणेन इदं स्वीक्रियते इति अङ्गीकर्तव्यम्। अत्र उपपाद्यं तावत् दिवा अभुञ्जानस्य देवदत्तस्य स्थूलत्वम्, उपपादकं च रात्रिभोजनम् इति।



अनुमाने व्याप्तिबोधकं वाक्यम् अपेक्षते, परन्तु अर्थापत्तौ व्याप्तिवाक्यस्य याथार्थ्यं नास्ति, तस्मात् अर्थापत्तिप्रमाणम् अनुमाने न अन्तर्भवति। तथाहि- स्थूलः देवदत्तः दिवा न भुङ्क्ते इति वाक्यात् यदि वाप्तिवाक्यम् इत्थं स्वीक्रियते - ये दिवा न भुञ्जानाः स्थूलाः ते रात्रिभोजिनः इति तर्हि योगिसिद्धपुरुषादिषु व्यभिचारदोषः भवति। योगिनः सिद्धपुरुषाः च दिवा रात्रौ न भुञ्जानाः अपि स्थूलाः भवन्ति। अतः व्याप्तिज्ञानाभावात् अर्थापत्तिः न अनुमाने अन्तर्भवति।

अर्थापत्तिः द्विविधः - दृष्टार्थापत्तिः श्रुतार्थापत्तिः चेति। दृष्टस्य अर्थस्य उपपत्तये यदा अन्यार्थकल्पना क्रियते तदा सा दृष्टार्थापत्तिः इति उच्यते। तथाहि - जीवितः देवदत्तः गृहे नास्ति इति दृष्ट्वा सः गृहात् बहिः अस्ति इति कल्पना क्रियते, इयम् दृष्टार्थापत्तिः। यदा पुनः वाक्यस्य कश्चित् अंशं श्रुत्वा अर्थसिद्धये अन्यार्थकल्पना क्रियते तदा श्रुतार्थापत्तिः इति कथ्यते। तथाहि- 'द्वारम्' इति शब्दमात्रं श्रुत्वा समीपस्थितः जनः 'पिधेहि' इति शब्दम् अध्याहृत्य व्यवहारं करोति। इयं श्रुतार्थापत्तिः।




## १४.२.६) अनुपलब्धिः

भाट्टमीमांसादर्शने अद्वैतवेदान्तदर्शने च अनुपलब्धिः स्वतन्त्रतया प्रमाणत्वेन अङ्गीक्रियते। तेषां मते अनुपलब्धिप्रमाणेन अभावस्य ज्ञानम् भवति। नैयायिकाः अनुपलब्धिं पृथक् प्रमाणत्वेन न अङ्गीकुर्वन्ति। तेषां मते प्रत्यक्षप्रमाणेन एव अभावस्य ज्ञानं सम्भवति, तस्मात् अनुपलब्धिः पृथक्तया न अङ्गीकर्तव्या। प्राभाकरमीमांसकानां मते अभावः स्वतन्त्रः पदार्थः नास्ति, अभावः हि अधिकरणस्य स्वरूपः, अधिकरणात् च अभिन्नः। तस्मात् अभावग्रहणाय पृथक् प्रमाणं नाङ्गीकर्तव्यम् इति। परन्तु भाट्टमीमांसकाः अद्वैतवेदान्तिनः च अनुपलब्धिं प्रमाणत्वेन स्वीकुर्वन्ति। ते कथयन्ति यत् भावपदार्थग्रहणाय प्रत्यक्षादिप्रमाणानि प्रयुज्यन्ते, न तु अभावग्रहणाय। तस्मात् अभावग्रहणाय अनुपलब्धिप्रमाणम् अङ्गीकर्तव्यम् इति।

मानमेयोदये अनुलब्धेः लक्षणम् उच्यते -

'अथोपलम्भनयोग्यत्वे सत्यप्यनुपलम्भनम्।
अभावाख्यं प्रमाणं स्यादभावस्यावबोधकम्। ' इति।

अस्यार्थः - यदि किञ्चित् वस्तु इन्द्रियैः प्रत्यक्षयोग्यं सत् अपि तत् प्रत्यक्षं न भवति, तर्हि अप्रत्यक्षेण तस्य वस्तुनः अभावस्य ज्ञानम् भवति इति। एवम् अस्य अभावस्य ज्ञानं येन प्रमाणेन भवति तत् अनुपलब्धिप्रमाणम् अभावप्रमाणं वा इति। तथाहि - भूतले घटः नास्ति इति दृष्टे चक्षुरिन्द्रियेण ग्रहीतुं योग्यस्य घटस्य अदर्शनात् घटाभावस्य ज्ञानम् अनुपलब्धिप्रमाणेन जायते।

इत्थं संक्षेपेण मीमांसादर्शने स्वीकृतानि षट् प्रमाणानि निगदितानि।

**प्रमाणम्**

| | | | | |
|---|---|---|---|---|
| १. | **प्रत्यक्षम्** | १. सविकल्पकम् | २. निर्विकल्पकम् | |
| २. | **अनुमानम्** | १. केवलान्वयि | २. अन्वयव्यतिरेकि | ३. केवलव्यतिरेकि |
| ३. | **शब्दः** | १. पौरुषेयम् | २. अपौरुषेयम् | |
| ४. | **उपमानम्** | | | |
| ५. | **अर्थापत्तिः** | १. दृष्टार्थापत्तिः | २. श्रुतार्थापत्तिः | |
| ६. | **अनुपलब्धिः** | | | |



## पाठगतप्रश्नाः-१

१. कति भारतीयानि आस्तिकदर्शनानि सन्ति।
   क) चत्वारि   ख) पञ्च   ग) षट्   घ) सप्त
२. उत्तरमीमांसादर्शनस्य नामान्तरं किम्।
३. जैमिनिना प्रणीतस्य पूर्वमीमांसादर्शनग्रन्थस्य नाम किम्।
४. अनुपलब्धिप्रमाणं किमर्थं स्वीक्रियते।
   क) भावपदार्थग्रहणाय   ख) अभावपदार्थग्रहणाय
५. मीमांसकाः अनुमानवाक्ये कति अवयवान् स्वीकुर्वन्ति।
   क) त्रीन्  ख) चतुरः   ग) पञ्च  घ) सप्त
६. प्रत्यक्षं कतिविधम्। नामानि लिखत।
७. अर्थापत्तिः कतिधा। नामानि लिखत।
८. वेदान्तपरिभाषाकारमते अर्थापत्तेः लक्षणं किम्।



## १४.३) मीमांसादर्शने प्रामाण्यविचारः

प्रमाणविचारात् अनन्तरं प्रमाणानां प्रामाण्यविषये विचारः करिष्यते। ज्ञानं हि द्विविधं यथार्थज्ञानम्, अयथार्थज्ञानं चेति। यथार्थज्ञानं हि प्रमा, अयथार्थज्ञानं हि अप्रमा इति उच्यते। ज्ञानं प्रमा भवति चेत् तत्र प्रमाणस्य प्रामाण्यं तिष्ठति, ज्ञानम् अयथार्थं भवति चेत् तत्र प्रमाणस्य अप्रामाण्यं तिष्ठति। परन्तु ज्ञानस्य प्रामाण्यम् अप्रामाण्यं वा कथम् उत्पद्यते, कथं वा ज्ञायते इति विषयम् आश्रित्य भारतीयदर्शनसम्प्रदायेषु मतद्वयम् उद्भूतम्- स्वतःप्रामाण्यवादः, परतःप्रामाण्यवादः चेति। प्रामाण्यं स्वतः उत परतः इति विषये दार्शनिकानां मतभेदो विद्यते।

सांख्याः प्रामाण्यम् अप्रामाण्यं च स्वतः भवति इति वदन्ति; नैयायिकाः प्रामाण्यम् अप्रामाण्यं च परतः भवति इति निगदन्ति; बौद्धमते अप्रामाण्यं स्वतः, प्रामाण्यं तु परतः भवति; मीमांसकानां मते प्रामाण्यं स्वतः, अप्रामाण्यं तु परतः भवति इति। तथाहि उच्यते सर्वदर्शनसंग्रहे -

प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः।
नैयायिकास्ते परतः सौगताश्चरमं स्वतः।
प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः।
प्रमाणं स्वतः प्राहुः परतश्चाप्रमाणताम्। इति।

### १४.३.१) स्वतःप्रामाण्यं परतः च अप्रामाण्यम्

त्रयः एव मीमांसकाः स्वतःप्रामाण्यवादिनः। एतेषां मते यैः कारणैः ज्ञानस्य उत्पत्तिः भवति, तैः एव कारणैः ज्ञानस्य प्रामाण्यम् अपि उत्पद्यते। तथाहि येन सामग्रीबलेन घटज्ञानस्य उत्पत्तिः भवति, तेनैव सामग्रीबलेन घटज्ञानस्य प्रमात्वस्य उत्पत्तिः अपि भवति। ज्ञानस्य प्रमात्वस्य उत्पत्तिः ज्ञानसामग्रीम् अन्तरेण अन्यत् कारणं न अपेक्षते। अपि च येन ज्ञानं ज्ञायते तेन एव ज्ञानस्य प्रमात्वम् अपि ज्ञायते। तस्मात् ज्ञानस्य प्रामाण्यं स्वतः एव उत्पद्यते ज्ञायते च। परन्तु ज्ञानस्य अप्रामाण्यं ज्ञानसामग्रीम् विना अन्यत् कारणम् अपेक्षते इति कारणात् अप्रामाण्यं स्वतः न निश्चीयते अपि तु परतः निश्चीयते।

## १४.४) अभिहितान्वयवादः अन्विताभिधानवादः च

पदैः अर्थज्ञानस्य पद्धतिः का इति विषये मीमांसकसम्प्रदाये मतद्वयं प्रसिद्धम् - कुमारिलभट्टस्य अभिहितान्वयवादः, प्रभाकरस्य अन्विताभिधानवादः चेति। अभिहितान्वयवादिनां मते एकस्मिन् वाक्ये प्रयुक्तानां पदानाम् अर्थज्ञानम् आदौ भवति, ततः वाक्ये तेषाम् अन्वयः भवति। पदैः अभिहितस्य अर्थस्य वाक्ये अन्वयः स्वीक्रियते इति कारणात् एते अभिहितान्वयवादिनः। अन्विताभिधानवादिनां मते पदानाम् वाक्ये अन्वयात् अनन्तरम् अभिहितस्य अर्थस्य ज्ञानं भवति, अर्थात् पदानि परस्परं वाक्यान्वितानि सन्ति अर्थज्ञानं जनयन्ति, न तानि पृथक्तया अर्थबोधाय समर्थानि। पदानाम् अन्वयात् अनन्तरम् अभिहितस्य अर्थस्य बोधः स्वीक्रियते इति कारणात् एते अन्विताभिधानवादिनः।

## १४.५) पदार्थाः

कुमारिलभट्टस्य प्रभाकरस्य च मते द्वौ एव पदार्थौ - प्रमाणं प्रमेयं च इति। एतयोः मध्ये प्रमाणानाम् आलोचनम् अस्माभिः पूर्वमेव कृतम्। प्रमाणानां संख्याविषये यथा कुमारिलेन सह प्रभाकरस्य मतभेदः विद्यते, तथैव प्रमेयानां संख्याविषये अपि उभयोः मतपार्थक्यं विद्यते। भाट्टमते प्रमेयाः पञ्च – द्रव्यं जातिः गुणः क्रिया अभावः चेति। प्राभाकरमते तु प्रमेयाः अष्ट – द्रव्यं गुणः कर्म सामान्यं समवायः शक्तिः संख्या सादृश्यं चेति। परिमाणाश्रयत्वं द्रव्यत्वमिति द्रव्यस्य लक्षणम्। भाट्टमते एकादश द्रव्याणि - पृथिवी, जलं, तेजः, वायुः, तमः, आकाशः, कालः, दिक्, आत्मा, मनः, शब्दः चेति।

जातिः व्यक्तौ अवस्थिता, नित्या, प्रत्यक्षविषया, व्यक्तितः च भिन्नाभिन्ना। कुमारिलभट्टमते जातिः व्यक्तौ तादात्म्यसम्बन्धेन तिष्ठति। अस्मिन् मते समवायः न स्वीक्रियते। प्राभाकराः समवायसम्बन्धम् आश्रित्य जाति-जातिमतोः सामानाधिकरण्यं व्याख्यान्ति। एते जाति-जातिमतोः तादात्म्यसम्बन्धं न अङ्गीकुर्वन्ति। अपि च, एते नैयायिकस्वीकृतं समवायसम्बन्धम् अङ्गीकुर्वन्ति।

कुमारिलभट्टः अभावम् पदार्थत्वेन अङ्गीकरोति, परन्तु प्रभाकरः अभावम् अतिरिक्तपदार्थत्वेन नाङ्गीकरोति। भाट्टमते अनुपलब्धिप्रमाणेन अभावः गृह्यते। प्रभाकरमते '**अभावाख्यः पदार्थस्तु नास्ति**' इति। एतस्य मते अभावः अधिकरणस्वरूपः।

## १४.६) धर्मलक्षणम्

मीमांसादर्शने विचार्यविषयः तावत् धर्मः इति। मीमांसादर्शनस्य प्रणेता आचार्यः जैमिनिः द्वादशलक्षणीग्रन्थस्य प्रारम्भे सूत्रं प्रणिनाय "अथातो धर्मजिज्ञासा" इति। तस्मात् मीमांसादर्शनानुसारेण कः नाम धर्मः इति ज्ञातव्यम्। धर्मविषये मीमांसासूत्रं हि "चोदनालक्षणोऽर्थो धर्मः" इति। यद्यपि चोदनापदस्य अर्थः प्रेरकत्वम् तथापि अत्र चोदनापदस्य अर्थः विधिरूपः वेदः। तस्मात् वेदे यत् कर्तव्यत्वेन प्रतिपाद्यते स एव धर्मः इति ज्ञातव्यम्। अर्थसंग्रहकारस्य लौगाक्षिभास्करस्य मते यागादिरेव धर्मः। धर्मस्य लक्षणं हि - वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः इति। वेदेन प्रतिपाद्यते यः विषयः, यश्च प्रयोजनवान् (अर्थवान्) भवति स धर्मः। तथाहि भोजनं यद्यपि प्रयोजनवत् तथापि तत् स्वाभाविकं, न तु वेदप्रतिपाद्यं, तस्मात् भोजनं न धर्मः। श्येनादियागः वेदेन प्रतिपाद्यते चेत् अपि न धर्मः, यतो हि तत्र अर्थवत्त्वं नास्ति, अनर्थवत्त्वम् एव अस्ति। स्वाध्यायोऽध्येतव्यः इति वेदवाक्येन प्रत्यहं वेदपाठः कर्तव्यत्वेन विधीयते, अत्र अर्थवत्त्वम् अपि विद्यते इति कारणात् स्वाध्यायः धर्मः इति ज्ञातव्यम्। यजेत स्वर्गकामः इति वेदवाक्येन विधीयते यत् यः स्वर्गम् इच्छति सः यागं कुर्यात् इति। अत्र वेदप्रतिपाद्यत्वम् अस्ति, अर्थवत्त्वम् अपि अस्ति इति कारणात् अयं धर्मः।

## १४.७) भावनाविचारः

यजेत स्वर्गकामः इत्यादिवाक्येन स्वर्गम् उद्दिश्य पुरुषं प्रति यागः विधीयते। यजेत इत्यत्र अंशत्रयं विद्यते यजिधातुः प्रत्ययः च। प्रत्यये अपि अंशत्रयद्वयम् विद्यते - आख्यातत्वम् लिङ्त्वम् च। तत्र आख्यातत्वम् दशलकारेषु अपि साधारणम्, लिङ्गत्वं तु लिङ्गात्रे एव विद्यते।



यजेत इत्यत्र यत् अंशद्वयं विद्यते तत्र उभयाभ्याम् अपि अंशाभ्याम् भावना एव उच्यते। ननु का नाम भावना इति चेत् उच्यते अर्थसंग्रहकारेण – भावना नाम भवितुर्भवनानुकूलः भावयितुः व्यापारविशेषः इति। अस्यार्थः हि - भवितुः उत्पद्यमानस्य भवनानुकूलः उत्पत्त्यनुकूलः भावयितुः उत्पादयितुः प्रयोजकस्य व्यापारविशेषः भावना इति। यथा ओदनस्य पाके उत्पद्यमानस्य ओदनस्य उत्पत्त्यनुकूलः देवदत्तस्य व्यापारविशेषः भावना इत्यर्थः। यथा यजेत स्वर्गकाम इत्यत्र उत्पद्यमानस्य धात्वर्थस्य स्वर्गस्य वा उत्पत्त्यनुकूलः स्वर्गकामस्य व्यापारः उत्पद्यमानायाः च स्वर्गकामप्रवृत्तेः उत्पत्त्यनुकूलः लिङः व्यापारविशेषः।

सा च भावना द्विधा- शाब्दी भावना आर्थी भावना च इति।

## १४.७.१) शाब्दी भावना

शाब्दी भावना र्थीभावना इति अनयोः मध्ये शाब्दी भावना नाम – पुरुषप्रवृत्त्यनुकूलः भावयितुः व्यापारविशेषः। सा च लिङ् इति अंशेन उच्यते। लिङ्-श्रवणे अयं मां प्रवर्तयति, मत्प्रवृत्त्यनुकूलव्यापारवान् अयम् इति शाब्दबोधः नियमेन एव प्रतीयते। यत् यस्मात् शब्दात् नियमतः प्रतीयते तत् तस्य वाच्यम्। यथा - गाम् आनय इति वाक्ये गोशब्दस्य गोत्वम्।

स च व्यापारविशेषः लौकिकवाक्ये पुरुषनिष्ठः अभिप्रायविशेषः। वैदिकवाक्ये तु पुरुषाभावात् लिङ्गादिशब्दनिष्ठः एव। अत एव शाब्दीभावना इति व्यवह्रियते।

## १४.७.२) आर्थी भावना

प्रयोजनेच्छाजनितक्रियाविषयव्यापारः आर्थी भावना इति। प्रयोजनस्य स्वर्गादिरूपफलस्य इच्छया रागादिविशेषेण जनितः यः यागादिक्रियाविषयः पुरुषस्य व्यापारविशेषः सा आर्थी भावना इत्यर्थः। सा च आख्यातत्वांशेन उच्यते, यतो हि आख्यातसामान्येन व्यापारः बोध्यते।



## पाठगतप्रश्नाः-२

९. मीमांसकमते प्रामाण्यं स्वतः उत परतः।

१०. प्रमाशब्दस्य कः अर्थः।

११. अभिहितान्वयवादः कस्य।

क) प्राभाकरस्य ख) कुमारिलभट्टस्य ग) मुरारिमिश्रस्य

१२. भाट्टमते प्रमेयानां संख्या का।

क) चत्वारः ख) पञ्च ग) नव घ) द्वादश

१३. अभावाख्यः पदार्थस्तु नास्ति इति कस्य मतम्।

१४. धर्मविषये मीमांसासूत्रं किम्।



१५. भावना कतिधा। के च ते।

१६. भाट्टमते कति द्रव्याणि।

## १४.८) वेदलक्षणविचारः

मीमांसामते अपौरुषेयं वाक्यं वेदः। यत् हि पुरुषेण क्रियते तत्र दोषाः भवन्ति एव। दोषाः नाम भ्रमः, प्रमादः, विप्रलिप्सा इत्यादयः। परन्तु वेदे भ्रमादिदोषाः न सन्ति। तस्मात् दोषाभावात् वेदः पुरुषकृतः नास्ति इति अवगन्तव्यम्। तस्मात् वेदः अपौरुषेयः। सः च वेदः - विधिः मन्त्रः नामधेयः निषेधः अर्थवादः च इति पञ्चविधः।

### १४.८.१) विधिः -

एतेषु अज्ञातस्य अर्थस्य ज्ञापकः वेदभागः विधिः इति उच्यते। यथा - अग्निहोत्रं जुहुयात् स्वर्गकामः इति विधिः। यः स्वर्गम् इच्छति सः अग्निहोत्रयागं कुर्यात् इति अस्य अर्थः। अयं विधिः वेदं विना न अन्येन केनापि प्रमाणेन ज्ञातुं शक्यते। तस्मात् अज्ञातस्य अर्थस्य ज्ञापकत्वात् इदं वेदवाक्यं विधिवाक्यम् इति उच्यते।

स च विधिः चतुर्विधः - उत्पत्तिविधिः, विनियोगविधिः अधिकारविधिः, प्रयोगविधिः चेति।

#### १. उत्पत्तिविधिः

तत्र कर्मस्वरूपमात्रबोधकः विधिः उत्पत्तिविधिः। यथा- अग्निहोत्रं जुहोति इति। अत्र च विधौ कर्मणः करणत्वेन अन्वयः। अग्निहोत्रहोमेन इष्टं भावयेत् इति।

#### २. विनियोगविधिः

अङ्गप्रधानसम्बन्धबोधकः विधिः विनियोगविधिः। यथा, दध्ना जुहोति इति। स हि तृतीयया प्रतिपन्नस्य अङ्गभावस्य दध्नः होमसम्बन्धं विधत्ते। दध्ना होमं भावयेत् इति।

विनियोगविधेः सहकारिभूतानि षट् प्रमाणानि सन्ति। तानि हि श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि।

#### क) श्रुतिः

तत्र निरपेक्षः रवः श्रुतिः। अत्र निरपेक्षपदेन प्रमाणान्तरनिरपेक्षः इति ज्ञातव्यम्। तेन यः शब्दः अन्यप्रमाणं न अपेक्षते, स शब्दः श्रुतिः इत्यर्थः। सा त्रिविधा - विधात्री, अभिधात्री, विनियोक्त्री च।

#### ख) लिङ्गम्

शब्दसामर्थ्यं लिङ्गम्। तथाहि उच्यते - सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते इति। सामर्थ्यं रूढिः एव। तथाहि- बर्हिर्देवसदनं दामि इति मन्त्रस्य कुशलवनाङ्गत्वम्, न तु उपलादिलवनाङ्गत्वम्।



### ग) वाक्यम्

समभिव्याहारः वाक्यम्। समभिव्याहारः नाम सह उच्चारणम्। यथा - यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति इत्यत्र पर्णताजुह्वोः समभिव्याहारादेव पर्णतायाः जुह्वङ्गत्वम्।




### घ) प्रकरणम्

उभयाकाङ्क्षा प्रकरणम् इति। परस्परस्य वाक्यद्वयस्य आकाक्षा विद्यते चेत् तत् प्रकरणम् इति उच्यते। तथाहि - प्रयाजादिषु 'समिधो यजति' इत्यादिवाक्ये फलविशेषस्य अनिर्देशात् समिद्-यागेन भावयेत् इति बोधानन्तरं किम् इति फलस्य आकाङ्क्षा भवति। दर्शपूर्णमासवाक्ये अपि 'दर्शपूर्णमासाभ्यां स्वर्गं भावयेत्' इति बोधानन्तरं कथम् इति फलस्य आकाङ्क्षा भवति। इत्थं च उभयाकाङ्क्षया प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम्।



तच्च प्रकरणं पुनः द्विविधम्- महाप्रकरणम् अवान्तरप्रकरणम् चेति। तत्र मुख्यभावनासम्बन्धिप्रकरणं महाप्रकरणम्। तेन च प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम्। अङ्गभावनासम्बन्धि प्रकरणम् अवान्तरप्रकरणम्। तेन च अभिक्रमणादीनां प्रयाजाद्यङ्गत्वम्।

### ङ) स्थानम्

देशसामान्यं स्थानम्। स्थानम् इति पदेन सन्निधिविशेषत्वं ज्ञेयम्। स्थानं क्रमः च इति न अर्थान्तरम्। तद् द्विविधम्। पाठसादेश्यम् अनुष्ठानसादेश्यं चेति। पाठसादेश्यम् अपि द्विविधम् -यथासन्निधिपाठः यथासंख्यपाठः चेति।

### च) समाख्या

तत्र यौगिकः शब्दः समाख्या। शब्दः चतुर्धा- यौगिकः, रूढः, योगरूढः, यौगिकरूढः चेति। एतेषु आध्वर्यवं याचकः इत्यादियौगिकः शब्दः समाख्या इति ज्ञेयम्। सा च समाख्या द्विधा- वैदिकी लौकिकी चेति।

इत्थं संक्षेपेण षट् प्रमाणानि निरूपितानि। एतेषु श्रुतिः सर्वापेक्षया बलवती। समाख्यातः स्थानं बलवत्, स्थानतः प्रकरणं बलवत्, प्रकरणापेक्षया वाक्यं बलवत्, वाक्यापेक्षया लिङ्गं बलवत्, लिङ्गापेक्षया च श्रुतिः बलवती।

### ३. अधिकारविधिः

कर्मजन्यफलस्वाम्यबोधकः विधिः अधिकारविधिः। कर्मजन्यफलस्वाम्यं नाम कर्मजन्यफलभोक्तृत्वम्। स च 'यजेत स्वर्गकामः' इत्यादिरूपः। स्वर्गम् उद्दिश्य यागं विदधता अनेन स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते। 'यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं निर्वपेत्' इत्यादिना अग्निदाहादौ निमित्ते कर्म विदधता निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते। एवम् अहरहः सन्ध्याम् उपासीत इत्यादिना शुचिविहितकालजीविनः सन्ध्योपासनजन्य-प्रत्यवाय-परिहाररूप-फलस्वाम्यं च उद्यते।

### ४. प्रयोगविधिः

प्रयोगप्राशुभावबोधकः विधिः प्रयोगविधिः। येन विधिवाक्येन प्रयोगस्य शीघ्रतासम्पादनं बोध्यते सः प्रयोगविधिः इति उच्यते।

इत्थं विधेः चातुर्विध्यं संक्षेपेण प्रतिपादितम्।

## १४.८.२) मन्त्रः

प्रयोगसमवेतार्थस्मारकाः मन्त्राः इति मन्त्रस्य लक्षणम्। यानि वेदवाक्यानि कर्मानुष्ठानसम्बद्धान् द्रव्यदेवतादीन् पदार्थान् स्मारयन्ति तानि मन्त्रवाक्यानि उच्यन्ते।



### १४.८.३) नामधेयः

विधेयार्थपरिच्छेदकं वाक्यम् नामधेयः इति उच्यते। येन वाक्येन विधेयस्य कर्तव्यतया उपदिष्टस्य यागस्य परिच्छेदः भवति, अर्थात् नाम ज्ञायते तत् नामधेयवाक्यम्। तथाहि - उद्भिदा यजेत पशुकामः इति नामधेयस्य उदाहरणम्। अत्र उद्भिदा इति पदेन न यागसामान्यस्य विधानम्, अपि तु उद्भिन्नामकेन यागेन पशुकामः यजेत इति यागविशेषस्य विधानम्।

### १४.८.४) निषेधः

पुरुषस्य निवर्तकं वाक्यं निषेधः। यदि किञ्चित् कार्यं पुरुषस्य अनर्थजनकं भवेत् तदा वेदवाक्यं तस्मात् कार्यात् पुरुषं निवर्तयति। तथाहि - 'न कलञ्जं भक्षयेत्' इति निषेधवाक्यम् अनर्थजनकात् कलञ्जभक्षणात् पुरुषं निवर्तयति।

### १४.८.५) अर्थवादः

प्राशस्त्य-निन्दान्यतरपरं वाक्यम् अर्थवादः। यस्य वेदवाक्यस्य स्वार्थप्रतिपादने तात्पर्यं नास्ति, किन्तु यत् वेदवाक्यं प्रशंसाद्वारा निन्दाद्वारा वा विधेयस्य निषेध्यस्य कर्तव्याकर्तव्यत्वं सूचयति तत् अर्थवादवाक्यम् इति उच्यते। यथा - वायुर्वै क्षेपिष्ठा देवता इति वेदवाक्येन वायोः शीघ्रगामित्वम् सूच्यते। वस्तुतः अनेन वायोः प्रशंसा क्रियते। तेन च वायुः शीघ्रफलदाता इति सूच्यते।

## १४.९) मोक्षः

प्राचीनमीमांसादर्शने स्वर्गलाभ एव परमपुरुषार्थः इति उक्तम्। परन्तु परवर्तिनि काले मीमांसकाः मोक्षम् एव परमपुरुषार्थत्वेन स्वीकुर्वन्ति। शरीरादिभिः सह जीवस्य सम्बन्धः एव बन्धनम्। यदा शरीरादिभिः सह जीवस्य सम्बन्धनाशः भवति तदा मोक्षः। यावत् शरीरं तिष्ठति तावत् सुखदुःखभोगः सम्भवति। प्रभाकरमते मोक्षे जीवस्य सर्वप्रकाराणां दुःखानाम् आत्यन्तिकतया विनाशः भवति। कुमारिलभट्टमते काम्यनिषिद्धकर्मणोः परित्यागेन नित्यनैमित्तिककर्मानुष्ठानेन सुख-दुःखभोगेन यस्य सर्वं पापं क्षीणं स शमदमादिपालनेन वेदान्तादिभिः प्रदर्शितोपायेन आत्मतत्त्वविचारेण मोक्षं प्राप्नोति। मोक्षः नाम न केवलं दुःखाभावः, अपि तु आनन्दस्य अभिव्यक्तिः। मोक्षे शरीरस्य विनाशः भवति, तेन जीवस्य पुनर्जन्म न भवति।



## पाठगतप्रश्नाः-३

१७. मीमांसामते वेदः नाम किम्।

१८. वेदः कतिविधः। के च ते।

१९. विधिः कतिविधः। के च ते।



२०. विनियोगविधेः सहकारिभूतानि कति प्रमाणानि।

क) चत्वारि ख) पञ्च ग) षट् घ) सप्त

२१. प्रयोगविधेः लक्षणं किम्।

२२. लिङ्गप्रमाणापेक्षया किं प्रमाणं बलवत्।

क) श्रुतिःख) वाक्यम् ग) स्थानम् घ) समाख्या



## पाठसारः

मीमांसादर्शनस्य ये विषयाः सन्ति तेषां संक्षेपेण आलोचनम् अस्मिन् पाठे विद्यते। मीमांसकानां मते प्रमाणं प्रमेयं चेति द्वौ एव पदार्थौ। भाट्टमीमांसादर्शने हि षट् प्रमाणानि स्वीकृतानि- प्रत्यक्षम्, अनुमानम्, शब्दः, उपमानम्, अर्थापत्तिः अनुपलब्धिः चेति। प्राभाकराः अनुपलब्धिं प्रमाणत्वेन न अङ्गीकुर्वन्ति, तस्मात् ते पञ्च एव प्रमाणानि अङ्गीकुर्वन्ति। प्रमाणविषये तयोः मतभेदे सति अपि प्रामाण्यविषये तयोः मतभेदः नास्ति। मीमांसकाः प्रमाणानां प्रामाण्यं स्वतः, अप्रामाण्यं च परतः भवति इति अङ्गीकुर्वन्ति। वाक्यात् अर्थबोधविषये मीमांसकानां मतद्वयं प्रसिद्धम्। केचन अभिहितान्वयवादं, केचन च अन्विताभिधानवादम् अङ्गीकुर्वन्ति। भाट्टमते प्रमेयाः पञ्च – द्रव्यं जातिः गुणः क्रिया अभावः चेति। प्राभाकरमते तु प्रमेयाः अष्ट – द्रव्यं गुणः कर्म सामान्यं समवायः शक्तिः संख्या सादृश्यं चेति।

मीमांसादर्शने विचार्यविषयेषु अन्यतमः तावत् धर्मः। तल्लक्षणं हि वेदप्रतिपाद्यः प्रयोजनवदर्थः धर्मः इति। 'चोदनालक्षणोऽर्थो धर्मः' इति हि मीमांसासूत्रम्। यथा, स्वर्गकामो यजेत इति वेदवाक्येन स्वर्गकामं प्रति यागः विधीयते। तत्र यजेत इति शब्दश्रवणे कस्मिंश्चित् व्यापारे श्रोतुः प्रवृत्तिः दृश्यते सा हि भावना इति उच्यते। तल्लक्षणं हि - भवितुः भवनानुकूलः भावयितुः व्यापारविशेषः इति। सा द्विविधा- शाब्दी आर्थी चेति।

मीमांसकमते अपौरुषेयं वाक्यं हि वेदः। वेदः हि पञ्चविधः - विधिः, मन्त्रः, नामधेयः, निषेधः, अर्थवादः चेति। एतेषु अज्ञातस्य अर्थस्य ज्ञापकः वेदभागः विधिः। प्रयोगसमवेतार्थस्मारकाः मन्त्राः। विधेयार्थपरिच्छेदकं वाक्यम् नामधेयः। पुरुषस्य निवर्तकं वाक्यं निषेधः। प्राशस्त्य-निन्दान्यतरपरं वाक्यम् अर्थवादः। विधिः पुनः चतुर्विधः - उत्पत्तिविधिः, विनियोगविधिः, अधिकारविधिः, प्रयोगविधिः चेति। तत्र कर्मस्वरूपमात्रबोधकः विधिः उत्पत्तिविधिः। अङ्गप्रधानसम्बन्धबोधकः विधिः विनियोगविधिः। कर्मजन्यफलस्वाम्यबोधकः विधिः अधिकारविधिः। प्रयोगप्राशुभावबोधकः विधिः प्रयोगविधिः। एतेषु विनियोगविधेः सहकारिभूतानि षट् प्रमाणानि सन्ति। तानि हि श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि। तत्र निरपेक्षः रवः श्रुतिः। शब्दसामर्थ्यं लिङ्गम्। समभिव्याहारः वाक्यम्। उभयाकाङ्क्षा प्रकरणम् इति। देशसामान्यं स्थानम्। तत्र यौगिकः शब्दः समाख्या। एतेषु पूर्वं पूर्वं उत्तरोत्तरापेक्षया



बलवत्। समाख्यातः स्थानं बलवत्, स्थानतः प्रकरणं बलवत्, प्रकरणापेक्षया वाक्यं बलवत्, वाक्यापेक्षया लिङ्गं बलवत्, लिङ्गापेक्षया च श्रुतिः बलवती।

सर्वाणि हि भारतीयदर्शनानि पुरुषार्थम् आश्रित्य प्रवर्तन्ते। मीमांसादर्शनम् अपि पुरुषार्थम् एव आश्रित्य प्रवर्तते। प्राचीनमीमांसादर्शने स्वर्गलाभः एव मोक्षः। परन्तु आधुनिकानां मीमांसकानां मते जीवस्य शरीरसम्बन्धनाशः एव मोक्षः, स एव परमपुरुषार्थः। मोक्षे सति जीवस्य आत्यन्तिकतया सर्वप्रकाराणां दुःखानां विनाशः भवति।



## पाठान्तप्रश्नाः

१. मीमांसकाः कति प्रमाणानि स्वीकुर्वन्ति।
२. मीमांसकमते प्रत्यक्षप्रमाणस्य परिचयः दीयताम्।
३. मीमांसकमते अनुमानस्य स्वरूपं निरूपयत।
४. मीमांसकमते शब्दप्रमाणं नाम किम्।
५. मीमांसकानां मते अर्थापत्तिप्रमाणं निरुपयत।
६. मीमांसकानां मते अनुलब्धिप्रमाणं निरूपयत।
७. मीमांसकेषु के अनुपलब्धिप्रमाणं न स्वीकुर्वन्ति।
८. किमर्थं स्वातन्त्र्येण अनुपलब्धिप्रमाणम् अङ्गीकुर्वन्ति मीमांसकाः।
९. अर्थापत्तिः कतिधा।
१०. मीमांसकमते अनुमानं कतिविधम्।
११. नैयायिकानाम् उपमानप्रमाणात् मीमांसकानाम् उपमानं कुत्र भिद्यते।
१२. का प्रमा, का च अप्रमा।
१३. प्रामाण्यविषये मीमांसकानां मतं निरूपयत।
१४. प्रामाण्यविषये सांख्यानां मतं किम।
१५. प्रामाण्यविषये नैयायिकानां मतं किम्।
१६. प्रामाण्यविषये बौद्धानां मतं किम्।
१७. अभिहितान्वयवादिनः के।
१८. अभिहितान्वयवादः नाम किम्।
१९. अन्विताभिधानवादं के स्वीकुर्वन्ति।
२०. अन्विताभिधानवादः नाम किम्।
२१. विधेः लक्षणं किम्।



२२. अर्थवादः नाम किम्।

२३. मीमांसकानां कः अभावं पदार्थत्वेन न अङ्गीकरोति।

२४. मन्त्रस्य लक्षणं किम्।

२५. मीमांसकानां मते मोक्षः कीदृशः।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. षट्।

२. वेदान्तदर्शनम्।

३. द्वादशलक्षणी।

४. ख) अभावपदार्थग्रहणाय।

५. त्रीन्।

६. प्रत्यक्षं द्विविधम् - सविकल्पं, निर्विकल्पं च।

७. अर्थापत्तिः द्विधा- दृष्टार्थापत्तिः, श्रुतार्थापत्तिः च।

८. उपपाद्यज्ञानेन उपपादककल्पनम् अर्थापत्तिः इति।

### उत्तराणि-२

९. प्रामाण्यं स्वतः, अप्रामाण्यं तु परतः।

१०. यथार्थज्ञानम्।

११. ख) कुमारिलभट्टस्य।

१२. ख) पञ्च।

१३. प्रभाकरस्य मतम्।

१४. चोदनालक्षणोऽर्थो धर्मः।

१५. भावना द्विविधा - शाब्दी भावना, आर्थी भावना।

१६. एकादश।

### उत्तराणि-३

१७. अपौरुषेयं वाक्यं वेदः।

१८. वेदः पञ्चविधः - विधिः, मन्त्रः, नामधेयः, निषेधः, अर्थवादः च।

१९. विधिः चतुर्विधः - उत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिः, अधिकारविधिः च।



२०. ग) षट्।

२१. प्रयोगप्राशुभावबोधकः विधिः प्रयोगविधिः।

२२. क) श्रुतिः।

॥ इति चतुर्दशः पाठः ॥



१५

# वेदान्तदर्शनम्-१

## प्रस्तावना

वेदस्य संहिताब्राह्मणारण्यकोपनिषदाख्येषु चतुर्षु भागेषु अन्तिमा उपनिषदेव वेदान्तशब्देन उच्यते। वेदस्य अन्तः वेदान्त इति वेदान्तशब्दनिर्वचनम्। अन्तशब्दस्य सामान्यार्थो भवति अन्तिममिति। तेन वेदस्य अन्तिमे उपनिषदां सत्त्वात् तासामेव उपनिषच्छब्देन व्यवहारः। क्वचित्तु संहिताभागेऽपि उपनिषद् दृश्यते यथा ईशोपनिषत्। तत्र तु वेदान्तशब्द एवं व्याख्येयो भवति वेदस्य अन्तः सार एव उपनिषत्। कथं निखिलस्यापि निगमनिचयस्य सारः उपनिषदित्युच्यते। उच्यते अत्र ब्रह्मविद्या उपदिष्टा अस्ति। अस्याश्च अनुष्ठानेन मानवाः चरमं पुरुषार्थं मोक्षं प्राप्नुवन्ति। अत एव अस्या माहात्म्यं सर्वोपरि विद्यते। उपनिषदाम् अध्ययनेनैव कथं तत् लब्धुं शक्यमित्यत्र उपनिषत्सु एव प्रमाणं विद्यते- तं त्वौपनिषदं पुरुषं पृच्छामि, वेदान्तविज्ञानसुनिश्चितार्था इत्येवम्। वेदान्तदर्शनस्यैव नामान्तरं भवति उत्तरमीमांसा। अस्मिन् पाठे वेदान्तदर्शनस्य विविधानि मतानि तेषां प्रतिपादितानि मुख्यानि तत्त्वानि च आलोचयिष्यन्ते।



## उद्देश्यानि

अमुं पाठं पठित्वा भवान्

- कः वेदान्त इति अवगच्छेत्।
- वेदान्तस्य नामान्तराणि जानीयात्।
- वेदान्तपरम्पराज्ञानं प्राप्नुयात्।
- कति वेदान्तसम्प्रदाया इति विजानीयात्।
- अद्वैतवेदान्तविषये सम्यक् ज्ञानं प्राप्नुयात्।
- शुद्धाद्वैतविषयिणीं धारणाम् अर्जयेत्।
- अचिन्त्यभेदाभेदस्य विषये जानीयात्।

## १५.१) वेदान्तदर्शनस्य आरम्भः

भगवान् बादरायणः ज्ञानकाण्डात्मकस्य उपनिषद्भागस्य अर्थविस्ताराय तथा वेदविरुद्धमतानां निरासाय सूत्रात्मकं ग्रन्थं विरचितवान्। अस्य ग्रन्थस्य चत्वारः अध्यायाः भवन्ति। प्रथमाध्यायस्य नाम समन्वयाध्यायः। द्वितीयाध्यायस्य नाम अविरोधाध्यायः। तृतीयाध्यायस्य नाम साधनाध्यायः। चतुर्थाध्यायस्य नाम फलाध्यायः। प्रत्यध्यायं चत्वारः पादाः वर्तन्ते। प्रतिपादं च नैकानि अधिकरणानि।



चतुर्षु अध्यायेषु ५५५ सुत्राणि वर्तन्ते। अस्यैव ग्रन्थस्य नामान्तराणि भवन्ति उत्तरमीमांसादर्शनं शारीरकसूत्रं, वेदान्तसूत्रं, ब्रह्मसूत्रम् इत्यादीनि। एतं ग्रन्थमाधारीकृत्यैव शंकराचार्यादयो विविधा दार्शनिकाः स्वकीयं भाष्यं विरचितवन्तः। तत्तद्भाष्यानुसारमेव तेषां दर्शनं प्रवृत्तम्। वेदान्ते प्रसिद्धानि दश मतानि भवन्ति।

| सम्प्रदायनाम | प्रवर्तकः | कालः (ईशवीयाब्दः) | भाष्यनाम |
|---|---|---|---|
| निर्विशेषाद्वैतम् | शंकराचार्यः | ७८८-८२० | शारीरकभाष्यम् |
| भेदाभेदः | भास्कराचार्यः | ८५० | भास्करभाष्यम् |
| विशिष्टाद्वैतम् | रामानुजः | ११४० | श्रीभाष्यम् |
| द्वैतम् | मध्वाचार्यः/आनन्दतीर्थः | १२८८ | पूर्णप्रज्ञभाष्यम् |
| द्वैताद्वैतम् | निम्बार्कः | १२५० | वेदान्तपारिजातभाष्यम् |
| शैवविशिष्टाद्वैतम् | श्रीकण्ठः | १२७० | शैवभाष्यम् |
| वीरशैवविशिष्टाद्वैतम् | श्रीपतिः | १४०० | श्रीकरभाष्यम् |
| शुद्धाद्वैतम् | वल्लभः | १४७८-१५४४ | अणुभाष्यम् |
| अविभागाद्वैतम् | विज्ञानभिक्षुः | १६०० | विज्ञानामृतम् |
| अचिन्त्यभेदाभेदः | बलदेवः | १७२५ | गोविन्दभाष्यम् |

## १५.२) अद्वैतदर्शनम्

वेदान्तदर्शनेषु सर्वदर्शनशिरोरत्नभूतं भवति अद्वैतदर्शनम्। अद्वैतदर्शनस्य प्रवर्तको भवति आचार्यः शंकरः। अनेन आचार्येण सूत्राणामुपरि लिखितं भाष्यं शांकरभाष्यमिति नाम्ना प्रसिद्धम्। अस्मिन् दर्शने एकस्यैव वस्तुनः सत्ता अङ्गीक्रियते तच्च ब्रह्म। दर्शनमिदम् अन्यस्मात् किञ्चित् वैशिष्ट्यं भजते। यथा केवलम् अत्रैव जगत् मिथ्या भवति। जगतः अभिन्ननिमित्तोपादानकारणं भवति ब्रह्म। ब्रह्मणः जगत् न परिणमते अपि तु विवर्तते। बहुजीववादः नाङ्गीक्रियते , सोपाधिकस्य ब्रह्मण एव जीवत्वम्। जीवब्रह्मैक्यमेव मोक्षः। अग्रे एतद्विषये विस्तरेण प्रतिपाद्यते।

### १५.२.१) आचार्यपरम्परा

अद्वैतदर्शनं साक्षात् शिवात् प्रारब्धमिति सम्प्रदायविदां वचनम्। तथाहि अद्वैतसम्प्रदाये प्रसिद्धः श्लोकः-

सदाशिवसमारम्भां शंकराचार्यमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्।



यद्यपि भगवान् शंकराचार्यः अस्य प्रवर्तक इत्युच्यते तथापि अस्मादपि प्राक् नैके आचार्या एतत् दर्शनं प्रचारितवन्तः। अद्वैते आचार्यपरम्पराविषये अयमपि श्लोकः प्रसिद्धः-

नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रम्।
अथास्य शिष्यं श्रीशंकराचार्यमथास्य पद्मपादञ्च हस्तामलकञ्च शिष्यम्।
तं तोटकं वार्तिककारमन्यान् अस्मद्गुरून् सन्ततमानतोऽस्मि।

### शंकरात् प्राक्तनाः केचन आचार्याः

**द्रविडाचार्याः-** आचार्योऽयम् उपनिषदां भाष्यकार आसीदिति सम्प्रदायः। शंकरभगवत्पादः बृहदारण्यकभाष्ये एनं सम्प्रदायविद् इति आख्यापितवान्। श्रीभाष्यकारः रामानुजाचार्योऽपि २.१.१४ सूत्रस्य भाष्ये कस्यचन द्रमिडाचार्यस्य विषये उक्तवान्। उभावपि समानो जन इति नैकेषां विदुषां राधान्तः। मधुसूदनसरस्वतीरचितायां संक्षेपशारीरकटीकायां ब्रह्मनन्दीविरचितवाक्यानां सूत्ररूपाणां भाष्यकर्ता द्रविडाचार्य इति सूच्यते। आनन्दगिरिः तोटकाचार्यः इत्यादयः बहव आचार्या एतस्य उद्धरणं कृतवन्तः।

**ब्रह्मनन्दी-** आचार्यः मधुसूदनसरस्वती संक्षेपशारीरकस्य ३/२१७ श्लोकस्य टीकायाम् ब्रह्मनन्दी इत्यस्य नामोल्लेखं कृतवान्। अयमाचार्यः छान्दोग्योपनिषदः वाक्यकार आसीत् इति प्रसिद्धिः। अस्य विषये स्पष्टं प्रमाणं किमपि नोपलभ्यते।

**गौडपादाचार्याः-** एतेषां कालः षष्ठशतकमिति इति विदुषां राधान्तः। महर्षिः पतञ्जलिः अस्य गुरुरासीत् इति केचन तथा व्यासपुत्रः शुकः गुरुरासीत् इति केचन समालोचयन्ति यद्यपि तथा कथने नास्ति किमपि योग्यं प्रमाणम्। उत्तरगीताव्याख्या पञ्चीकरणवार्तिकं नृसिंहतापनीयभाष्यम् अनुगीताभाष्यम् इत्यादयो नैके ग्रन्था गौडपादप्रणेतृत्वेन प्रसिद्धाः। तत्र माण्डूक्यकारिका इति माण्डूक्योपनिषदमाधारीकृत्य लिखिता अद्वैतसिद्धान्तप्रतिष्ठापिका बहुप्रसिद्धा। अस्य कारिकाग्रन्थस्य चत्वारि प्रकरणानि भवन्ति। तेषां नामानि यथाक्रमम् आगमप्रकरणं, वैतथ्यप्रकरणम्, अद्वैतप्रकरणम्, अलातशान्तिप्रकरणम्। इमे आचार्या शंकरभगवत्पादस्य परमगुरवो भवन्ति। एभिर्लिखिता माण्डूक्यकारिका शंकरभगवत्पादेनापि व्याख्याता। तत्रैव व्याख्यानान्ते शंकरभगवत्पादः एतान् एवं प्रणमति- तं वै पूज्याभिपूज्यं परमगुरुममुं पादपादैर्नतोऽस्मि।

**शंकराचार्यः-** अष्टमशतके (७८८ ईशवीयाब्दे) केरलप्रदेशे अयम् आचार्यः शिवगुरुनाम्नः ब्राह्मणस्य पुत्रत्वेन जनिं प्राप्तवान्। आचार्योऽयं गोविन्दभगवत्पादानां शिष्यः तथा गौडपादाचार्याणां परमशिष्यः भवति। व्यासाज्ञया एव आचार्यः शंकरः ब्रह्मसूत्राणां भाष्यं लिखितवान् इति रूढिः। शंकरभगवत्पादः ब्रह्मसूत्रं विहायापि दशानाम् उपनिषदां तथा च श्रीमद्भगवद्गीतायाः अद्वैतपरकतया भाष्यं विरचितवान्। किञ्च विवेकचूडामणिः, उपदेशसाहस्री इत्यादिग्रन्थानां मोहमुद्गरादिस्तोत्राणां च प्रणेता भवति शंकरभगवत्पादः। यासामुपनिषदां भाष्यम् आचार्यैः कृतं ता हि-



ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तित्तिरिः।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा।

श्वेताश्वतरोपनिषदः भाष्यमपि शंकराचार्यैः कृतमित्यपि केचित् आचक्षते। तस्मिन् समये विद्यमानं पूर्वमीमांसादर्शनस्य प्रबलं तेजः शमयित्वा अद्वैतदर्शनस्य विजयरथम् आभारतं चालितवान्। अनेन सन्यासाश्रमस्य दशनामिसम्प्रदायः सृष्टः किञ्च भारतस्य चतसृषु दिक्षु चत्वारः मठा प्रतिष्ठापिताः। अस्य चत्वारः शिष्याः प्रसिद्धाः पद्मपादाचार्यः तोटकाचार्यः सुरेश्वराचार्यः हस्तामलकाचार्यश्च। ८२० ईशवीयाब्दे शंकराचार्यः स्वधाम प्रपेदे। आचार्यस्य जीवनविषये श्लोकोऽयं बहु प्रसिद्धः-

अष्टवर्षे चतुर्वेदी द्वादशे सर्वशास्त्रवित्।
षोडशे कृतवान् भाष्यं द्वात्रिंशे मुनिरभ्यगात्।

### शंकरात् परवर्तिनः केचन आचार्याः

**पद्मपादाचार्यः- अस्य समय आसीत् ८०० ईशवीयाब्दः।** अयमासीत् शंकराचार्यस्य साक्षात् शिष्यः। आश्रमस्वीकारात् पूर्वमस्य नाम आसीत् सनन्दनः, पिता चास्य विमलनामको ब्राह्मणः। अनेन शंकराचार्यरचितस्य चतुःसूत्रीभाष्यस्य उपरि पञ्चपादिकानामकं व्याख्यानं कृतम्। अनेन लिखिता अन्ये ग्रन्था यथा विज्ञानदीपिका, आत्मबोधव्याख्या, आत्मानात्मविवेकव्याख्या, तत्त्वमसिपञ्चकम् इत्यादयः।

**सुरेश्वराचार्यः-** अयमाचार्यः वार्तिककारनाम्ना सम्प्रदाये प्रसिद्धः। शांकरकाल एव अस्य कालः। अनेन शंकराज्ञया एव भाष्यस्य उपरि वार्तिकं लिखितम् इति श्रूयते। अस्य प्रसिद्धा ग्रन्था यथा तैत्तिरीयोपनिषद्भाष्यवार्तिकं, बृहदारण्यकोपनिषद्भाष्यवार्तिकं, नैष्कर्म्यसिद्धिः, प्रणवार्थकारिकाः। प्रसिद्धः मीमांसकः मण्डनमिश्र एव शंकराचार्यात् वादे पराभूय सुरेश्वराचार्यरूपेण तच्छिष्योऽभूत् इत्यपि केचित् वदन्ति।

**प्रकाशात्मयतिः-** अनन्यानुभवस्य शिष्यस्य प्रकाशात्मयतेः अपरं नाम आसीत् स्वयम्प्रकाशानुभवः। अयम् एकादशशतके आसीदिति उच्यते। अनेन पद्मपादाचार्यविरचितां पञ्चपादिकामवलम्ब्य पञ्चपादिकाविवरणनामकं व्याख्यानं विहितम्। इदं व्याख्यानमाश्रित्यैव अग्रे विवरणप्रस्थानमिति नूतनः सम्प्रदायः आरब्धः।

**वाचस्पतिमिश्रः-** अस्य आचार्यस्य कालः भवति नवमशतकस्य मध्यभागः। मिथिलादेशीय आसीदेष इति श्रूयते। वेदधर्मशास्त्रसांख्ययोगादिविषयेषु वाचस्पतिनाम्ना बहवः ग्रन्था प्रणीता विद्यन्ते। आचार्योऽयं सूत्रभाष्यस्य उपरि भामतीनाम्नीं काञ्चित् टीकां रचितवान्। परम् एतां टीकामाधारीकृत्य भावदीपिका-भामतीविलास-कल्पतर्वादयः ग्रन्था लिखिताः। एतां टीकामाश्रित्य सूत्रभाष्यस्य एकं प्रस्थानमेव आरब्धं भामतीप्रस्थानमिति।

**आनन्दगिरिः-** सन्न्यासस्वीकारात् पूर्वमस्य नाम आसीत् जनार्दन इति। सन्न्यस्तः अयम् आनन्दज्ञान आनन्दगिरि इति नाम्ना प्रथितः। आसीदयं द्वारकाशांकरपीठाधीशः। प्रकटार्थविवरणकारः अनुभूतिस्वरूपाचार्यः अस्य विद्यागुरुः किञ्च शुद्धानन्दः दीक्षागुरुरासीत् इति ज्ञायते। अस्य कालो भवति

त्रयोदशशतकम्। समग्रस्यापि प्रस्थानत्रयस्य उपरि यत् शांकरभाष्यमुपलभ्यते तस्य सम्पूर्णस्यापि व्याख्यानं कृतवान् अयमाचार्यः।

## १५.२.२) ब्रह्म

अद्वैतदर्शने द्वितीयस्य कस्यचित् वस्तुनः याथार्थ्यं नाङ्गीक्रियते। अतो द्वितीयस्य निषेधात् इदम् अद्वैतम् उच्यते। तथाहि-

द्विधेतं द्वीतमित्याहुः तद्भावो द्वैतमुच्यते।
तन्निषेधेन चाद्वैतं प्रत्यग्वस्त्वभिधीयते।

अद्वैतदर्शने यत् ब्रह्मस्वरूपं प्रतिपाद्यते तद्भवति सच्चिदानन्दस्वरूपम्। तच्च निर्गुणं निष्क्रियं शान्तम् अवाङ्मनसगोचरम्। यतो हि ईदृशस्य ब्रह्मणः स्वरूपं वाचा प्रकाशयितुम् अशक्यम् अतो नेति नेति मुखेन सर्वत्र उपदिश्यते। अतः अद्वैतशब्दस्य अर्थो भवति द्वैतनिषेधः, शुद्धस्य अद्वैतस्य प्रतिपादयितुम् अशक्यत्वात्। तथाहि श्रुतयः- न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः (केन.उ.१.३), यतो वाचो निवर्तन्ते अप्राप्य मनसा सह (तै.उ.२.४), न चक्षुषा गृह्यते नापि वाचा (मुं.उ. ३.१.८), अदृश्यमव्यवहार्यम् अग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यम् (मां.उ.२.५), अस्थूलमनणु,। ब्रह्मणः एकत्वं प्रतिपादयितुं श्रुतौ उक्तमस्ति एकमेवाद्वितीयम् इति। तस्यार्थो भवति सजातीय-विजातीय-स्वगतभेदशून्यं ब्रह्म। त्रिविधभेदाः कथं भवन्ति इत्यस्मिन् विषये पञ्चदश्यां स्फुटमुक्तम्-

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः।
वृक्षान्तरात् सजातीयो विजातीयः शिलादितः। (२/२०)

ब्रह्म भवति सर्वविस्तृतं सर्वव्यापकं सर्वेषु पदार्थेषु अनुस्यूततया विद्यमानम्। प्रमाणं यथा श्रुतौ- सर्वं खल्विदं ब्रह्म, ऐतदात्म्यमिदं सर्वम् इति। तथा च-

ब्रह्मैवेदम् अमृतं पुरस्तात् ब्रह्म पश्चात् ब्रह्म दक्षिणतश्चोत्तरेण।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्। इति। (मुं.उ. २.१.११)

स्मृतौ अपि उक्तं- मयि सर्वमिदं प्रोक्तं सूत्रे मणिगणा इव इति। अत एव ब्रह्मविज्ञाने सति सर्वविज्ञानं भवतीति अद्वैतसिद्धान्तः। ब्रह्मभिन्नस्य द्वितीयस्य अनङ्गीकाराय तथा अद्वैतसिद्धान्तस्थापनाय इदं छान्दोग्यवाक्यं दृढं प्रमाणं भवति- उत तमादेशमप्राक्ष्य येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति (छां.उ. ६.१.३)। तथा च मुण्डकवाक्यम् कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति (मुं.उ. १.१.३)। अत्र एकविज्ञाने सर्वविज्ञानं प्रतिज्ञातम्। द्वितीयस्य कस्यचित् वस्तुनः सत्ताङ्गीकारे सति इयं प्रतिज्ञा न सिद्ध्यति। इदं ब्रह्मैव जगतः उपादानकारणं निमित्तकारणं च। यतो हि अद्वैतदर्शने ब्रह्मभिन्नस्य अन्यस्य कस्यचित् सत्ता नाङ्गीक्रियते अतः जगतः उभयं कारणं ब्रह्मैव भवति नान्यत् किमपि। जगज्जन्मादिकारणत्वमेव ब्रह्मणः तटस्थं लक्षणम्। एवं कथने प्रमाणं द्वितीयं सूत्रं जन्माद्यस्य यतः इति। ब्रह्मणः जगत्कारणत्वे एताः श्रुतय उदाह्रियन्ते- यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति (तै.उ. ३.१) तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति (मुं.उ. २.१.१) अपरं च-



यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति।

यथा स्वतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वम्। (मुं.उ. १.१.७)

## १५.२.३) जगत्

अद्वैते यादृशं ब्रह्म प्रतिपाद्यते तादृशात् ब्रह्मणः न कस्यचित् वस्तुनः उत्पत्तिः भवितुमर्हति तर्हि दृश्यमानं जगत् कथं सम्भूतमिति प्रश्नः स्वाभाविकः। अत्रोच्यते यथा मृत्तः घट उत्पद्यते न तथा ब्रह्मणः जगत् उत्पन्नम्। अद्वैतिनां मते तु जगत् न सत्यम् अपि तु मिथ्याभूतम्। तथाहि अज्ञानात् यथा शुक्तौ रजत् प्रतीयते तथैव ब्रह्मणि जगत् उत्पन्नम्। अतः जगतः मिथ्यात्वे न कापि आपत्तिः नापि निर्धर्मकात् निर्गुणात् निष्क्रियात् ब्रह्मणः उत्पन्नत्वे। अद्वैतसम्प्रदाये इदं प्रसिद्धं वचनं भवति ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः। अज्ञातः रज्जुः यथा सर्परूपेण प्रतीयते निर्विशेषं ब्रह्मैव तथा जगद्रूपेण प्रतीयते। रज्जौ यथा परमार्थतः सर्पः कदापि नासीत् तद्वदेव जगत् परमार्थतः कदापि नास्ति। यतो हि जगत् न उत्पद्यते तस्मात् तस्य नाशो वा निरासो वा न सम्भवति। उक्तं हि गौडपादाचार्यैः माण्डूक्यकारिकायां- प्रपञ्चो यदि विद्येत निवर्तेत न संशयः इति। अतः अद्वैतवादः अजातवाद इत्यपि उच्यते। यद्यपि अद्वैतिभिरपि व्यावहारिकदशायां जगतः सत्ता अङ्गीक्रियते।

## १५.२.४) माया

माया ब्रह्मणः शक्तिविशेषा तत एव सम्भूता। मायायाः नामान्तराणि- इयं माया अज्ञानम् अविद्या प्रकृतिः अक्षरम् अव्यक्तम् इत्यादिशब्दैः व्यवह्रियते। केचन एवं वदन्ति सत्त्वरजस्तमोगुणानां साम्यावस्था प्रकृतिरित्युच्यते। तस्या एव भेदद्वयम्। शुद्धसत्त्वप्रधाना भवति माया। मलिनसत्त्वप्रधाना भवति अविद्या। केषाञ्चित् मते ईश्वरोपाधिः माया जीवोपाधिः अविद्या।

मायास्वरूपं किमिति चेत् माया न सत् नापि असत्। त्रिषु कालेषु यस्य बाधः न भवति तत् सत्। सत् पदार्थस्तु ब्रह्मैव न माया, तस्या ब्रह्मज्ञानानन्तरं बाधितत्वात्। यत् कदापि न प्रतीयते तत् असत् यथा खपुष्पं शशशृङ्गम् इत्यादयः। माया तु प्रतीयते अतः न असत्। एवं च माया सदसद्भ्यामनिर्वचनीया। शंकरभगवत्पादेन विवेकचूडामणौ मायायाः स्वरूपमेवमुक्तं-

सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो।

साङ्गाप्यनङ्गाप्युभयात्मिका नो महाद्भूतानिर्वचनीयरूपा।

गुणत्रयाणां सत्त्वरजस्तमसां समूहो भवति माया। मायायाः त्रिगुणत्वे विद्वांसः एवं श्रुतिवाक्यं प्रमाणरूपेण दर्शयन्ति- अजामेकां लोहितशुक्लकृष्णाम् इति। अत्र लोहितशुक्लकृष्णवर्णा यथाक्रमं रजःसत्त्वतमसां लिङ्गभूताः। श्रीमद्भगवद्गीतायामपि उच्यते- दैवी ह्येषा गुणमयी मम माया दुरत्यया। माया अज्ञानमिति शब्देनापि व्यवह्रियते। अज्ञानशब्दस्य अर्थस्तु ज्ञानाभाव इति न। अज्ञानं न अभावपदार्थः। अत्र अज्ञानशब्दस्य नञर्थः अभावे न अपि तु विरोधार्थे स्वीकरणीयः। एवम् अज्ञानशब्दस्य अर्थो भवति ज्ञानविरोधि। ज्ञानमाच्छादयति इत्यतः अज्ञानम्। एतत् सर्वं मनसि निधाय एव सदानन्दयोगीन्द्रेण

अज्ञानलक्षणमुक्तम्- अज्ञानं तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चित् इति वदन्ति।

## १५.२.५) जीवस्वरूपम्

अद्वैते तु ब्रह्मणः जीवो न भिन्नः। ब्रह्मैव मायासंसर्गात् उपाधिपरिच्छिन्नं सत् जीव इत्युच्यते। अत एव अत्र बहुजीववादः न सम्भवति। जीवस्य परिमाणमपि विभुपरिमाणमित्युच्यते। जीवविषये अद्वैते मतत्रयमस्ति। तानि च प्रतिबिम्बवादमाश्रित्य अवच्छेदवादमाश्रित्य आभासवादमाश्रित्य च उत्पन्नानि। प्रतिबिम्बवादे अज्ञाने चित्प्रतिबिम्ब एव जीवः। अवच्छेदपक्षे तु अन्तःकरणावच्छिन्नं चैतन्यं जीवः। किञ्च ब्रह्मण आभासमात्रं जीव इत्यपि केषाञ्चित् मतम्।

## १५.२.६) प्रमाणानि

अद्वैतवेदान्ते षट् प्रमाणानि अङ्गीकृतानि। तानि हि प्रत्यक्षम् अनुमानम् उपमानं शब्दः अर्थापत्तिः अनुपलब्धिः इत्येतानि।

## १५.२.७) मोक्षस्वरूपं तत्साधनानि च

ब्रह्मैक्यानुभूतिरेव मोक्षः। तथाहि निर्गुणब्रह्मविद्यानुशीलनकारिणाम् अहं ब्रह्मास्मि इत्याकारिका अनुभूतिरेव मोक्ष इत्युच्यते। अयं मोक्षः अद्वैते न कस्यचित् नूतनस्य वस्तुनः प्राप्तिः। यथा कण्ठस्था मणिमाला अज्ञानात् अपगता इति भाति अनन्तरं तस्य ज्ञाने सति सा प्राप्ता इव भवति तथैव जीवानां मोक्षप्राप्तिः। जीवस्य ब्रह्मणा सह अभेद एव अस्ति वस्तुतः, अज्ञानात् भेद इति मन्यन्ते। अज्ञाननाशे एव स्वस्वरूपस्य ज्ञानं सम्भवति तदा च मुक्तिः। अतः ज्ञानादेव मोक्षः न तु कर्मणा। कर्म तु चित्तशुद्धिं प्रति परम्परया कारणं भवितुमर्हति। उक्तं हि मुण्डकोपनिषदि-

ज्ञानप्रसादेन विशुद्धसत्त्वः ततस्तु तं पश्यति निष्कलं ध्यायमानः। (३.१.८)

**कथं मोक्षप्राप्तये यत्नः कर्तव्यः-** शमदमादिषट्सम्पत्तिसम्पन्नः अधिकारी निष्कामतया नित्यनैमित्तिकादि कर्म आचरति चेत् तस्य अन्तःकरणं शुद्धं भवति। शुद्धान्तःकरणेनैव आत्मदर्शनं सम्भवति। तथाहि शंकराचार्यवचनं शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने करणम् इति। एतादृशेन शुद्धचित्तेन अधिकारिणा श्रवणं मननं निदिध्यासनं अभ्यसनीयम्। "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतिप्रमाणात् श्रवणं मननं निदिध्यासनमेव आत्मसाक्षात्कारे उपायभूतम्। एवञ्च एतेषाम् अभ्यासेन यदा अहं ब्रह्मास्मि इत्याकारिका अनुभूतिर्जायते तदा यथार्थानुभवः भवति। तदैव सर्वं खल्विदं ब्रह्म इत्यस्य सम्यक् अनुभवः सञ्जायते जगत् च स्वप्नवत् मिथ्येति प्रतीयते।

## १५.२.८) मोक्षफलम्

जननमरणलक्षणात् संसारचक्रात् मुक्तिरेव मोक्षः। संसार एव बन्धः। यदा ब्रह्मैक्यानुभूतिः भवति तदा जगत् मिथ्येति प्रतीयते। ईदृशे मिथ्याभूते जगति जीवस्य पुनरागमनं न सम्भवति। श्रुतावपि न स



पुनरावर्तते इति मुक्तस्य पुनः संसारचक्रे आवर्तनं निरुद्धम्। स्मृतावपि उक्तं मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते। एवञ्च दुःखरूपं संसारचक्रं भित्वा ब्रह्मीभूय आनन्दानुभव एव मोक्षस्य फलम्।



## पाठगतप्रश्नाः-१

१. उत्तरमीमांसादर्शनं कस्य नामान्तरम्।
२. वेदान्तदर्शनं कं ग्रन्थमाधारीकृत्य प्रारब्धम्।
३. वेदान्तशब्देन किमुच्यते।
४. वेदान्तदर्शनस्य प्रवर्तकः कः।
५. ब्रह्मसूत्रे कति अध्यायाः सन्ति। तेषां नामानि लिखत।
६. अद्वैतवेदान्तस्य प्रवर्तकः कः।
७. अद्वैतवेदान्ते शंकरपरवर्तिनाम् त्रयाणाम् आचार्याणां नामानि लिखत।
८. सुरेश्वराचार्यस्य गुरुः कः।
९. अद्वैतशब्दस्य अर्थं दर्शयत।
१०. पञ्चपादिका केन रचिता, किमाधारीकृत्य च।
११. ब्रह्मणः स्वरूपलक्षणं किम्।
१२. ब्रह्मणः तटस्थलक्षणं किम्।
१३. जीवः अद्वैते किंस्वरूपः किंपरिमाणश्च।
१४. अद्वैते जगत् कीदृशम्।
१५. अद्वैतवेदान्ते कति प्रमाणानि अङ्गीकृतानि। कानि च तानि।

## १५.३) शुद्धाद्वैतम्

शुद्धाद्वैतस्य प्रवर्तको भवति वल्लभाचार्यः। अनेन आचार्येण शंकराचार्येण अद्वैतवेदान्ते प्रतिपादितस्य मायावादस्य प्रमाणपुरःसरं खण्डनं कृत्वा शुद्धाद्वैतस्य प्रतिष्ठापनं कृतम्। तथा च निर्गुणरूपाया प्रेमलक्षणायाः भक्तेः प्रचारः कृतः। अस्या एव व्यावहारिकं स्वरूपं भवति पुष्टिमार्गः। अस्मिन् दर्शने कारणरूपेण किञ्च कार्यरूपेण ब्रह्म शुद्धमेव तिष्ठति। उक्तं हि गोस्वामिगिरिधराचार्येण-

मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः।
कार्यकारणरूपं हि शुद्धं ब्रह्म न मापिकम्।

**शुद्धाद्वैतशब्दनिर्वचनम्-** शुद्धाद्वैतशब्दः द्विधा व्याक्रियते-



१. शुद्धयोः अद्वैतं शुद्धाद्वैतम् इति षष्ठीतत्पुरुषः। तन्नाम शुद्धयोः जगज्जीवयोः ब्रह्मणः अद्वैतम् अभिन्नत्वं शुद्धाद्वैतं जगत् जीवश्च ब्रह्मणः अभिन्न एव इति तात्पर्यम्।

२. शुद्धं च अद्वैतं च शुद्धाद्वैतमिति कर्मधारयः। तस्यार्थः ब्रह्मणः यद् अद्वैतं तच्च शुद्धं मायासम्बन्धरहिम् इत्यर्थः।

## १५.३.१) आचार्यपरम्परा

यद्यपि शुद्धाद्वैतसम्प्रदायस्य प्रवर्तको भवति वल्लभाचार्यः तथापि तेनापि रुद्रसम्प्रदायस्यैव मतं किञ्चित् अभिनवरूपेण उपस्थापितमिति केचन विद्वांसः। रुद्रसम्प्रदायस्य प्रवर्तको भवति विष्णुस्वामी। अतः शुद्धाद्वैतस्य आचार्यपरम्परायाम् एतस्य विषयेऽपि चर्चा विधेया।

**विष्णुस्वामी-** वैष्णवानां ये चत्वारः सम्प्रदायाः सन्ति तत्र रुद्रसम्प्रदायस्य प्रवर्तको भवति अयमाचार्यः। त्रयोदशशतकस्य मध्यभागः अस्य आचार्यस्य समयः आसीत्। प्रसिद्धटीकाकारेण श्रीधरस्वामिना स्वभावार्थटीकायां विष्णुस्वामिरचितस्य सर्वज्ञसूक्तस्य बहुशः उल्लेखः कृतः। सैद्धान्तिकपक्षे व्यावहारिकपक्षे च वल्लभाचार्येण अस्मात् आचार्यात् स्वमतं भिन्नं सम्पादितम्। अत एव परमार्थपक्षे शुद्धाद्वैतस्य व्यावहारिकपक्षे पुष्टिमार्गस्य विधानं जातम्।

**वल्लभाचार्यः-** दर्शनस्यास्य प्रवर्तक आचार्यः यज्ञनारायणभट्टस्य वंशजः आसीत्। यद्यपि अस्य कालविषये मतिमताम् अनैक्यम् अस्ति तथापि षोडशशतकः अस्य समयकाल इति साम्प्रदायिकाः। वाराणस्याम् अधीतशास्त्रोऽयम् स्वकुशाग्रधीकारणात् बाल-सरस्वती-वाक्पतिः इत्युपाधिना भूषितः। यद्यपि अनेन आचार्येण लिखिताः चतुरशीतिः ग्रन्थाः सन्ति इति सम्प्रदाये प्रसिद्धिः तथापि त्रिंशत् एव अद्यत्वे उपलभ्यन्ते। केचन प्रसिद्धा ग्रन्था यथा -

अणुभाष्यम्- ब्रह्मसूत्रस्य उपरि लिखितं भाष्यम्।

सुबोधिनी- श्रीमद्भागवतस्य टीका।

पूर्वमीमांसाभाष्यम्- जैमिनिसूत्राणां भाष्यम्।

**गोपीनाथः-** अयं भवति वल्लभाचार्यस्य ज्येष्ठः पुत्रः। वल्लभाचार्यस्य प्रयाणानन्तरम् अनेनैव सम्प्रदायः स्वहस्तेन रक्षितः। एषोऽपि आसीत् महान् विद्वान् शास्त्रेषु निष्णातः। यद्यपि साधनदीपिका इत्याख्यः एक एव ग्रन्थ उपलभ्यते परन्तु इतोऽपि त्रयाणां ग्रन्थानाम् उल्लेखः प्राप्यते। ते हि सेवाविधिः नामनिरूपणविधिः वल्लभाष्टकम् इत्येते।

**विट्ठलनाथः-** वल्लभाचार्यस्य कनिष्ठः पुत्र एष षोडशशतके जनिं प्राप्तवान्। मेधावी अयम् ऊनविंशे एव वयसि वेदं किञ्च श्रीमद्भागवतम् अधीतवान्। सम्प्रदाये अस्य प्रसिद्धिः अनेकक्षितिपश्रेणिमूर्धासक्तपदाम्बुजः इति अस्ति। विदुषोऽस्य प्रायः पञ्चाशत् ग्रन्थाः सम्प्रदाये प्रसिद्धाः। तन्मध्ये प्रमुखा यथा श्रीवल्लभाष्टकं, श्रीस्फुरत्कृष्णप्रेमामृतं, श्रीयमुनाष्टपदी, ललितत्रिभङ्गस्तोत्रम् इत्यादयः।



**गोस्वामिगिरिधराचार्यः-** अयमासीत् विठ्ठलनाथस्य ज्येष्ठपुत्रः। पञ्चचत्वारिंशत् वयसि एव अयम् आचार्यपदवीं प्राप्तवान्। अनेन कृतौ द्वौ ग्रन्थौ यथा गद्यमन्त्रटीका, उत्सर्वनिर्णयस्तोत्रं च।

## १५.३.२) ब्रह्म

ब्रह्म सच्चिदानन्दस्वरूपम्। अत्र ब्रह्म सविशेषं निर्विशेषमिति द्वैविध्यं नाप्नोति। एकमेव ब्रह्म अस्तिवाचिशब्देन सगुणरूपेण निरूप्यते किञ्च नास्तिवाचिशब्देन निर्गुणरूपेण निरूप्यते। व्यावहारिकावस्थायां ब्रह्म जगतः सृष्टेः स्थितेः प्रलयस्य च कर्ता भवति। ब्रह्म सर्वज्ञं सर्वशक्तिमत् भवति। सविशेषं ब्रह्म नामरूपाभ्यां व्याकृतं तथा उपाधिविशिष्टं भवति। इदं स्वरूपमेव ईश्वर इत्युच्यते। उपासनार्थं भक्तानां बहु इष्टं भवति इदं स्वरूपम्। नामरूपाभ्याम् अव्याकृतं निरुपाधिकं भवति निर्विशेषं ब्रह्म। इदमेव परमात्मेति उच्यते। एतदेव यथार्थस्वरूपं ब्रह्मणः निर्विकल्पकं निराकाररूपम् सत्।

अत्र ब्रह्मणः द्वे स्वरूपे अङ्गीक्रियेते। वल्लभमतानुसारं ब्रह्म सर्वशक्तिमत् सर्वस्वतन्त्रं तथा सर्वव्यापकं गुणरहितं सर्वज्ञम्। ऐश्वर्यादिषड्गुणोपेतम् अपि तत् सजातीयविजातीयस्वगतभेदशून्यं भवति। तदेव प्रकृतिरूपेण भोग्यं भवति पुरुषरूपेण भोक्ता भवति तथा च द्वयोरपि नियामकः ईश्वरः। ब्रह्मणः अनन्तरूपाणां सत्त्वेऽपि तत् कूटस्थं सर्वविरुद्धधर्माणामाश्रयभूतं तर्केण अगम्यं च भवति।

अत्रापि ब्रह्मणः जगतः अभिन्ननिमित्तोपादानकारणत्वम् अङ्गीकृतम्। यथा कश्चित् मृत्पिण्डं ज्ञात्वा सर्वस्यापि मृदः ज्ञानं सम्भवति तथा ब्रह्मणः ज्ञाने सति ततः उत्पन्नां जीवानां जगतश्च ज्ञानं सम्भवति। यथा मृदपि सत्यं तद्विकारः घटोऽपि सत्यः तद्वदेव ब्रह्म सत्यं तत उत्पन्नं जगत् जीवोऽपि सत्यः। एवं च ब्रह्मणो निर्गुणत्वं तथा अनन्तगुणत्वं यच्च एकस्मिन् विरुध्यते तत् प्रतिपाद्यते। वल्लभमते यथा सर्पः कदाचित् कुण्डलीरूपेण तिष्ठति कदाचित् रज्जुवत् लम्बो भवति तद्वदेव ब्रह्मणः रूपद्वयं सम्भवति। निर्गुणमपि ब्रह्म भक्तानां कामनानुसारं नैकानि रूपाणि धत्ते।

बालकृष्णभट्टमतानुसारं श्रीकृष्ण एव परब्रह्म पुरुषोत्तमः। श्रीमद्भगवद्गीतावचनात् श्रीकृष्णस्य निर्विशेषत्वादिगुणाः वर्ण्यन्ते। यथा- मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय। एवं च अपाणिपादो जनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः इत्यादिश्रुतिवाक्यानां श्रीकृष्णे अन्वयं साधयन्ति। शुद्धाद्वैतमतानुसारं ब्रह्मणः रूपद्वयं वक्तुं शक्यम् तद्धि परब्रह्म पुरुषोत्तम इत्येकम् अपरं च अक्षरं ब्रह्म।

**परब्रह्म पुरुषोत्तम-** श्रीकृष्ण एव द्विभुजः अथवा चतुर्भुजः सन् वृन्दावने अथवा वैकुण्ठादिषु स्थानेषु तद्ध्यानपरैः भक्तैः सह रममाणः तिष्ठति। भक्ताश्च तेन सह आनन्दमनुभवन्ति।

**अक्षरब्रह्म-** श्रीकृष्ण एव समग्रस्य प्रपञ्चस्य कारणस्वरूपो भवति। तथाहि तस्य यदा इच्छा भवति बहु स्याम प्रजायेय इति तदा ततः आनन्दांशस्य तिरोभावो भवति। कश्चन नवीनमेव रूपम् आविर्भूयते तदा यच्च सर्वकारणकारणम्। इदमेव अक्षरब्रह्मशब्दवाच्यम्। उक्तं च श्रीमद्भागवते- “तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्” इति (३/११/४१)। एतस्मात् अदृश्यत्वादिगुणस्वरूपात् अक्षरादेव देवमनुष्यगन्धर्वादीनां भूतानामुत्पत्तिः भवति।



## १५.३.३) जीवस्वरूपम्

भगवान् एव रमणेच्छया आत्मनः आनन्दांशं तिरोधाय केवलं सद्रूपेण चिदंशेन च आत्मानं बहुधा प्रकटीकरोति। तदैक्षत बहु स्याम प्रजायेय इति श्रुतिवाक्यमेव एतादृशमतस्य पोषकम्। ईश्वरस्य एव इदं नूतनं रूपं जीव इत्युच्यते। अतः जीवस्य उत्पत्तिः न भवति देहधारणवशादेव जायते म्रियते इत्यादयः व्यवहाराः सम्भवन्ति। शुद्धाद्वैते जीवः अणुपरिमाणः भवति। अत्र जीवस्य त्रयो भेदाः सम्भवन्ति। ते हि शुद्धजीवः, संसारी जीवः, मुक्तजीवः।

**शुद्धजीवः-** यथा अग्नेः स्फुलिङ्गा उत्पद्यन्ते तथैव कारणस्वरूपात् अक्षरात् जीवः व्युच्चरितः भवति। अविद्यासम्पर्कात् पूर्वम् अतिरोहितानन्दः ऐश्वर्यादिषड्गुणोपेतः जीवः शुद्धजीव इत्युच्यते।

**संसारी जीवः-** तिरोहिते आनन्दांशे मायासंसर्गाच्च ऐश्वर्यादीनां लोपे सति जीवः संसारी इत्युच्यते। अविद्यासम्बन्धवशात् तस्य बन्धः जायते अत एव जननमरणचक्रे आबद्धो भवति। अयं जीवः सर्वविधसुखदुःखानां भोगं करोति तदर्थं च स्थूलसूक्ष्मादिनानाशरीराणां धारणं करोति।

**मुक्तजीवः-** संसारी जीवः यदा अनेकप्रकारकाणां दुःखानां भोगवशात् आत्मानं उद्धर्तुकामः भगवतः शरणमायाति तदा भगवदनुग्रहेण स मायायाः मुक्तो भूत्वा मूलस्वरूपमाप्नोति। इयमेव जीवस्य मुक्तावस्था।

## १५.३.४) जगत्

अत्र जगत् सत्यस्वरूपं भवति। जगत् साक्षात् ईश्वरकार्यं भवति न च प्राकृतं न वा परमाणुजन्यं न वा विवर्तरूपम् असद्रूपं वा किञ्चित्। "नासतो विद्यते भावो नाभावो विद्यते सतः" इति श्रीमद्भगवद्गीतावचनात् सद्रूपात् परमात्मनः असद्रूपस्य प्रपञ्चस्य सम्भवः असम्भवः। अत एतेषां मते-प्रपञ्चो भगवत्कार्यः तद्रूपो माययाभवत्।

इदं जगत् अधिकारिभेदेन भिन्नतया प्रतिभाति। तथाहि उत्तमाधिकारिणां सविधे जगदिदं ब्रह्मात्मकं शुद्धं च भवति। शास्त्राभ्यासेन संस्कृतमतीनां मते तु जगत् परमात्मधर्मेण युक्तं सत् सत्यभूतं भवति। जगति मायाधर्मा ये भवन्ति ते तु मिथ्याभूताः। अविवेकिनस्तु मन्यन्ते जगत् ब्रह्मणः मायायाश्च धर्मेण उत्पन्नं किमपि सत् वस्तु। हरितोपनेत्रेण यथा सर्वं हरितं दृश्यते परन्तु तस्य हरितवर्णं मिथ्या भवति तद्वत् मायाधर्माः सर्वे मिथ्या इति एते नाङ्गीकुर्वन्ति। इयं तु भवति अधिकारिणां भेददृष्टिः, न हि जगतः वास्तविकं स्वरूपमीदृशम्। जगत् तु नित्यं सत्यं ब्रह्मस्वरूपं भवति।

## १५.३.५) प्रमाणानि

शुद्धाद्वैते त्रीण्येव प्रमाणानि अङ्गीकृतानि। तानि हि प्रत्यक्षम् अनुमानं शब्दः इति।

श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्।
प्रमाणेष्वनवस्थानाद् विकल्पात् स विरज्यते।

इति श्रीमद्भागवतवचनानुसारं यद्यपि गोस्वामिपुरुषोत्तमेन प्रस्थानरत्नाकरे एतेषामुल्लेखः कृतः परन्तु अधिका विद्वांसः ऐतिह्यं शब्दप्रमाणे एव अन्तर्भावयन्ति। अतः त्रीण्येव प्रमाणानि।



### १५.३.६) मोक्षस्वरूपं तत्साधनं च

वैष्णवदर्शने आध्यात्मिकात् आधिदैविकात् आधिभौतिकात् तापात् ऐकान्तिकी निवृत्तिः एव मोक्षः निर्वाणं वा। मायया बद्धस्य जीवस्य मुक्तिः न भवति। मुक्तस्य जीवस्य पञ्चविधात् अध्यासात् देहाध्यासात् इन्द्रियाध्यासात् प्राणाध्यासात् अन्तःकरणाध्यासात् स्वरूपविस्मृतेश्च निवृत्तिः भवति। अध्यासात् मुक्तौ सत्यां जन्ममरणात् स्वतः निवृत्तिः भवति। मुक्तिरपि द्विप्रकारका भवति सात्त्विकानां भवति सायुज्यमुक्तिः निर्गुणानां भवति ब्रह्मभावमुक्तिः। सायुज्यमुक्तिर्नाम भगवल्लीलास्वादः। जीवस्य श्रीकृष्णेन सह दिव्यवृन्दावने लीला तथा तेन सह नित्यसम्बन्ध एव मोक्षः। केचन उत्तमाधिकारिणः जीवाः सत्सङ्गादिपुण्येन भक्तिमार्गोक्तानाम् अनुष्ठानेन च सालोक्यरूपां सायुज्यरूपां सामीप्यरूपां सारूप्यरूपां मुक्तिं च अधिगच्छन्ति। ततः अक्षरब्रह्मणि लीना भवन्ति। एषा एव ब्रह्मभावमुक्तिः सा च परमानन्दस्वरूपा।

वल्लभाचार्योक्तां क्रममुक्तिं सद्योमुक्तिं च आधारीकृत्य बालकृष्णभट्टेन प्रतिपादिता चतुर्विधा मुक्तिः। आद्या **ऐहिकी** मुक्तिः यथा सनकादिमुनीनाम्। द्वितीया **पारलौकिकी** उत्तमाधिकारिणां वृन्दावनादिषु दिव्यलोकेषु स्थितिः। तृतीया **परममुक्तिः** शुद्धब्रह्मरूपेण अवस्थानम्। चतुर्थी देवानां **नित्यलीलाप्रवेशरूपा** मुक्तिः।

शुद्धाद्वैते मोक्षसाधनत्वेन पुष्टिमार्गस्य विधानं कृतम्। आचार्येण आनन्दतीर्थेन यथा स्वदर्शने मोक्षसाधनत्वेन भक्तिमार्गस्य विधानं कृतं तथैव वल्लभाचार्येण पुष्टिमार्गस्य आविष्कारो विहितः। पुष्टिमार्गस्य नामकरणस्य मुख्यमाधारं भवति श्रीमद्भागवतमहापुराणम्। तत्र द्वितीये स्कन्धे पुष्टिशब्दस्य वैशद्येन आलोचनं कृतम्। पुष्टिर्नाम पोषणम्। भगवदनुग्रहेण एव जीवस्य पोषणं भवति यथा उक्तं श्रीमद्भागवते- पोषणं तदनुग्रहः। भक्तिमार्गस्य एव किञ्चित् नामान्तरं भवति पुष्टिमार्गः। यद्यपि वल्लभाचार्यः कर्म ज्ञानं भक्तिः एतेषां त्रयाणामेव भगवत्प्राप्त्युपायत्वेन ग्रहणं कृतवान् तथापि भक्तिमार्गस्यैव तेन उत्कर्षता अङ्गीकृता।



## पाठगतप्रश्नाः-२

१६. शुद्धाद्वैतस्य प्रवर्तकः कः।

१७. शुद्धाद्वैतशब्दस्य निर्वचनं प्रदर्शयत।

१८. ललितत्रिभङ्गस्तोत्रं केन रचितम्।।

१९. कतिप्रकारकाः जीवाः सम्भवन्ति शुद्धाद्वैते।

२०. जगत् शुद्धाद्वैते सत्यं वा मिथ्या वा।

२१. प्रपञ्चस्य निमित्तकारणं किं शुद्धाद्वैतानुसारम्।

२२. कति प्रमाणानि स्वीकृतानि शुद्धाद्वैते।



२३. जीवस्य मुक्तिः किंस्वरूपा शुद्धाद्वैते।

२४. ब्रह्मसूत्रस्य उपरि शुद्धाद्वैतसम्प्रदायसम्मतं भाष्यं किं केन च रचितम्।

२५. जीवस्य परिमाणं किम्।

## १५.४) अचिन्त्यभेदाभेदः

आचार्यः बलदेवः अस्य दर्शनस्य प्रवर्तकः। अस्य अपरं नाम भवति विद्याभूषणः। अनेन सूत्रभाष्याणामुपरि गोविन्दभाष्यनामकं भाष्यं रचितम्। मतमिदं श्रीकृष्णचैतन्येन आदृतमतः गौडीयवैष्णवैः अनुसर्यते परिपाल्यते च। एवं श्रूयते यत् श्रीकृष्णचैतन्यः श्रीमद्भागवतं किञ्च मध्वाचार्यस्य पूर्णप्रज्ञभाष्यं स्वीयमतरूपेण स्वीकृत्य लोकेभ्यः प्रसारयति स्म। तद्भाष्यं यत्र यत्र श्रीमद्भागवतस्य विरोधि भवति तत्र तत्र तेन परिष्कारः विधीयते स्म। सा व्याख्या एव परम्पराक्रमेण श्रीजीवगोस्वामिनः विश्वनाथचक्रवर्तिनश्च विद्याभूषणमहोदयैः प्राप्ता। तामेव व्याख्यां श्रीगोविन्देन स्वप्नादिष्टः सन् स भाष्यरूपेण व्यरचयत्।

अस्मिन् मते वेदाध्ययनेन वेदविहितकर्मणा च यस्य चित्तं शुद्धं स नित्यानित्यविवेकवान् अधिकारी भवति। अत्र एते पदार्थाः अङ्गीक्रियन्ते- ईश्वरः जीवः प्रकृतिः कालः कर्म। जीवादिपदार्थचतुष्टयं ब्रह्मसम्बद्धं कर्म केवलं जडं तच्च अदृष्टादिनानाशब्दैः व्यवह्रियते। कर्म अनादि परन्तु विनाशि।

### १५.४.१) ब्रह्म

विशुद्धः अनन्तगुणयुक्तः अचिन्त्यशक्तिमान् सच्चिदानन्दविग्रहः श्रीकृष्ण एव जगत्कारणः। अयं नित्यज्ञानानन्दादियुक्तः विभुः। प्रकृतिना अस्पृष्टः सन् स्वतन्त्रः। अयमेव जीवस्य भोगापवर्गयोः विधानं करोति। रूपहीनः सन्नपि भक्तानाम् उद्धाराय धृतविग्रहो भवति। लोकानां पालनाय एव अयं धरायामवतरति। तथाहि त्रिविधा अवताराः स्वीक्रियन्ते अंशावतारः गुणावतारः शक्त्यावेशावतारः। तत्र अंशावतारः द्विविधः पुरुषावतारः यथा कारणार्णवशायी भगवान् नारायणः, लीलावतारः मत्स्यकूर्मादिः। गुणावतारो यथा ब्रह्मविष्णुमहेशादिः। शक्त्यावेशावतारः यथा सनकव्यासादिः।

### १५.४.२) जीवः

जीवः ब्रह्मणः एव एकदेशः परन्तु ततः भिन्नः अणुपरिमाणः। भवति अयं ज्ञाता सत्त्वादिगुणत्रययुक्तः परमात्माधीनः श्रीहरेः नित्यदासस्वरूपः। परमात्मनः अंशिनः अंशः किञ्च तस्यैव चैतन्यरूप इति कृत्वा अभिन्नः, अणुपरिमाणः ईश्वरनियम्य इत्यतः भिन्नोऽपि भवति जीवः। एवं परमेश्वरस्य अचिन्त्यशक्तिप्रभावेण भिन्नोऽपि अभिन्नः इत्यतः दर्शनमिदम् अचिन्त्यभेदाभेद इति उच्यते। परमात्मनः अंशोऽपि द्विप्रकारकः भवति स्वांशः स्वरूपांशः च। स्वांशो नाम मत्स्यादिः अवतारः स्वीकरणीयः। स्वरूपांशो नाम जीवः।



### १५.४.३) जगत्

परमात्मा मायाशक्तिप्रभावेण ईक्षणमात्रेणैव जगत् सृजति। इयं माया भवति सत्त्वरजस्तमसां साम्यावस्था तथा नित्या। माया प्रकृतिः अविद्या इत्यादिनानाशब्दैः व्यवह्रियते। मायाशक्त्या जीवशक्त्या च परमेश्वरः जगत उपादानकारणं पराशक्त्या च निमित्तकारणं भवति। एतेन परमात्मनः कूटस्थत्वस्य विरोधो न भवति। यतः उपादाकारणस्यैव परिणामो भवति न तु निमित्तकारणस्य। निमित्तकारणरूपेण स कूटस्थ एव तिष्ठति। जगन्निर्माणाय परमेश्वरस्य ईक्षणं सत्यं, तस्मादेव पृथिव्यादिभूतानामपि सत्यत्वम्।

अत्र सृष्टिप्रक्रिया एवंरूपा- आदौ परमेश्वर एव आसीत्। ततः माया उत्पन्ना, परमात्मनः ईक्षणेनैव सा कार्यप्रवृत्ता भवति। तत अक्षरवाच्यम् अव्यक्तं जायते। अक्षरात् महतः उत्पत्तिः महतः अहंकारस्य। सात्त्विकाहंकारात् मनसः देवतानां च। राजसाहंकारात् इन्द्रियाणामुत्पत्तिः भवति। तामसाहंकारात् शब्दतन्मात्राणां ततः पञ्चभूतानि जायन्ते। सर्वत्रैव ब्रह्म कारणात्मना प्रविश्य सृष्टिकार्यं सम्पादयति। अत्र मुख्यप्राणः साक्षात् ब्रह्मणः उत्पन्नः। अत्र मुख्यप्राणः भौतिकात् वायोः भिन्नः सन्नपि न वह्न्यादिवत् सम्पूर्णः भिन्नः पदार्थः अपि तु वायुविशेषमात्रः। महाभूतानामुत्पत्त्यनन्तरं परमेश्वरस्य इच्छयैव पञ्चीकरणद्वारा नामरूपाभ्यां तेषाम् अभिव्यक्तिः भवति ततः स्थूलब्रह्माण्डस्य उत्पत्तिः भवति।

### १५.४.४) मोक्षस्वरूपं तत्साधनञ्च

यज्ञः दानं तपः शमदमादिः भक्तिः वैराग्यम् उपासना इत्यादीनामनुष्ठानेन भगवान् प्रत्यक्षः भवति। भक्तस्य भक्त्या प्रसन्नः सन् भगवान् स्वस्य अचिन्त्यकृपाशक्त्या भक्तस्य सविधे आत्मस्वरूपम् अभिव्यञ्जयति। एकरूपः सन्नपि स सख्यदासादिनानाभावेन भक्तस्य निकटे आत्मानं प्रकटीकरोति। जीवस्य वैराग्ये उदिते सति सन्न्याससवीकारस्यापि विधानमस्ति अस्मिन् मते। अत्रापि ज्ञानोत्पत्तौ यज्ञादिकर्माणाम् आवश्यकता नास्ति अतः ज्ञानकर्मसमुच्चयवादः अत्रापि नाङ्गीकृतः।

ब्रह्मलोके गमनानन्तरं श्रीकृष्णस्य सायुज्यमेव मुक्तिः। इयं मुक्तिः ब्रह्मज्ञाने सत्यपि यावत् प्रारब्धस्य क्षयो न भवति तावत् नोपलभ्यते। साधनेन सिद्धः स्थूलदेहत्यागानन्तरं सूक्ष्मशरीरेण अर्चिरादिद्वारा देवयानमार्गेण ब्रह्मलोकं गच्छति परंब्रह्म च प्राप्नोति। अथवा भगवान् तस्य अतिप्रियं भक्तम् अर्चिरादिव्यतिरेकेणैव गरुडकर्तृकं स्वधाम प्रापयति। अत्र तस्य सूक्ष्मदेहस्य नाशः किञ्च ब्रह्मलोके भोगार्थं योग्यं शरीरम् उत्पद्यते। सत्यसंकल्पः सत्यकामः पुरुषः अत्र दिव्यम् ऐश्वर्यम् अनुभवति। परमेश्वरस्य अनुग्रहेणैव स सर्वज्ञो भवति परन्तु जगत्सृष्टिसामर्थ्यं तस्य न भवति। ब्रह्मलोकात् मुक्तानां जगति पुनरावर्तनं न सम्भवति।



## पाठगतप्रश्नाः-३

२६. अचिन्त्यभेदाभेदसम्मतं भाष्यं केन रचितम्।

२७. गोविन्दभाष्यं कमाधारीकृत्य लिखितम्।



२८. परमात्मा कथम् जगत् सृजति।

२९. सात्त्विकाहंकारात् केषामुत्पत्तिः भवति।

३०. कतिविधा अवताराः स्वीक्रियन्ते।

३१. मत्स्यकूर्मादिः कीदृशः अवतारः।

३२. अचिन्त्यभेदाभेदे कः अधिकारी।

३३. मुक्तः पुरुषः सर्वज्ञः अल्पज्ञो वा।



## पाठसारः

उपनिषत्सु मानवानां परमपुरुषार्थसाधिका ब्रह्मविद्या उपदिष्टा अस्ति। अत एव उपनिषत् समग्रस्यापि वेदस्य सारभूता सती वेदान्तशब्देन व्यवह्रियते। उपनिषद्वाक्यानि आधारीकृत्यैव भगवता बादरायणेन सूत्रात्मकः ग्रन्थः प्रणीतः। अत्र आपातविरुद्धवाक्यानि समन्वितानि भवन्ति। एनं ग्रन्थमाश्रित्यैव विविधानि भाष्याणि रचितानि तदनुसारं सम्प्रदायोऽपि प्रारब्धः।

अद्वैतदर्शनं भवति शंकराचार्यप्रवर्तितम्। अत्र केवलं ब्रह्मण एव सत्ता अङ्गीक्रियते। शुद्धब्रह्मणः स्वरूपस्य प्रतिपादयितुम् अशक्यत्वात् नेति नेति मुखेन सर्वत्र व्यपदिश्यते। अतः द्वैतस्य निषेधात् इदम् अद्वैतमुच्यते। अत्र जगत् शुक्तिरूप्यवत् प्रातिभासिकं भवति न यथार्थम्। जीवः ब्रह्मस्वरूप एव भवति तस्य च विभुपरिमाणत्वमङ्गीक्रियते। मोक्षश्च विस्मृतस्य कण्ठस्थहारस्य प्राप्तिरिव भवति।

शुद्धाद्वैतदर्शनं वल्लभाचार्येण प्रवर्तितम्। वैष्णवसम्प्रदायेषु एव अस्य मतम् अन्तर्भवति। एतन्मते जगत् सत्यं भवति ब्रह्मण उत्पन्नत्वात्। जीवाः ब्रह्मण उत्पन्ना नित्यरूपाः अणुपरिमाणाः। अनेन मोक्षलाभार्थं कश्चित् पुष्टिमार्गः विहितः। मोक्षप्रकारा अपि विविधा दर्शिताः।

अत्यन्तं नवीनं दर्शनं भवति अचिन्त्यभेदाभेदः। अस्य प्रवर्तने मुख्यः वस्तुतः श्रीकृष्णचैतन्यः, यः मध्वाचार्यस्य पूर्णप्रज्ञभाष्यं श्रीभागवतानुसारं व्याख्याति स्म। तस्यैव ग्रन्थरूपं प्रदत्तवान् बलदेवः गोविन्दभाष्यरूपेण। अत्रापि जगत् सत्यं भवति। जीवा ब्रह्मणः उत्पन्नाः तस्यैव अंशस्वरूपाः परन्तु ततो भिन्ना भवन्ति। जीवस्य परिमाणम् अणुपरिमाणं भवति। अत्र श्रीकृष्णसायुज्यमेव मुक्तिः सख्यदास्यादिभावेन तस्य सेवा एव मोक्षोपायः।



## पाठान्तप्रश्नाः

१. वेदान्तदर्शनस्य विषये किञ्चित् आलोचयत।

२. अद्वैतवेदान्तस्य कतिपयानाम् आचार्याणां विषये समासेन निरूपयत।



३. अद्वैतवेदान्ते ब्रह्मस्वरूपम् आलोचयत।

४. मायायाः वैशिष्ट्यं विशदयत अद्वैतानुसारम्।

५. मोक्षः कथं प्राप्तव्य इत्यस्मिन् विषये अद्वैतशास्त्रे किमुपदिश्यते।

६. यथास्पृहं केषांचन शुद्धाद्वैतिनाम् आचार्याणां विषये विशदयत।

७. जीवानां स्वरूपं कथं प्रतिपाद्यते शुद्धाद्वैते।

८. पुष्टिमार्गेण किं भवति।

९. जीवस्य मुक्तिः किंस्वरूपा शुद्धाद्वैते।

१०. अचिन्त्यभेदाभेदे जीवस्य मुक्तिः कथं भवति प्रतिपादयत्।

११. शुद्धाद्वैते ब्रह्म स्वरूपं किमस्ति।

१२. सृष्टिप्रक्रिया कीदृशी अचिन्त्यभेदाभेदानुसारम्।

१३. अद्वैते कथं निर्गुणं ब्रह्म जगतः उपादानकारणं निमित्तकारणं च भवति।



## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि-१

१. उत्तरमीमांसादर्शनं वेदान्तदर्शनस्य नामान्तरम्।

२. वेदान्तदर्शनं ब्रह्मसूत्रम् आधारीकृत्य प्रारब्धम्।

३. वेदान्तशब्देन उपनिषद् उच्यते।

४. वेदान्तदर्शनस्य प्रवर्तकः भगवान् बादरायणः।

५. ब्रह्मसूत्रे चत्वारः अध्यायाः सन्ति। तेषां नामानि यथाक्रमं समन्वयाध्यायः, अविरोधाध्यायः, साधनाध्यायः, फलाध्यायः।

६. अद्वैतवेदान्तस्य प्रवर्तकः शंकराचार्यः।

७. अद्वैतवेदान्ते शंकरपरवर्तिनः त्रयः आचार्या यथा पद्मपादाचार्यः सुरेश्वराचार्यः वाचस्पतिमिश्रः।

८. सुरेश्वराचार्यस्य गुरुः शंकराचार्यः।

९. नास्ति द्वैतं यत्र तद् अद्वैतं द्वैतनिषेधः अस्यार्थः।

१०. पञ्चपादिका पद्मपादाचार्येण रचिता, ब्रह्मसूत्रस्य चतुःसुत्रीभाष्यमाधारीकृत्य।

११. ब्रह्मणः स्वरूपलक्षणं सच्चिदानन्दत्वम्।

१२. ब्रह्मणः तटस्थलक्षणं जगज्जन्मादिकारणत्वम्।

१३. जीवः अद्वैते ब्रह्मस्वरूप एव। स च विभुपरिमाणः।

१४. अद्वैते जगत् शुक्तिरजतवत् प्रातिभासिकं मिथ्या।



१५. अद्वैतवेदान्ते षट् प्रमाणानि अङ्गीकृतानि। तानि हि प्रत्यक्षम् अनुमानम् उपमानं शब्दः अर्थापत्तिः अनुपलब्धिः।

**उत्तराणि-२**

१६. शुद्धाद्वैतस्य प्रवर्तकः वल्लभाचार्यः।

१७. शुद्धाद्वैतशब्दस्य निर्वचनं- शुद्धयोः अद्वैतं शुद्धाद्वैतमिति षष्ठीतत्पुरुषः, शुद्धं च अद्वैतं च शुद्धाद्वैतम् इति कर्मधारयसमासः।

१८. ललितत्रिभङ्गस्तोत्रं विठ्ठलनाथेन रचितम्।

१९. शुद्धजीवः संसारिजीवः मुक्तजीव इति त्रिविधा जीवाः सम्भवन्ति शुद्धाद्वैते।

२०. शुद्धाद्वैते जगत् सत्यं भवति।

२१. प्रपञ्चस्य निमित्तकारणं शुद्धाद्वैतानुसारं ब्रह्मैव भवति।

२२. प्रत्यक्षम् अनुमानं शब्द इति त्रीणि प्रमाणानि स्वीकृतानि शुद्धाद्वैते।

२३. भगवदनुग्रहेण मूलस्वरूपमाप्य शुद्धब्रह्मरूपेण अवस्थानमेव मुक्तिः।

२४. ब्रह्मसूत्रस्य उपरि शुद्धाद्वैतसम्प्रदायसम्मतं भाष्यं भवति अणुभाष्यं वल्लभाचार्येण रचितम्।

२५. जीवस्य परिमाणं भवति अणुपरिमाणम्।

**उत्तराणि-३**

२६. अचिन्त्यभेदाभेदसम्मतं भाष्यं बलदेवेन रचितम्।

२७. गोविन्दभाष्यं बादरायणप्रणीतं ब्रह्मसूत्रमाधारीकृत्य लिखितम्।

२८. परमात्मा ईक्षणमात्रेण जगत् सृजति।

२९. सात्त्विकाहंकारात् मनसः देवानामुत्पत्तिः भवति।

३०. त्रिविधा अवताराः स्वीक्रियन्ते अंशावतारः गुणावतारः शक्त्यावेशावतारः।

३१. मत्स्यकूर्मादिः लीलावतारः।

३२. अचिन्त्यभेदाभेदे नित्यानित्यविवेकवान् अधिकारी।

३३. मुक्तः पुरुषः सर्वज्ञः भवति।

॥ इति पञ्चदशः पाठः ॥



१६

# वेदान्तदर्शनम्-२

## भूमिका

भारतीयदर्शनपरम्परायां वेदान्तदर्शनं मूर्धन्यस्थानम् अलङ्करोति। तदिदं वेदान्तदर्शनं प्रस्थानत्रयम् आश्रित्य शोभते। शङ्कररामानुजमध्वाचार्यप्रभृतिभिः वेदान्तविद्यायाः आचारप्रचाराय भाष्यं विरच्य महदुपकृतम्। आचार्याणाम् अनुभवभेदेन तद्भाष्यव्याख्यासु अपि मतभेदाः संदृश्यन्ते। अतः अद्वितीयं वेदान्तदर्शनं विशिष्टाद्वैतं द्वैतं चेति बहुधा भेदेन व्याख्यातम्। तत्र रामानुजाचार्यः स्वानुभवानुगुणं वेदान्तसाहित्यं विशिष्टाद्वैतपरतया व्याख्याति। मध्वाचार्यस्तु द्वैतसिद्धान्तानुगुणं प्रस्थानत्रयं व्याख्याय द्वैतवेदान्तदर्शनं प्रवर्धयति। एवमेव अन्ये च आचार्याः स्वानुभवं परीक्ष्य तत्त्वसाक्षात्कारानुगुणं वेदान्तविद्यां बहुधा व्याख्यातवन्तः। एवं च अस्मिन् पाठे रामानुजाचार्यप्रवर्धितं विशिष्टाद्वैतदर्शनम्, निम्बार्काचार्यस्य द्वैताद्वैतदर्शनम्, मध्वाचार्यप्रवर्तितं द्वैतवेदान्तदर्शनम्, श्रीकण्ठाचार्यस्य शैवविशिष्टाद्वैतदर्शनम्, श्रीपतेः वीरशैवविशिष्टाद्वैतदर्शनं च निरूप्यते।



## उद्देश्यानि

पाठस्यास्याध्ययनेन -

- विशिष्टाद्वैतदर्शनस्य आचार्यपरम्परा ज्ञायते।
- विशिष्टाद्वैतदर्शनस्य तत्त्वत्रयविचारः अवगम्यते।
- विशिष्टाद्वैतदर्शनस्य जीवतत्त्वविचारः ज्ञातः स्यात्।
- शैवविशिष्टाद्वैतदर्शने जगत्स्वरूपम् अवगतं भवेत्।
- शैवविशिष्टाद्वैतदर्शने मोक्षस्वरूपं ज्ञातं स्यात्।
- विशिष्टाद्वैतप्रक्रियायां प्रमाणत्रयविचारः अवगतो भवेत्।
- शैवविशिष्टाद्वैतदर्शने जीवस्वरूपं ज्ञातं स्यात्।
- द्वैताद्वैतदर्शने मोक्षोपायः विज्ञातः भवेत्।
- द्वैतवेदान्तदर्शनस्य आचार्यपरम्परा अवगम्यते।
- द्वैतदर्शनानुसारं प्रमाणविचारः विज्ञातः स्यात्।
- द्वैतदर्शनानुसारं बन्धमोक्षविचारः ज्ञायते।
- द्वैतदर्शनानुसारं मोक्षोपायः (भक्तिः) स्पष्टो भविष्यति।



- द्वैताद्वैतदर्शने ब्रह्मस्वरूपं ज्ञातं स्यात्।
- वीरशैवविशिष्टाद्वैतदर्शने मोक्षस्वरूपं ज्ञातं स्यात्।
- वीरशैवविशिष्टाद्वैतदर्शनस्य सारः अवगतः भवेत्।

## १६.१) वैष्णवदार्शनिकपरम्परा

मुख्यतया प्राचीन-वैष्णवदार्शनिकसंप्रदायः चतुर्धा विभक्तः।

रामानुजं श्रीः स्वीचक्रे मध्वाचार्यं चतुर्मुखः।

श्रीविष्णुस्वामिनं रुद्रो निम्बादित्यं चतुःसनः। **(पद्मपुराणम्) इति।**

| संप्रदायः | आचार्यः | मतम् |
|---|---|---|
| श्रीसंप्रदायः (लक्ष्मीसंप्रदायः) | रामानुजाचार्यः | विशिष्टाद्वैतवेदान्तदर्शनम् |
| ब्रह्मसंप्रदायः | मध्वाचार्यः | द्वैतवेदान्तदर्शनम् |
| रुद्रसंप्रदायः | विष्णुस्वामी/वल्लभाचार्यः | शुद्धाद्वैतम् |
| सनकसंप्रदायः (हंससंप्रदायः) | निम्बार्काचार्यः | द्वैताद्वैतवेदान्तदर्शनम् |

## १६.२) रामानुजाचार्यस्य विशिष्टाद्वैतदर्शनम्

### १६.२.१) विशिष्टाद्वैतदर्शनस्य आचार्यपरम्परा

वैष्णववेदान्तदर्शने श्रीसम्प्रदायप्रवर्तितं विशिष्टाद्वैतवेदान्तदर्शनं प्रसिद्धम् अस्ति। श्रीसम्प्रदायः एव लक्ष्मीसम्प्रदायः इत्यपि ख्यातः वर्तते। अस्मिन् सम्प्रदाये नारायणः एव परमः आचार्यः। नारायणस्य तत्त्वोपदेशं सर्वादौ लक्ष्मीः एव लोकेभ्यः उपदिष्टवती इति गम्यते। अस्य दर्शनस्य आचार्यपरम्परायां प्राचीनाः अर्वाचीनाः आचार्याः इति विभागः कर्तुं शक्यते। विश्वसेन-शठकोप-बोधायनात् आरभ्य नाथमुनिपर्यन्ताः प्राचीनाचार्यपरम्परायां निर्दिश्यन्ते। नाथमुनिम् आरभ्य रङ्गरामानुज-वेदान्तदेशिकाचार्यपर्यन्ताः अर्वाचीनाः आचार्याः। रामानुजाचार्यैः वेदार्थसङ्ग्रहे विशिष्टाद्वैतदर्शनस्य आचार्यपरम्परा इत्थं प्रदर्शिता- बोधायन-टङ्क-द्रमिड-गुहदेव-कपर्दि-भारुचि-प्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदवेदान्त-व्याख्यानसुव्यक्तार्थश्रुतिनिकरनिदर्शितोऽयं पन्थाः। विशिष्टाद्वैतवेदान्तदर्शनस्य निरूपणं बोधायनाचार्याणां ब्रह्मसूत्रवृत्तिम् अनुसृत्य क्रियते इति श्रीभाष्यस्य आदौ रामानुजाचार्यैः प्रतिज्ञातम्। यथा- भगवद्बोधायनकृतां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः। अतःतन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते (श्रीभाष्यम् १/१/१)।



अतः आचार्यपरम्परायां भगवान् बोधायनः विशिष्टं स्थानम् अलङ्करोति। एवं च विशिष्टाद्वैतसम्पदायस्य प्राचीनार्वाचीनाः आचार्याः स्मर्यन्ते यथा "नारायणः-लक्ष्मीः-विष्वक्सेनः-शठकोपः-बोपदेवः-नाथमुनिः-पुण्डरीकाक्षः-राममिश्रः-यामुनः-पूर्णाचार्यः-रामानुजः-रङ्गरामानुज-वेदान्तदेशिक" इति।

आळवाराभिधेयाः योगिनः तामिलभाषायां विशिष्टाद्वैतदर्शनं नाथमुनेः कालात् पूर्वं निरूपितवन्तः। अतः अस्मिन् सम्प्रदाये भक्तिमार्गस्थानां आळवाराभिधेयानां योगिनां विशिष्टं स्थानं वर्तते। एवं च आळवाराख्यानां योगिनाम्, अन्येषां नाथमुनिप्रभृतिनां स्थूलपरिचयः अधो निर्दिश्यते।

## १६.२.२) द्वादश आळवारपुरुषाः

दक्षिणभारते आळवाराभिधेयाः योगिनः भागवतसंप्रदायस्य प्रवर्तकाः आसन्। एते भक्तिमार्गपोषकाः नित्यसूरयः इति प्रसिद्धाः। एतैः विशिष्टाद्वैतदर्शनं तमिळुभाषायाम् उपदिष्टम्। एतेषाम् उपदेशाः दिव्यप्रबन्धः (द्राविडवेदः) इति कथ्यते। द्वादश आळवारपुरुषाःसम्प्रदाये उल्लिखिताः। एतेषाम् आळवारयोगिनां जन्मदेशः भागवते निर्दिश्यते। यथा-

कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम्|
कलौ खलु भविष्यन्ति नारायणपरायणाः।
क्वचित् क्वचिन्महाराज द्रविडेषु च भूरिशः|
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी। (भागवतम् ११.५.३८-४०)

एतेषां द्वादशानाम् आळवारपुरुषाणां तामिलनाम्ना सह संस्कृतनाम अपि अधः निर्दिश्यते।

| संख्या | तमिळ नाम | संस्कृतनाम |
|---|---|---|
| ०१. | पोयगै आळवार | सरयोगी |
| ०२. | पोदत्ताळवार | ------- |
| ०३. | पेय आळवार | महद्योगी (भक्तिसारः) |
| ०४. | नम्माळवार | शठकोपमुनिः |
| ०५. | कुलशेखर आळवार | कुलशेखरः |
| ०६. | पेरिय आळवार | विष्णुचित्तः |
| ०७. | अण्डाळ | गोंदा |
| ०८. | तोण्डरडिप्पोडि आळवार | विप्रनारायणः |
| ०९. | तिरुप्पन आळवार | मुनिवाहनः (योगिवाहनः), लोकसारङ्गमुनिः |
| १०. | तिरुमगै आळवार | परकालः- (७५० AD) |



| | | |
|---|---|---|
| ११. | मधुरकवि आळवार | मधुरकविः |
| १२. | तिरुमळिशैपिरान् आळवार | ---- |

## १६.२.३) विशिष्टाद्वैतपरम्परायां ग्रन्थ-तत्कर्तृपरिचयः

| | नाम | कालः | विरचितग्रन्थाः | विशेषः |
|---|---|---|---|---|
| १. | नाथमुनिः | ८२३ ईशूत्तरम् | योगरहस्यम् (अनुपलब्धः) नयतत्त्वम् (अनुपलब्धः) | दिव्यप्रबन्धसंग्रहःचतुः सहस्रगीतिः(४०००) |
| २. | यामुनाचार्यः | ९१७-१०४२ ईशूत्तरम् | आगमप्रामाण्यम्, महापुरुषनिर्णयः (अनुपलब्धः), आत्मसिद्धिः, ईश्वरसिद्धिः, संवित्सिद्धिः, गीतार्थसंग्रहः | नाथमुनिवर्याणां प्रपौत्रः। एतस्य शिष्यौ महापूर्ण-गोष्ठिपूर्णौ। |
| ३. | रामानुजाचार्यः | १०१७-११३७ ईशूत्तरम् | श्रीभाष्यम् , गीताभाष्यम्, वेदार्थसंग्रहः, वेदान्तसारः, वेदान्तदीपः, शरणागतिगद्यम्, श्रीरङ्गगद्यम्, वैकुठगद्यम् | श्रीवत्साङ्कमिश्रः प्रियशिष्यः। |
| ४. | श्रीवत्साङ्कमिश्रः (कूरेशः) | १०-११इशवी याब्दम् | श्रीस्तवः, वैकुण्ठस्तवः, अतिमानुषस्तवः, सुन्दरबाहुस्तवः वरदराजस्तवः | श्रीभाष्यस्य लेखकः। |
| ५. | वात्स्यवरदाचार्यः | १३ ईशूत्तरम् | प्रपन्नपारिजातम्, प्रमेयमाला, प्रमेयसारः, ज्ञानसारः, तत्त्वसारः, परतत्त्वनिर्णयः, श्रीभाष्यसंग्रहः | एतस्य प्रियशिष्यौ आत्रेयरामानुज-सुदर्शनभट्टारकौ। |
| ६. | सुदर्शनभट्टारकः | १३५० ईशूत्तरम् | श्रुतप्रकाशिका (श्रीभाष्यव्याख्या) तात्पर्यदीपिका, श्रुतदीपिका, शुकपक्षीय (भागवतव्याख्या), श्रणागतिगद्यव्याख्या | |
| ७. | वेङ्कटनाथाचार्यः (वेदान्तदेशिकः) | १२६८-१३६९ ईशूत्तरम् | तत्त्वटीका (श्रीभाष्यव्याख्या), तात्पर्यचन्द्रिका (गीताभाष्यव्याख्या), न्यायसिद्धाञ्जनम्, न्यायपरिशुद्धिः, सेश्वरमीमांसा, | तमिळुभाषायाम् अनेके प्रबन्धाः विरचिताः। |



| | | | | |
|---|---|---|---|---|
| | | | सर्वार्थसिद्धिव्याख्योपेतः तत्त्वमुक्ताकलापः, अधिकरणसारावली, शतदूषणी, यादवाभ्युदयम्, हंससंदेशः, पादुकासहस्रम्, सङ्कल्पसूर्योदयः | |
| ८. | महाचार्यः | १६ईशूत्तरम् | चण्डमारुतः (शतदूषणीव्याख्या), उपनिषत्मङ्गलदीपिका, तात्पर्यप्रकाशिका, विजयपञ्चकम् (अविद्या-परिकर-पाराशर्य-ब्रह्मविद्या-सद्विद्या), | |
| ९. | रङ्गरामानुजाचार्यः | १६ ईशूत्तरम् | उपनिषद्भाष्यम् | |
| १०. | वाधूलश्रीनिवासाचार्यः | १७ ईशूत्तरम् | यतीन्द्रमतदीपिका, तत्त्वमार्ताण्डः | महाचार्याणां शिष्यः |

## १६.२.४) प्रमाणविचारः

प्रमाकरणं प्रमाणम् इति उच्यते। सर्वस्य ज्ञेयपदार्थस्य ज्ञानं प्रमाणाधीनं वर्तते। प्रमाणमेव ज्ञानद्वारम्। विशिष्टाद्वैतदर्शने त्रीणि प्रमाणानि अङ्गीकृतानि। तानि प्रत्यक्षम् अनुमानं शब्दःच इति। एतेषां प्रमाणानां स्थूलपरिचयः अधः क्रियते।

**१. प्रत्यक्षम्-** साक्षात्कारिप्रमाकरणं प्रत्यक्षम् इति कथ्यते। प्रत्यक्षप्रमां प्रति असाधारणकारणम् एव साक्षात्कारिप्रमाकरणम्। तत्र प्रत्यक्षप्रमाया उत्पत्तिप्रकारः इत्थं वर्तते। "आत्मा मनसा संयुज्यते। मन इन्द्रियेण, इन्द्रियमर्थेन इति। विशिष्टाद्वैतदर्शनप्रक्रियानुसारं सर्वेषाम् इन्द्रियाणां प्राप्यप्रकाशकारित्वम् अङ्गीक्रियते। पञ्च ज्ञानेन्द्रियाणि अपि विषयसम्बन्धानि एव तद्विषयज्ञानम् उत्पादयन्ति। प्राप्यप्रकाशकारित्वं नाम इन्द्रियसन्निकृष्टविषयद्योतकत्वम् इति। इदं प्रत्यक्षं द्विविधम्। सविकल्पकप्रत्यक्षं निर्विकल्पकप्रत्यक्षं च इति। निर्विकल्पकप्रत्यक्षम् नाम द्रव्यगतस्य गुणसंस्थानादेः अविषयीकृतं प्राथमिकं पिण्डमात्रग्रहणम् (द्रव्यमात्रग्रहणम्) इति। द्रव्यगतं गुणसंस्थानादिकं विषयीकरोति यत् तदेव सविकल्पकप्रत्यक्षम् इति उच्यते।

अस्मिन् दर्शने सर्वमपि ज्ञानं यथार्थम् इति निर्णयः। ज्ञानस्य अयथार्थत्वं विशिष्टाद्वैतप्रक्रियायां न अनुमतम्। "यथार्थं सर्वविज्ञानमिति वेदविदां मतम्" (श्रीभाष्यम् १.१.१) इति रामानुजाचार्याः ज्ञानस्य यथार्थत्वमेव मन्यन्ते। अस्मिन् दर्शने यथार्थख्यातिः (सत्ख्यातिः) अङ्गीकृता। यथार्थख्यातिः अल्पाक्षरैः अधः व्याख्यायते।

**यथार्थख्यातिः/सत्ख्यातिः**



वेदोक्त-पञ्चीकरणप्रक्रियया सर्वस्मिन् वस्तुनि सर्वं वस्तु अनुगतम्। अतः "इदं रजतम्" इत्यत्रापि शुक्तौ रजतांशो वर्तते। इन्द्रियार्थसन्निकर्षे जाते शुक्तिकागत-रजतांशः गृहीतः, ततः व्यवहारः "इदं रजतम्" इति। ज्ञानस्य विषयः यदि बाध्यते तर्हि तस्य ज्ञानस्यापि भ्रमरूपत्वं (बाध्यत्वं) भवेत्। किन्तु ज्ञानविषयः "रजतं" तु पञ्चीकरणप्रक्रियया वर्तते एव। अतः "इदं रजतमिति" ज्ञानमपि यथार्थमेव ज्ञानविषयस्य सत्यत्वात्।

**प्रश्नः-** उत्तरकाले "नेदं रजतमिति" उत्पद्यमानं ज्ञानं, पूर्वोत्पन्नम् "इदं रजतमिति" ज्ञानं बाधते खलु।

**समाधानम्-** इदं रजतमिति ज्ञानेन वस्तुतः शुक्तिकायां विद्यमानस्य अल्पांशस्य एव ग्रहणं कृतम्। तदुत्तरकाले शुक्तिकायां विद्यमानः अधिकांशः गृहीतो भवति। एतेन उत्तरकाले उत्पद्यमानं "नेदं रजतमिति" ज्ञानं, पूर्वस्य "इदं रजतमिति" ज्ञानजन्य व्यवहारस्य बाधकं न तु ज्ञानबाधकम्।

अतः वस्तुनि अल्पांशग्रहणेन यो व्यवहारः सः भ्रमः, तदुत्तरकाले तद्वस्तुनि विद्यमान-अधिकांशग्रहणेन बाध्यते। अतः अल्पांशग्रहणजन्यव्यवहार एव भ्रमः, स एव बाध्यते। एवञ्च सर्वं ज्ञानं यथार्थमिति मतम्।

**२. अनुमानम्-** अनुमितेः करणम् अनुमानम्। धूमवह्न्योः व्याप्यव्यापकभावं ज्ञात्वा पर्वते वह्निप्रमितिः अनुमितिः इति उच्यते। तादृशवह्न्यनुमितेः करणमेव अनुमानम् इति उच्यते। अत्र अविनाभावसम्बन्ध एव व्याप्तिः। न्यूनदेशवर्तित्वं व्याप्यत्वम्, अधिकदेशवृत्तित्वं व्यापकत्वम् इति ज्ञेयम्। अनुमानप्रक्रियायां प्रतिज्ञा-हेतु-उदाहरण-उपनय-निगमनाख्यानि पञ्च अवयवानि। इमानि पञ्च अवयवानि नियमेन अनुमितेः उत्पत्तौ न अपेक्षन्ते। क्वचिदेव अनुमितिज्ञानोत्पत्तौ पञ्च अपि अवयवानि अपेक्षितानि इति विशिष्टाद्वैतप्रक्रिया भवति।

**३. शब्दः-** अनाप्तैः अनुक्तं वाक्यं प्रमाणशब्देन अभिधीयते। अन्यशब्दः अप्रमाणम् इति कथ्यते। वेदाः अनाप्तैः प्रोक्ताः न भवन्ति। पुनश्च पौरुषेयाः ग्रन्थाः इतिहासपुराणादयः अपि अनाप्तैः अनुक्ताः एव भवन्ति। अतः पौरुषेयापौरुषेयरूपाः वेद-इतिहासपुराणादयः अस्मिन् दर्शने शब्दप्रमाणत्वेन अङ्गीक्रियन्ते। महाभारतगतं पञ्चरत्नं शब्दप्रमाणत्वेन स्वीकर्तुं शक्यते। पञ्चरत्नं च यथा-

गीतासहस्रनामानि स्तवराजो ह्यनुस्मृतिः।
गजेन्द्रमोक्षणं चैव पञ्चरत्नानि भारते। इति।

भागवतविष्णुपुराणयोः विशिष्टाद्वैतपरम्परायां परमं प्रामाण्यं भवति। आगमेषु पाञ्चरात्रसंहिता पौष्करसंहिता च प्रमाणत्वेन स्वीक्रियते। आळवारयोगिभिः तामिलभाषायां विरचितः दिव्यप्रबन्धः अपि प्रमाणकोटौ अन्तर्भवति।

## १६.२.५) तत्त्वत्रयविचारः

**"भोक्ता भोग्यं प्रेरितारं च मत्वा"** (श्वे.उ १.१२) इति श्रुत्या विशिष्टाद्वैतवेदान्ते विशेषेण तत्त्वत्रयचिन्ता विहिता। तत्त्वं तु त्रिविधम्। चित् (जीवः),अचित् (प्रकृतिः/जगत्), चिदचिद्विशिष्टः ईश्वरः



(ब्रह्म)चेति। तत्र शेषत्वेन चिदचित्तत्त्वयोः परमात्मनि आश्रयः। परमात्मनः चिदचित्तत्त्वयोश्च अपृथग्भूतसम्बन्धः (अङ्गाङ्गिभावः) अङ्गीक्रियते। एतत् तत्त्वत्रयमपि सत्यरूपम्। तेषु चित्तत्त्वं विचार्यते।

### चित्तत्त्वम् (जीवः)

परमात्मनः शरीरस्थानीयं (अंशरूपं) चित्तत्त्वमेव जीवः। तदुक्तं "अणुत्वे सति चेतनत्वं, स्वतःशेषत्वे सति चेतनत्वम्" (यतीन्द्रमतदीपिका) इति। जीवः चेतनस्वभावो भवति। अयं स्वयंप्रकाशः विद्यते। जीवस्य स्वाभाविककर्तृत्वम् अङ्गीक्रियते। विशिष्टाद्वैतदर्शनप्रक्रियायां जीवः अणुरूपः। तदुक्तं "एषोऽणुरात्मा" (मु.उ ३.१.९) इति। जीवः ज्ञानस्वरूपः इति अङ्गीकारः। जीवस्य परमात्मनः अधीनत्वम्, अंशत्वं च निरूप्यते। सः जीवः अस्वतन्त्रः कर्मानुसारं संसारचक्रे सञ्चरति। मुक्तात्मनः जीवस्य ज्ञानस्वरूपम् अन्यैः मुक्तात्मभिः समानत्वेन अङ्गीक्रियते। अस्मिन् दर्शने जीवः त्रिविधः इति निरूप्यते।

यथा-

१. बद्धः-अनादिकर्मपाशैः बद्धाः जीवाः देवमनुष्यादिना भिद्यन्ते।

२. मुक्तः-ये खलु कर्मपाशं विनाश्य प्रकृतिसम्बन्धमतीत्य ईश्वरसायुज्यमेव प्राप्नुवन्ति ते मुक्ताः।

३. नित्यः- न कदापि कर्मबन्धः, प्रकृतिसम्बन्धो वा वर्तते नित्यानाम्।

नित्याः न बद्धाः, नापि मुक्त्यपेक्षा तेषाम्। ईश्वराज्ञया नित्यविभूतिस्थाने वैकुण्ठे भगवतः नित्यसेवायां रताः।

**"शेषः, गरुडः, विष्वक्सेनः, द्वादश आळवारपुरुषाः"** नित्यसूरयः इति परम्परायां स्मृताः।

### अचित्तत्त्वम् (प्रकृतिः/जगत्)

परमात्मनः शेषत्वेन अचित्तत्त्वम् अनुमतम्। इदम् अचित्तत्त्वं क्वचित्प्रकृतितत्त्वम् इति व्यवह्रियते। अचित्तत्त्वं जडरूपमिति सिद्धान्तः। इदं परमात्मनः अङ्गम् अस्वतन्त्रं च विद्यते। जीवस्य भोग्यत्वात् एव अस्वतन्त्रमिति व्यवहारः। अचित्तत्त्वं त्रिगुणात्मकं विद्यते। त्रिगुणं च सत्त्वरजस्तमांसि भवन्ति। इदं जडरूपम् अचित्तत्त्वं सत्यमिति विशिष्टाद्वैतदर्शनसिद्धान्तः भवति।

### ईश्वरः (ब्रह्म)

चिदचिद्विशिष्टम् अद्वैतं तत्त्वम् एव ईश्वरः इति कथ्यते। परमात्मनि चिदचित्तत्त्वम् अपृथग्विशेषणसम्बन्धेन (अङ्गाङ्गिभावेन) नित्यमस्ति। ईश्वरः नित्यम् अनन्तकल्याणगुणगणः भवति। जडत्वानित्यत्वादि-हेयगुणवर्जितत्वात् निर्गुणोऽपि सः परमात्मा न निर्विशेषः इति विशिष्टाद्वैतप्रक्रिया विद्यते। उपनिषदि विद्यमानानां परमात्मनः निर्गुणबोधकवाक्यानां हेयगुणाभावबोधकतया प्रामाण्यम् अस्ति। परमात्मा सविशेषः सर्वदा। तत्सृष्टिरपि सविशेषा इति विशिष्टाद्वैतवेदान्तिनः मन्यन्ते। परमात्मनः



अभिन्ननिमित्तोपादानरूपं जगत्कारणत्वम् अङ्गीक्रियते। अर्थात् परमात्मा जगत्कार्यं प्रति उपादानकारणं सत् निमित्तकारणम् अपि भवति इति सिद्धान्तः। परमात्मनः सर्वतः स्वतन्त्रत्वात् लक्ष्मीः स्वेच्छया एव परमात्माधीना भवति इति तेषाम् अभ्युपगमः। भगवतः अनुग्रहशक्तिः, करुणाशक्तिः, स्वातन्त्रं च नित्यम् इति विशिष्टाद्वैतदार्शनिकाः निरूपयन्ति। ईश्वरः सर्वात्मकः, सर्वानुगतः, सर्वव्यापकः, देशकालवस्तुपरिच्छेदाभावात् अनन्तः च इति विशिष्टाद्वैतप्रक्रियायां साध्यते। भगवतः ज्ञानं, शक्तिः, सत्यानन्दादयश्च स्वरूपधर्माः सन्ति।

## १६.२.६) बन्ध-मोक्षविचारः

अनादिकर्मवासनया जीवस्वरूपम् आवृतं विद्यते। जीवस्य कर्मनिमित्ततः प्रकृतिसम्बन्धादेव बन्धः भवति। बन्धः नाम परमात्मांशविस्मरणमेव। बद्धस्य जीवस्य कर्मबन्धनाशतः प्रकृतिसम्बन्धविरहो भवति। प्रकृतिसम्बन्धवियोगेन स्वरूपावस्थानं कैवल्यम् इति विशिष्टाद्वैतवेदान्तिनः निरूपयन्ति। किं नाम कैवल्यम् इति चेदुच्यते ज्ञानयोगेन चिन्मात्रस्वरूपावगतिः। कैवल्यं न परमार्थः किन्तु ईश्वरसायुज्यमेव मोक्षः, स एव परमपुरुषार्थः। सालोक्य-सामीप्य-सारूप्य-सायुज्याख्येषु ईश्वरसायुज्यमेव मोक्षः अन्यत्र मोक्षशब्दः गौणः। तदुक्तं .सालोक्याद्याः प्रभेदाः सायुज्यस्यैव तत्त्वात् तदितरविषये मोक्षशब्दस्तु भाक्तः" (तत्त्वमुक्ताकलापः) इति। अस्मिन् दर्शने मुक्तात्मपरमात्मनोः आनन्दानुभवे तारतम्यं न अङ्गीक्रियते। सायुज्याख्यायां परममुक्तौ मुक्ताः भगवतः शेषरूपत्वं प्राप्य, तत्सेवायां रताः। विशिष्टाद्वैतपरम्परायाम् ईश्वरसायुज्यमेव मुक्तिः। एतैः जीवन्मुक्तिः नाङ्गीकृता।

## १६.२.७) मोक्षोपायविचारः

बद्धस्य जीवस्य मोक्षार्थं प्रकृष्टोपकारकमेव मोक्षोपायः। तद्विधा- सिद्धोपायः, साध्योपायः च।

परमात्मनः अनुग्रह एव जीवस्य मोक्षप्राप्तौ सिद्धोपायः इति उच्यते। अतः नित्यसिद्ध ईश्वर एव सिद्धोपायः। साध्योपायः नाम कर्मयोग-ज्ञानयोग-भक्तियोगाः, प्रपत्तिश्च। विशिष्टाद्वैतदर्शनदिशा भक्तिः प्रपत्तिश्च प्राधान्येन मोक्षोपायो भवति। तदुक्तं "भक्तिप्रपत्तिभ्यां प्रपन्न ईश्वर एव मोक्षं ददाति। अतस्तयोरेव मोक्षोपायत्वम्"- (यतीन्द्रमतदीपिका) इति। कर्मयोगज्ञानयोगयोः अविच्छिन्नभगवद्भक्त्युत्पत्तिमुखेन मोक्षोपायत्वम्। ज्ञानयोगेन तु जीवस्य स्वरूपावगतिः, जडप्रकृतितः आत्मनो भेदः, परमात्मनः शेषत्वमिति च विषयाः ज्ञायन्ते। ईश्वरशेषत्वेन स्वस्वरूपावगतिरेव ज्ञानयोगः इति कथ्यते।

**भक्तिः-**

भगवत्प्रीतिरूपं ज्ञानमेव भक्तिः। निष्कल्मष-निष्कारण-प्रीतिरूपज्ञानसन्ततिः भक्तिः इति व्याख्यायते। तदुक्तं-

**"भक्तिः मुक्तेरुपायः श्रुतिशतविहितः सा च धीः प्रीतिरूपा"**- (तत्वमुक्ताकलापः)।

**"महनीयविषये प्रीतिः भक्तिः, प्रीत्यादयश्च ज्ञानविशेषाः"**- (सर्वार्थसिद्धिव्याख्या) इति।



**प्रपत्तिः-**

विशिष्टाद्वैतदर्शने प्रपत्तिः स्वतन्त्रतया मोक्षोपायत्वेन निरूप्यते।

न्यासः,शरणागतिः,आत्मसमर्पणम्, आत्मनिक्षेपः चेति शब्दाः तात्पर्येण प्रपत्तिरूपमेवार्थं प्रपञ्चयन्ति।

अस्याः **प्रपत्तेः पञ्च अङ्गानि भवन्ति।** यथा-

१. अभिगमनम्-जपआदिभिः भगवदुपसर्पणम्।

२. उपादानम्-पूजाद्रव्यसंग्रहः।

३. इज्या-विष्णुपूजा।

४. स्वाध्यायः-आगमाध्ययनम्।

५. योगः-अष्टाङ्गयोगानुष्ठानम्।

मोक्षं मोक्षसाधनं वा सम्पादने "अहम् असमर्थः" इति निश्चित्य परिपूर्णश्रद्धया भगवति शरणागतिः एव प्रपत्तिः इति उच्यते। तदुक्तं-

**अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्।**
**तदेकोपायतायां च प्रपत्तिः शरणागतिः। ( प्रपन्नपारिजातम्)** इति।

विशिष्टाद्वैतसम्प्रदायानुसारं भक्तिमार्गे तावद् त्रैवर्णिकानामेव अधिकारः। किन्तु प्रपत्तिमार्गे तु तारतम्यं विना सर्वेषामपि अधिकारः इति निरूप्यते। **प्रपत्तिः भक्तिमार्गात् भिद्यते।** भक्तिस्तु प्रारब्धकर्म विहाय अन्यत्सर्वं कर्मजातं नाशयति। प्रारब्धस्य भोगेनैव क्षयः भवति। किन्तु प्रपत्तिः सर्वविधकर्मणा सह प्रारब्धमपि नाशयतीति कारणात् "आशुमोक्षकारिणी" इत्युच्यते।

## १६.३) निम्बार्काचार्यस्य द्वैताद्वैतदर्शनम्

### १६.३.१) आचार्यस्य जीवनवृत्तान्तः

भक्तिवेदान्तस्य आचार्यः निम्बार्कः। वेदान्तपारिजातसौरभनामकभाष्यस्य प्रणेता निम्बर्काचार्यः। अस्य आचार्यस्य अपरं नाम निम्बादित्यः नियमानन्दाचार्यः च इति। सनत्कुमारशिष्यस्य नारदमुनेः शिष्यः निम्बार्कः। रामानुजात् परवर्तिकालिनः निम्बार्काचार्यः। जि. आर. भाण्डारकारस्य मते ११६२ इति अस्मिन् शतके पञ्चत्वं गतः निम्बार्कः। निम्बार्कः तेलेगुप्रदेशीयः आसीत्। पिता जगन्नाथः, माता सरस्वती। निम्बार्काचार्यस्य नामानुसारेण कालान्तरे जन्मस्थानस्य नाम जातं निम्बापुरम् इति। अधुना निम्बापुरस्य नाम नाईडुपत्तनम्। एका कथा प्रचलिता- कश्चन भिक्षार्थी निम्बार्काचार्यस्य गृहम् आगतवान्। भिक्षार्थी उक्तवान् यत् सूर्यास्ते सति भिक्षां न स्वीकरोमि। आचार्यस्य गृहे भोजनं सिद्धं नासीत्, साधनीयम् आसीत्। यावता भोजनं साध्यते तावता सूर्यः अस्तं गच्छेत् इत्यतः निम्बार्काचार्यः



मनसि कष्टम् अनुभूय भगवत्प्रार्थनां कृतवान्। तदा भगवान् सुदर्शनचक्रं स्थापितवान्। तच्चक्रं सूर्यवत् प्रकाशते। तद्दृष्ट्वा भिक्षार्थी भोजनं कृतवान्। अतः आचार्यस्य अपरं नाम नियमानन्दः। आचार्यः कृष्णभक्तः आसीत्। आचार्येण जीवनस्य अधिककालः मथुरां यापितः। एवम् आचार्यस्य जीवनवृत्तान्तः।

### १६.३.२) द्वैताद्वैतसिद्धान्तस्य परिचयः

द्वैताद्वैतवादस्य प्रवर्तकः निम्बार्काचार्यः। अयं वादः अंशेन भेदाभेदवादः अपि वक्तुं शक्यते। निम्बार्कानुसारिणः कथयन्ति यत् अंशाशिसम्बन्धः भेदाभेदसम्बन्धः द्वैताद्वैतसम्बन्धः च समानार्थकः इति। षडङ्गवेदधर्ममीमांसाध्ययनात् परं वैराग्यवान् भगवत्प्रसादाकाङ्क्षी गुरुभक्तः मुमुक्षुः अस्मिन् शास्त्रे अधिकारी। अस्मिन् सिद्धान्ते भक्तेरुत्तमं स्थानं विद्यते। अत्र तत्त्वद्वयम् अस्ति। स्वतन्त्रम् अस्वतन्त्रं च इति। स्वतन्त्रं ब्रह्म। अस्वतन्त्रस्य भागद्वयम्– जीवः जडः च इति। जडस्य च भागत्रयम्– अप्राकृतं प्रकृतिः कालः च इति। द्वैताद्वैतवादिभिः जगद्ब्रह्मणोः स्वाभाविकभेदाभेदसम्बन्धः स्वीकृतः। जीवब्रह्मणोः भेदाभेदौ जलतरङ्गवत् भवति। भेदाभेदप्रतिपादिका श्रुतयस्तावत् "यतो वै इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्ति अभिसंविशन्ति च" (तैत्तिरीयोपनिषत्) , "सर्वं खल्विदं ब्रह्म" (छान्दोग्योपनिषत्) च इत्याद्याः। एते त्रिवृत्करणं स्वीकुर्वन्ति। एतेषां मते जीवः कर्ता भोक्ता नित्यः चैतन्यस्वरूपः अणुपरिमाणः ज्ञानस्वरूपः च। जीवः ब्रह्मणः अंशविशेषः इति एते अङ्गीकुर्वन्ति। जीवस्य चिद्रूपतायाः विस्मरणमेव अविद्या इति एतेषां सिद्धान्तः। कर्मणा चित्तशुद्धिः, चित्तशुद्ध्या अविद्यायाः निवारणं भवति। तस्मात् ज्ञानं प्रति कर्मणः सहकारिकारणत्वम् एते स्वीकुर्वन्ति। एते भक्तिं ध्यानम् उपासनां यज्ञदानादिकर्म ज्ञानसाधनत्वेन अङ्गीकुर्वन्ति। एतेषां नये जीवस्य चिदात्मनि अवस्थानम् एव मुक्तिः। प्रारब्धकर्मणः भोगेन एव क्षयः भवति। जीवः मुक्त्यवस्थायामपि ब्रह्मणः अंशरूपेण तिष्ठति। जीवानां कर्मफलदाता ब्रह्मैव। परमेश्वरस्य षडैश्वर्यमस्ति। ज्ञानं शक्तिः बलं वीर्यं तेजः ऐश्वर्यं चेति। अत्र अवतारत्रयम् अस्ति। गुणावतारः पुरुषावतारः लीलावतारः च इति। ब्रह्मा विष्णुः महेश्वरः चेति त्रयः गुणावताराः सन्ति। स्वरूपावतारः आवेशावतारः शक्त्यांशावतारः च इति लीलावतारस्य भागत्रयम्। अपि च अस्मिन् सिद्धान्ते रामः नृसिंहः कृष्णः च इति पूर्णावताररूपेण प्रसिद्धाः। मत्स्यः वामनः कुर्मः वराहः च इति स्वरूपावताररूपेण प्रसिद्धाः सन्ति। परशुरामः सनत्कुमारः नारदः कपिलः च इति चत्वारः शक्त्यांशावताराः भवन्ति। एतेषां मते ईश्वरः सर्वज्ञः सर्वव्यापी सर्वशक्तिमान् सर्वनियन्ता च भवति। अत्र "यतो वै इमानि भूतानि जायन्ते" (तैत्तिरीयोपनिषत्), "यः सर्वज्ञः सर्वविद्" च इत्याद्याः श्रुतयः ब्रह्मणः सर्वज्ञत्वे प्रमाणमिति एते स्वीकुर्वन्ति। एतेषां मते अक्षरः ईश्वरः जीवः जगत् चेति चतुष्टयेन रूपेण ब्रह्म पूर्णम् अस्ति।

## १६.४) मध्वाचार्यस्य द्वैतवेदान्तदर्शनम्

मध्वाचार्याणां दार्शनिकचिन्तनपद्धतिः द्वैतदर्शनम् इति प्रसिद्धम्। द्वैतवेदान्तदर्शने परमात्मा स्वतन्त्रतत्त्वम्। तदधीनाः जीवजडपदार्थाः अस्वतन्त्राः। एवं च जीवो वा जडप्रपञ्चो वा तत्त्वतः परमात्मनः



भिद्यते। भेदः एव सत्यः इति अस्य दर्शनस्य परमार्थः। इदमेव स्वतन्त्रम् अस्वतन्त्रम् इति द्विधा विभज्य द्वैतदर्शनं प्रवर्तते। स्वतन्त्रं तत्त्वं भगवान् विष्णुरेव। अस्वतन्त्रं तत्त्वं भावाभावमुखेन पुनः द्विधा विभज्यते। तत्र भावपदार्थः चेतनः, अभावपदार्थः अचेतनप्रपञ्चः इति पदार्थविभागः भवति। तदुक्तं-

"स्वतन्तम् अस्वतन्त्रं च द्विविधं तत्त्वमिष्यते।
स्वतन्त्रो भगवान् विष्णुः भावाभावौ द्विधेतरत् (तत्त्वसंख्यानम्, श्लोकः-१)" इति।

द्वैतवेदान्तदर्शनस्य सारः इत्थं भवति। यथा-

१) श्रीमन्नारायणः एव सर्वोत्तमः।

२) जगत् परमार्थतः सत्यम्।

३) जीवः परमात्मनः भिन्नः।

४) सर्वे जीवाः भगवतः दासाः।

५) जीवेषु परस्परं तारतम्यं नित्यम्।

६) भक्तिः एव मोक्षोपायः।

द्वैतवेदान्तदर्शने भेदः पारमार्थिकः इति निरूप्यते। भेदो नाम तदितरेभ्यः विलक्षणपदार्थस्वरूपत्वम्। स च पञ्चधा सर्वासु अवस्थासु नित्यत्वेन भवति। तत्र जीवेश्वरयोः भेदः, जीवजीवयोः भेदः, जडजीवयोः भेदः, जडेश्वरयोः भेदः, जडजडयोः भेदः इति भेदस्य पञ्चप्रकाराः सन्ति। एते पञ्च भेदाः सर्वासु अवस्थासु नित्याः। एतेषु भेदेषु जीवेश्वरयोः भेदः एव मुख्यः भवति। अतः अयं जीवेश्वयोः भेद एव द्वैतदर्शनस्य मुख्यं प्रमेयम् इति परिगण्यते।

## १६.४.१) प्रपञ्चसत्यत्वविचारः

द्वैतमते मुक्तौ अपि जीवस्य तारतम्यम् अस्वातन्त्र्यं च अङ्गीकृतम्। प्रपञ्चसृष्टिः भगवतः लीलाकार्यम् इति माध्वसिद्धान्तः। अतः त्रिषु कालेषु अपि प्रपञ्चः सत्यः, विष्णोः वशे स्थितः इति कथ्यते। प्रलयकाले अपि प्रपञ्चः तात्त्विकरूपेण न लीयते। किन्तु कृत्स्नं ब्रह्माण्डं विष्णौ सूक्ष्मरूपेण अवस्थितम् इति सिद्धान्तसारः।

## १६.४.२) प्रमाणविचारः

प्रमेयस्य स्वरूपबोधाय प्रमाणानि निरूपितानि दार्शनिकैः। येन यथार्थवस्तुस्वरूपं गृह्यते तत् प्रमाणं भवति। तत् च प्रमाणं प्राधान्येन द्विधा भिद्यते। केवलप्रमाणम् अनुप्रमाणम् इति च। प्रमेयस्य यथार्थविज्ञानं केवलप्रमाणमिति कथ्यते। ज्ञानसाधनानि इन्द्रियाणि, युक्ति–आगमाश्च अनुप्रमाणमिति व्यवह्रियते। इदम् अनुप्रमाणं प्रत्यक्ष–अनुमान–आगमाः चेति त्रिधा पुनः विभज्यते। तत्र दोषविरहितः इन्द्रियार्थसन्निकर्षः एव प्रत्यक्षम्। दोषरहिता युक्तिरनुमानमिति प्रोक्तम्। अनुमानं स्वार्थ–परार्थेति द्विधा भिद्यते। परोपदेशम् अनपेक्ष्य एव विषयावबोधाय कृतं युक्ति–अनुमानम् एव स्वार्थानुमानम् इति वक्तुं



शक्यम्। परं प्रति बोधयितुं प्रयुक्ता युक्तिः परार्थानुमानम् इति प्रसिद्धम्। परार्थानुमाने पञ्च अवयवाः भवेयुः इति न्यायविदः वदन्ति। किन्तु पञ्च अपि अवयवाः नियमेन परार्थानुमानप्रयोजकाः इति द्वैतवेदान्तप्रक्रियायां नाङ्गीक्रियते।

निर्दुष्टं वाक्यम् आगमः इति व्यपदिश्यते। आकाङ्क्षा–योग्यता–सन्निधिसहितः पदसमूहः एव वाक्यमिति प्रोक्तम्। इदं वाक्यं पौरुषेय–अपौरुषेयमुखेन द्विधा विभज्यते। ऋषिभिः योगबुद्ध्या साक्षात्कृतः शब्दराशिः अपौरुषेयः आगमः भवति। पुरुषबुद्ध्या विरचितानि वाक्यानि पौरुषेय–आगमः इति कथ्यते। एवं च द्वैतवेदान्तानुगुणं ज्ञेयपदार्थानां यथार्थज्ञानोत्पत्तौ त्रीणि प्रमाणानि भवन्ति।

## १६.४.३) विष्णुतत्त्वम्

द्वैतवेदान्तसम्प्रदाये विष्णोः एव सर्वोत्तमत्वम् अङ्गीक्रियते। सर्वेषाम् आगमानां विष्णुतत्त्वे एव महत्तात्पर्यम् अस्ति। विष्णुरेव ब्रह्मशब्देन कथ्यते। स एव सर्वाधिकः, अखिलदोषवर्जितः, सकलकल्याणगुणपूर्णः, सर्वेश्वरः इत्येवम् उपवर्णितम्। विष्णुरेव मोक्षं प्रत्यपि कारणम्। अस्मिन् सम्प्रदाये विष्णोः जगन्निमित्तकारणत्वम् अङ्गीकृतम्। लक्ष्मीः जगतः उपादानकारणं भवति। एषा लक्ष्मीः विष्णोः अधीना भवति। लक्ष्मीः विष्णोः सङ्कल्पानुसारं जडप्रकृतेः सृष्टि–स्थिति–लयकार्येषु सहकरोति। एतादृशं लक्ष्मीतत्त्वं स्ववशे संस्थाप्य विष्णुः जीवजडपदार्थयोः अन्तर्यामि भवति इति सिद्धान्तः।

## १६.४.४) जीवस्वरूपम्

द्वैतदर्शनानुसारं भगवतः नारायणात् भिन्नः सूक्ष्मः चेतनः एव जीवः भवति। सकलमङ्गलगुणाः जीवे वर्तन्ते। किन्तु ते गुणाः सर्वेषु जीवेषु स्फुटम् अभिव्यक्ताः न भवन्ति। भगवतः यथार्थज्ञानाभावात् जीवः इह संसारे जननमरणचक्रपतितः वर्तते। लिङ्गशरीरान्तःस्थितः चिदानन्दमयः जीवः भवति। अयं जीवगणः तारतम्यविशिष्टः इति सिद्धान्तः। सात्त्विक–राजसिक–तामसिकभेदेन त्रिधा जीवः भिद्यते। देवादयः सात्त्विकजीवगणे अन्तर्भवन्ति। एते स्वरूपतः एव विष्णुभक्ताः, कालक्रमेण वैकुण्ठं प्राप्नुवन्ति। मनुष्याः राजसजीवगणे अन्तर्भवन्ति। एते स्वभावानुसारं भू–स्वर्ग–नरकलोकेषु सञ्चरन्तः नित्यसंसारिणो भवन्ति। अधर्ममार्गप्रवृत्ताः मनुष्याः राक्षसाः च तामसजीवगणे अन्तर्भवन्ति। एते सर्वे अपि जीवाः प्रकृतिसम्बन्धात् बद्धाः। रागद्वेषादिसंसर्गतः विषयभोगेषु प्रवृत्ताः। अस्वातन्त्र्यम्, अनेकत्वम्, अणुरूपत्वं च जीवलक्षणम् इति माध्ववेदान्तप्रक्रिया भवति।

## १६.४.५) मोक्षसाधनम्

बद्धः जीवः स्वस्वरूपावगतिं प्रति मोक्षसाधनेषु यत्नं कुर्यात्। द्वैतमतानुसारं चत्वारि मोक्षसाधनानि भवन्ति। विषयवैराग्यम्, सत्कर्माचरणम्, ब्रह्मविचारः, भगवद्भक्तिः च इति। विषयसुखम् अनुभूय, तदनित्यत्वं तदसुखत्वं च ज्ञात्वा तत्र विरक्तिरेव विषयवैराग्यमिति कथ्यते। शास्त्रोक्तप्रकारेण नित्यनैमित्तिककर्माचरणं मोक्षसाधनं भवति। शास्त्रचिन्तनम्, श्रवणमनननिदिध्यासनानि च ब्रह्मविचाररूपं



मोक्षसाधनं स्यात्। भगवतः अनुग्रहप्राप्तये तस्मिन् परमेश्वरे अविच्छिन्ना प्रीतिः भक्तिः इति उच्यते। भक्त्या एव नारायणः सम्प्रीतो भवति। अतः भक्तिरेव मुक्तिं प्रति परमसाधनम्। सा च भक्तिः ज्ञानपूर्विका भवेत्। नारायणः एव सर्वोत्तमः इति भगवति या सुदृढा प्रीतिः सा भक्तिशब्दवाच्या भवति। श्रवणमननादिभिः सम्पन्नं ज्ञानं भगवति भक्तिम् उत्पादयति। अतः नैजसुखानुभूतिरूपां मुक्तिं प्रति शुद्धभक्तिरेव परमोपायः इति द्वैतवेदान्तदर्शनस्य सिद्धान्तः।

### १६.४.६) मुक्तिस्वरूपम्

अन्यथास्थितिं विहाय स्वरूपस्थितिप्राप्तिरेव मुक्तिः। जीवः स्वस्य स्वरूपज्ञानं विस्मृत्य संसारासक्तः दुःखम् अनुभवति। तत्र अविद्या एव बन्धकारणम्। तस्याः अविद्यायाः निवृत्त्या जीवस्य स्वरूपानन्दाविर्भावः भवति। अतः मुक्तिर्नाम नैजसुखानुभूतिरेव। सा च मुक्तिः चतुर्धा विभज्यते। भगवतः सन्निधौ एव तस्य अविच्छिन्नदर्शनमेव सालोक्यमुक्तिरिति व्यपदेशः भवति। उपासनादिभिः भगवतः सन्निकृष्टदेशप्राप्तिः सामीप्यमुक्तिरिति कथ्यते। भगवतः इव शङ्खचक्रादिभिः सहितत्त्वं सारूप्यमुक्तिरिति उच्यते। भगवति नारायणे एव आश्रयपूर्वकम् आनन्दानुभवः सायुज्यमुक्तिरिति उपदिष्टम्।

## १६.५) श्रीकण्ठाचार्यस्य शैवविशिष्टाद्वैतदर्शनम्

आचार्यः श्रीकण्ठः ब्रह्मसूत्रोपरि एकं भाष्यं विरचितवान्। एतत् भाष्यं श्रीकण्ठभाष्यनाम्ना प्रसिद्धम्। अस्मिन् भाष्ये प्रतिपादितः मतवादः शैवविशिष्टाद्वैतवादः कथ्यते।

### १६.५.१) ब्रह्मस्वरूपम्

जगतः जन्म स्थितिः प्रलयः आवरणं (जीवस्य नित्यसिद्धं ज्ञानं क्रियाशक्तेश्च आवरणरूपं बन्धनम्) अनुग्रहः (मुक्तिप्रदानम्) चेति पञ्चकृत्यानि यस्मात् जातम्, यत् च चिदचित्प्रपञ्चाकारेण परिणामिपरमशक्तिविशिष्टम्, सर्वेषां च शास्त्राणां तात्पर्यविषयीभूतम्, भवशिवादिनाम्ना प्रकाशितम्, सर्वकलङ्करहितं निरतिशयज्ञानानन्दमहिमायुक्तं च, तादृशम् शिवतत्त्वमेव परं ब्रह्म। अस्मिन् दर्शने तस्य शिवतत्त्वस्य ब्रह्मणः बहुनि नामानि सन्ति। तेषु प्रसिद्धानि भवन्ति–

१) सर्वत्र सदा विराजमानत्वात् अयं भवः इति कथ्यते।

२) सर्वसंहारकत्वात् अयं शर्वः इति भण्यते।

३) निरुपाधिकपरमैश्वर्यविशिष्टत्वात् अयं ईशानः इति उच्यते।

४) ब्रह्मादिस्थावरान्तचेतनाचेतनानां स्वामित्वात् अयं पशुपतिः गद्यते।

५) संसारतापस्य दाहकत्वात् अयं रुद्रः कथ्यते।

६) नियामकरूपेण सर्वचेतनानां भयहेतुत्वात् अयं भीमः उच्यते।

७) स्वमहिमायामेव प्रकाशितत्वात् अयं महादेवः निगद्यते।

८) अशेषकल्याणगुणयुक्तत्वात् अयं शिवः भण्यते।



९) अखिलजगतः शासकत्वात् अयं परमेश्वरः कथ्यते।

१०) सुखस्वरूपत्वात् अयं शम्भुः इति अभिधीयते।

### १६.५.२) जगत्स्वरूपम्

चिदचित्प्रपञ्चाकारपरमशक्तिविशिष्टः परमेश्वरः अस्य जगतः अभिन्ननिमित्तोपादानकारणम्। परमेश्वरः चित्तत्त्वम् अचित्तत्त्वं च स्वस्मात् विभज्य प्रपञ्चाकारेण परिणतः। परमेश्वरस्य चित्तत्त्वं साक्षात्प्रपञ्चरूपेण परिणतम्। अस्य चित्तत्त्वस्य अपरं नाम चिदम्बरः चिदाकाशः चेति। चिदाकाशः परमेश्वरस्य शरीरभूतो भवति। 'आकाशशरीरं ब्रह्म' (तैत्तिरीयोपनिषत्–१/६/२), 'आकाशः ह वै नामरूपयोः निर्वहिता' (छान्दोग्योपनिषत्– ८/१४/१) चेत्याद्याः श्रुतयः अत्र प्रमाणानि इति शैवविशिष्टाद्वैतिनः कथयन्ति। अस्याः चित्–शक्तेः नामानि भवन्ति– प्रज्ञा ज्ञानशक्तिः परमप्रकृतिः माया महामाया पराशक्तिः परमसत्ता परमाकाशः उमा अम्बिका च इत्यादीनि। एषा चित्–शक्तिः इच्छात्मिका ज्ञानात्मिका क्रियात्मिका च भवति। परमेश्वराधिष्ठितात् अव्यक्तात् आकाशः, आकाशविशिष्टात् परमेश्वरात् वायुः, आकाशवायुविशिष्टात् परमेश्वरात् तेजः, आकाशवायुतेजोविशिष्टात् परमेश्वरात् आपः, आकाशवायुतेजअब्विशिष्टात् परमेश्वरात् पृथिवी च उत्पन्ना।

### १६.५.३) जीवस्वरूपम्

अनादिकालात् अज्ञानोत्थसंस्कारैः विधृतेषु विचित्रकर्मफलभोगानुकूलेषु देवतिर्यगादिशरीरेषु च प्रविष्टः, जन्ममृत्योः च अधीनः, अनन्ततापसहिष्णुः, चेतनः, शिवप्रसादेन च प्राप्तः शिवसमः निरतिशयः ज्ञानानन्दस्वरूपः जीवः भवति। मुक्तिदशायां परमेश्वरापन्नः नित्यः जीवः बाह्यकरणनिरपेक्षः सन् मनसा निरतिशयस्वरूपानन्दम् अनुभवति। जीवः अणुरूपः, परमेश्वरस्य च अंशविशेषः।

### १६.५.४) मोक्षस्वरूपं मोक्षोपायः च

अस्मिन् शैवविशिष्टाद्वैतदर्शने यद्यपि जीवः शिवाख्यपरब्रह्मणः भिन्नः तथापि 'अहं ब्रह्मास्मि', 'शिवोऽमस्मि' च इत्येवं शिवाद्यभेदभावनया पशुभावे निवृत्ते सति 'अहं नित्यः निरतिशयः आनन्दस्वरूपः साक्षिस्वरूपः निष्कलङ्कः शिवः अस्मि' इत्येवं सगुणब्रह्मरूपशिवत्वप्राप्तिरेव मुक्तिः। अस्मिन् मते ज्ञानकर्मणोः समुच्चयः एव मोक्षं प्रति साधनम्। ज्ञानकर्मणोः समुच्चयः इत्यत्र ज्ञानं नाम उपासनं निदिध्यासनं च।

## १६.६) श्रीपतेः वीरशैवविशिष्टाद्वैतदर्शनम्

वीरशैवविशिष्टाद्वैतं शक्तिविशिष्टाद्वैतम्, विशेषाद्वैतं चेति प्रसिद्धमस्ति। इदं दर्शनं भारतीयशैवदर्शनपरम्परायां विशिष्टं स्थानं भजते। श्रीपतिपण्डितप्रवरैः विरचितेन श्रीकरब्रह्मसूत्रभाष्येण इदं दर्शनं चतुर्दशे शतके प्रवर्धितम्। शक्तिविशिष्टाद्वैतं प्राधान्येन पदार्थत्रयं वर्णयति। पतिः, पशुः, पाशश्चेति पदार्थाः। अस्मिन् सिद्धान्ते परं ब्रह्म एव पतिशब्दवाच्यं भवति। चिदचिद्विशिष्टः पतिः इति



दर्शनस्य सारः। पशुशब्दवाच्यः जीवः शिवस्य अंशः वर्तते। शक्तिविशिष्टं जगत् एव पाशशब्देन उच्यते। तदिदं जगत् परमार्थतः सत्यम्। शिवांशः जीवः मुक्तिकाले शिवसायुज्यं प्राप्नोति इति अस्य दर्शनस्य परमतात्पर्यम्। अस्मिन् दर्शने शिवशक्त्योः, जीवेश्वरयोः च भेदाभेदः (द्वैताद्वैतम्) अङ्गीकृतः। अयं जीवेश्वरयोः भेदाभेदः न काल्पनिकः, किन्तु पारमार्थिकः एव भवति।

## १६.६.१) पशुपतिपाशस्वरूपम्

अस्मिन् वीरशैवदर्शने पशुशब्देन जीवः अभिधीयते। अयं जीवः शिवस्य अंशः, परमात्मनः शक्तिविशिष्टः च भवति इति सिद्धान्तस्य आशयः। वीरशैवदर्शने पतिः नाम परं ब्रह्म एव भवति। एकमेवाद्वितीयं सच्चिदानन्दं शिवतत्त्वमेव परं ब्रह्म इति अभिधीयते। इदमेव शिवतत्त्वं सर्वस्य सृष्टिस्थितिलयं प्रति कारणम् इति वदन्ति। शेरते अस्मिन् भुवनानि इति शिवः इति व्युत्पत्त्या सकललोकानाम् आश्रयः शिवतत्त्वम् इति गम्यते। एतदेव परशिवतत्त्वं शिवागमाः लिङ्गशब्देन व्यपदिशन्ति। परमात्मनः सच्चिदानन्दस्वरूपस्य स्फुरणमेव विमर्शशक्तिः भवति। परमात्मा विमर्शशक्त्या एव जगतः सृष्टिस्थितिलयकारणं भवति। एषा विमर्शशक्तिः सर्वेषु पदार्थेषु व्याप्ता भवति। अतः समग्रं जगत् यथा शिवमयं तथा शक्तिविशिष्टम् अपि वर्तते इति शक्तिविशिष्टाद्वैतिनः वदन्ति। कृत्स्नं जगत् एव पाशशब्देन अस्मिन् दर्शने अभिधीयते। पाशः शक्तिविशिष्टः परमात्मनः परिणामरूपश्च वर्तते। अस्मिन् विशेषाद्वैतदर्शने जगत् सत्यत्वेन अभ्युपगम्यते। सुवर्णकुण्डलम् इत्यत्र उपादानकारणस्य सुवर्णस्य तत्त्वतः नाशं विना भिन्नं कुण्डलम् उत्पद्यते। तत्र सुवर्णस्य कुण्डलरूपेण परिणामः अविकृतपरिणामः इति कथ्यते। एवमेव परमात्मा स्वशक्त्यंशेन जगतः उपादानकारणम्, स्वांशेन निमित्तकारणं च भवति। अतः वीरशैवदर्शने जगद्रूपकार्यं प्रति शिवस्य अभिन्ननिमित्तोपादानत्वम् अङ्गीकृतम्। इदं जगत् शक्तिविशिष्टब्रह्मपरिणामः। अतः जगत् अपि शक्तिविशिष्टमेव स्यात्। शक्तिरहितः न कश्चित् पदार्थः विद्यते। पाशरूपम् इदं जगत् सत्यमेव, न मिथ्या इति वीरशैवदर्शनस्य सारः।

## १६.६.२) प्रमाणस्वरूपम्

वीरशैवदर्शने त्रीणि प्रमाणानि अङ्गीकृतानि। प्रत्यक्षम् अनुमानम् आगमः चेति तानि त्रीणि प्रमाणानि। संशयविपरीतज्ञानविरहिता ज्ञानशक्तिरेव प्रत्यक्षमिति वदन्ति। दृढव्याप्तिज्ञानेन परोक्षार्थावबोधकं प्रमाणम् अनुमानम् इति उच्यते। वेदाः शैवागमाः आप्तवाक्यं च आगमप्रमाणत्वेन अङ्गीकारो भवति।

## १६.६.३) मोक्षस्वरूपम्

वीरशैवदर्शनानुसारं परं ब्रह्म लिङ्गम् अङ्गम् इति च भासते। अङ्गं नाम जीवात्मा, लिङ्गत्वेन परशिवः एव कथ्यते। लिङ्गगता शक्तिः अङ्गरूपे जीवात्मनि भक्तिरूपेण निवसति। शक्तिभक्त्योः अनयोः एकत्वमेव लिङ्गाङ्गसायुज्यम् इति व्यवह्रियते। लिङ्गाङ्गयोः शिवजीवयोः सायुज्यमेव वीरशैवदर्शने मोक्षः इति प्रोक्तम्।



## पाठगतप्रश्नाः

१. विशिष्टाद्वैतदर्शने कति प्रमाणानि अङ्गीक्रियन्ते।

२. विशिष्टाद्वैतदर्शने भक्तिः नाम का।

३. विशिष्टाद्वैतदर्शने प्रपत्तिः नाम का।

४. विशिष्टाद्वैतदर्शने त्रितयं सत्यं किम्।

५. विशिष्टाद्वैतदर्शने भगवान् कीदृशो भवति।

६. विशिष्टाद्वैतदर्शने जीवस्य कति भेदाः।

७. विशिष्टाद्वैतदर्शने प्रत्यक्षं नाम किम्।

८. द्वैताद्वैतवादस्य प्रवर्तकः कः।

९. द्वैताद्वैतवादे प्राधान्येन कति अवताराः, के च ते।

१०. विशिष्टाद्वैतदर्शने मुक्तिः नाम किम्।

११. शैवविशिष्टाद्वैतदर्शने जीवः कीदृशो भवति।

१२. वीरशैवदर्शने पतिः नाम किम्।

१३. वीरशैवदर्शने कति प्रमाणानि सन्ति।

१४. वीरशैवदर्शनस्य सारः कः।

१५. वीरशैवदर्शने परं ब्रह्म कीदृशो भवति।

१६. द्वैतवेदान्तदर्शने स्वतन्त्रः कः भवति।

१७. द्वैतवेदान्तदर्शनस्य परमार्थः कः।



## पाठसारः

विशिष्टाद्वैतवेदान्ते विशेषेण तत्त्वत्रयचिन्ता विहिता। चित् (जीवः),अचित् (प्रकृतिः/जगत्), चिदचिद्विशिष्टः ईश्वरः (ब्रह्म)चेति तत्त्वत्रयम्। तत्र शेषत्वेन चिदचित्तत्त्वयोः परमात्मनि आश्रयः। परमात्मनः चिदचित्तत्त्वयोश्च अपृथग्भूतसम्बन्धः अङ्गीक्रियते। एतत् तत्त्वत्रयमपि सत्यरूपम्।

द्वैताद्वैतदर्शने जीवः कर्ता भोक्ता नित्यः चैतन्यस्वरूपः अणुपरिमाणः ज्ञानस्वरूपः च। जीवः ब्रह्मणः अंशविशेषः इति एते अङ्गीकुर्वन्ति। जीवस्य चिद्रूपतायाः विस्मरणमेव अविद्या इति एतेषां सिद्धान्तः। द्वैताद्वैतदर्शने जीवस्य चिदात्मनि अवस्थानम् एव मुक्तिः। प्रारब्धकर्मणः भोगेन एव क्षयः भवति। जीवः मुक्त्यवस्थायामपि ब्रह्मणः अंशरूपेण तिष्ठति।



द्वैतवेदान्तदर्शने परमात्मा स्वतन्त्रः भवति। तदधीनाः जीवजडपदार्थाः अस्वतन्त्राः। एवं च जीवो वा जडप्रपञ्चो वा तत्त्वतः परमात्मनः भिद्यते। भेदः एव सत्यः इति अस्य दर्शनस्य परमार्थः। स्वतन्त्रम् अस्वतन्त्रम् इति द्विधा विभज्य द्वैतदर्शनं प्रवर्तते। स्वतन्त्रं तत्त्वं भगवान् विष्णुरेव।

शैवविशिष्टाद्वैतदर्शने शिवतत्त्वमेव परं ब्रह्म। चिदचित्प्रपञ्चाकारपरमशक्तिविशिष्टः परमेश्वरः अस्य जगतः अभिन्ननिमित्तोपादानकारणम्। चिदाकाशः परमेश्वरस्य शरीरभूतो भवति। मुक्तिदशायां परमेश्वरापन्नः नित्यः जीवः बाह्यकरणनिरपेक्षः सन् मनसा निरतिशयस्वरूपानन्दम् अनुभवति। 'अहं नित्यः निरतिशयः आनन्दस्वरूपः साक्षिस्वरूपः निष्कलङ्कः शिवः अस्मि' इत्येवं सगुणब्रह्मरूपशिवत्वप्राप्तिरेव मुक्तिः। अस्मिन् मते ज्ञानकर्मणोः समुच्चयः मोक्षं प्रति साधनम्।

वीरशैवविशिष्टाद्वैतदर्शनं प्राधान्येन पदार्थत्रयं वर्णयति। पतिः, पशुः, पाशश्चेति पदार्थाः। अस्मिन् सिद्धान्ते परं ब्रह्म एव पतिशब्दवाच्यं भवति। चिदचिद्विशिष्टः पतिः इति दर्शनस्य सारः। पशुशब्दवाच्यः जीवः शिवस्य अंशः वर्तते। शक्तिविशिष्टं जगत् एव पाशशब्देन उच्यते। तदिदं जगत् परमार्थतः सत्यम्। शिवांशः जीवः मुक्तिकाले शिवसायुज्यं प्राप्नोति इति अस्य दर्शनस्य परमतात्पर्यम्। अस्मिन् दर्शने शिवशक्त्योः, जीवेश्वरयोः च भेदाभेदः (द्वैताद्वैतम्) अङ्गीकृतः। अयं जीवेश्वरयोः भेदाभेदः न काल्पनिकः, किन्तु पारमार्थिकः एव भवति।



## पाठे अधिगताः विषयाः

- विशिष्टाद्वैतदर्शने ब्रह्म जीवः जगत् चेति त्रितयं सत्यं भवति।
- विशिष्टाद्वैतदर्शने भगवत्कृपया एव मुक्तिः भवति।
- सिद्धोपायः साध्योपायः चेति विशिष्टाद्वैतदर्शने मोक्षोपायः द्विविधः।
- ईश्वरः चिदचिद्विशिष्टः इति रामानुजदर्शनस्य मतम्।
- जगज्जीवौ परमात्मनः शरीरभूतौ इति विशिष्टाद्वैतदर्शनस्य सिद्धान्तः।
- प्रत्यक्षम् अनुमानं शब्दः चेति त्रीणि प्रमाणानि विशिष्टाद्वैतवादिनः स्वीकुर्वन्ति।
- विशिष्टाद्वैतिनः सत्ख्यातिवादिनः भवन्ति।
- द्वैताद्वैतवादे ईश्वरः स्वाभाविकगुणशक्त्यादियुक्तः सर्वज्ञः सर्वशक्तिमान् च भवति।
- द्वैताद्वैतवादे जीवस्य चिद्रूपतायाः विस्मरणमेव अविद्या।
- द्वैताद्वैतवादे जीवब्रह्मणोः भेदाभेदौ जलतरङ्गवत् स्तः।
- द्वैताद्वैतवादे प्राधान्येन अवतारत्रयं विद्यते।
- वीरशैवदर्शने अङ्गं नाम जीवात्मा, लिङ्गत्वेन परशिवः एव कथ्यते।
- पाशरूपम् इदं जगत् सत्यमेव, न मिथ्या इति वीरशैवदर्शनस्य सारः।



- वीरशैवदर्शने  वीरशैवदर्शने पतिः नाम परं ब्रह्म एव भवति।
- वीरशैवदर्शने एकमेवाद्वितीयं सच्चिदानन्दं शिवतत्त्वमेव परं ब्रह्म इति अभिधीयते।
- शैवविशिष्टाद्वैतदर्शने शिवतत्त्वमेव परं ब्रह्म।
- शैवविशिष्टाद्वैतदर्शने 'अहं नित्यः निरतिशयः आनन्दस्वरूपः साक्षिस्वरूपः निष्कलङ्कः शिवः अस्मि' इत्येवं सगुणब्रह्मरूपशिवत्वप्राप्तिरेव मुक्तिः।
- द्वैतवेदान्तदर्शने जीवो वा जडप्रपञ्चो वा तत्त्वतः परमात्मनः भिद्यते।
- द्वैतवेदान्तदर्शने भेदः एव सत्यः इति अस्य दर्शनस्य परमार्थः।



## पाठान्तप्रश्नाः

१. विशिष्टाद्वैतदर्शने मोक्षस्वरूपं किम्।

२. विशिष्टाद्वैतदर्शने प्रत्यक्षस्य स्वरूपं किम्।

३. विशिष्टाद्वैतदर्शने बन्धस्य स्वरूपं लिखतु।

४. सिद्धोपायं साध्योपायं च विशिष्टाद्वैतदर्शनदिशा व्याख्यात।

५. ईश्वरस्वरूपं विशिष्टाद्वैतदर्शनदिशा आलोच्यताम्।

६. भक्तेः स्वरूपं विशिष्टाद्वैतदर्शनदिशा प्रतिपाद्यताम्।

७. विशिष्टाद्वैतदर्शनानुसारेण शब्दप्रमाणं विवृणुत।

८. विशिष्टाद्वैतदर्शनदिशा यथार्थख्यातिम् आलोचय।

९. द्वैताद्वैतवाददिशा कति अवताराः, के च ते।

१०. द्वैताद्वैतवाददिशा अविद्या नाम का।

११. द्वैताद्वैतवाददिशा गुणावताराः के भवन्ति।

१२. द्वैताद्वैतवाददिशा भगवान् कीदृशो भवति।

१३. द्वैताद्वैतवाददिशा जीवः कीदृशो भवति।

१४. वीरशैवदर्शनदिशा प्रमाणम् आलोचय।

१५. वीरशैवदर्शनदिशा जीवस्वरूपं प्रतिपाद्यताम्।

१६. वीरशैवदर्शनदिशा पशुपतिपाशस्वरूपं वर्णयत।

१७. शैवविशिष्टाद्वैतवेदान्ते मुक्तिः नाम किम्।

१८. द्वैतवेदान्तदर्शनदिशा जीवस्वरूपं प्रतिपादयत।

१९. शैवविशिष्टाद्वैतवेदान्ते जगत्स्वरूपं किम्।

२०. द्वैतवेदान्तदर्शनदिशा मोक्षस्वरूपं वर्णयत।





## पाठगतप्रश्नानामुत्तराणि

१. प्रत्यक्षम् अनुमानं शब्दः चेति त्रीणि प्रमाणानि।

२. प्रीतिरूपा धीः भक्तिः।

३. प्रपत्तिः नाम शरणागतिः।

४. ब्रह्म जीवः जगत् चेति त्रितयं सत्यम्।

५. भगवान् चिदचिद्विशिष्टः भवति।

६. बद्धः मुक्तः नित्यः चेति जीवः त्रिविधः।

७. साक्षात्कारिप्रमाकरणं प्रत्यक्षम्।

८. द्वैताद्वैतवादस्य प्रवर्तकः निम्बार्काचार्यः।

९. गुणावतारः पुरुषावतारः लीलावतारः च इति।

१०. 'अहं नित्यः निरतिशयः आनन्दस्वरूपः साक्षिस्वरूपः निष्कलङ्कः शिवः अस्मि' इत्येवं सगुणब्रह्मरूपशिवत्वप्राप्तिरेव मुक्तिः।

११. जीवः नित्यः, अणुरूपः भवति।

१२. वीरशैवदर्शने वीरशैवदर्शने पतिः नाम परं ब्रह्म एव भवति।

१३. त्रीणि प्रमाणानि सन्ति। प्रत्यक्षानुमानागमाः चेति।

१४. पाशरूपम् इदं जगत् सत्यमेव, न मिथ्या इति वीरशैवदर्शनस्य सारः।

१५. वीरशैवदर्शने एकमेवाद्वितीयं सच्चिदानन्दं शिवतत्त्वमेव परं ब्रह्म इति अभिधीयते।

१६. द्वैतवेदान्तदर्शने स्वतन्त्रः भगवान् विष्णुरेव।

१७. ब्रह्मणः जीवस्य जडजगतः च परस्परं भेदः एव सत्यः इति अस्य द्वैतवेदान्तदर्शनस्य परमार्थः।

॥ इति षोडशः पाठः ॥

